देवराजशर्मप्रणीतम्

# अनिरुद्धचम्पूकाव्यम्

(अनिरुद्धस्य श्रीकृष्णपौत्रस्य बाणासुरपुत्र्याऽपहारितस्य प्रेमोपाख्यानम्)

टिप्पणीपरिशिष्टैः सह परिष्कर्ता सम्पादकश्च

महामहोपाध्याय
आचार्य बी.पी.टी. वागीश शास्त्री

वाग्योग-चेतनापीठम्
शिवाला, वाराणसी

देवराजशर्मप्रणीतम्

# अनिरुद्धचम्पूकाव्यम्

(अनिरुद्धस्य श्रीकृष्णपौत्रस्य बाणासुरपुत्र्याऽपहारितस्य प्रेमोपाख्यानम्)


टिप्पणीपरिशिष्टैः सह परिष्कर्ता सम्पादकश्च

महामहोपाध्याय

आचार्य बी.पी.टी. वागीश शास्त्री



वाग्योग-चेतनापीठम्

शिवाला, वाराणसी

VĀGYOGA-CHETANĀ - GRANTHAMĀLĀ
(Vol. XXXI)

Devarāja Śarmā's

# ANIRUDDHA CAMPŪKĀVYAM

(The love story of Kṛṣṇa's grandson kidnapped by a princess)




Edited & recomposed
with notes & indices
by
Mahāmahopādhyāya
**Prof. B.P.T. VAGISH SHASTRI**
Ph.D., D.Litt.
Ex-Director & Professor, Research Institute,
Sampurnanand Sanskrit University,
Varanasi.

V.S. 2067 VARANASI 2010

*Published by*
**The Secretary, Vāgyogachetanāpīṭham**
(Yogic Voice Consciousness Institute)
B. 3, 131 A, Shivala, Varanasi - 221001
Phone : (0542) 2275706; Mob : 91+9935463678
e-mail : vagyoga@satyam.net.in
website : www.vagyoga.com.;
www.en.wikipedia.org/vagish shastri &
www. angelfire.com.in.vagyoga.

"Published with the 80% financial assistance from Rashtriya Sanskrit Sansthan, (deemed university), New Delhi.



**ISBN : 81-85570-34-5**

**First edition : 2010**
**500 copies**

**Price : Rs. 173/-**

**Printer : Dee Gee Printers, Khojwan Bazar, Varanasi.**
**Mob : 91+9935408247**

वाग्योगचेतना-ग्रन्थमाला
( एकत्रिंशं पुष्पम् )

देवराजशर्मप्रणीतम्

# अनिरुद्धचम्पूकाव्यम्

( अनिरुद्धस्य श्रीकृष्णपौत्रस्य बाणासुरपुत्र्याऽपहारितस्य प्रेमोपाख्यानम् )




टिप्पणीपरिशिष्टैः सह
परिष्कर्ता सम्पादकश्च
महामहोपाध्याय
**आचार्य बी.पी.टी. वागीश शास्त्री**
पी-एच्.डी., डी.लिट्.
निदेशक आचार्यश्च, अनुसन्धानसंस्थानम् ( पू. ),
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी।

वि०सं० २०६७ वा रा ण सी ख्री. २०१०

प्रकाशकः

सचिवः,
वाग्योगचेतनापीठम्,
बी. ३/१३१ए, शिवाला, वाराणसी-२२१००१
दूरभाषः (०५४२) २२७५७०६; चल० ९९३५४६३६७८
e-mail : vagyoga@satyam.net.in
website : www.vagyoga.com.;

www.en.wikipedia.org/vagish shastri &
www. angelfire.com.in.vagyoga.

(राष्ट्रियसंस्कृतसंस्थानस्य ८०% वैत्तिकेन साहाय्येन मुद्रितम्)



ISBN : 81-85570-34-5

प्रथमसंस्करणम् : २०१०
५०० प्रतिकृतयः

मूल्यम् : १७३/-

मुद्रक : डी.जी. प्रिंटर्स, खोजवाँ बाजार, वाराणसी.
मो. ९१+९९३५४०८२४७.

## Preface

DvarakādāsaVaisṇava was the one disciple among disciples of Guru Nānaka Deva. He was Sanskrit scholar and he got longivity of 250 years (see Nānaka candrodaya mahākāvyam (21, 2008)-

sa Vaiṣṇavaḥ sārdhaśatādvayīsamā-
vayāḥ samāsāditamantrasādhanaḥ ।
abhūt samagreṇa janena vandito
gurustu tasyāsana āsta nirbhayaḥ ॥

He remained upto the time of Guru Govind Singh (1666-1708). Guru Nānaka Deva when reached Varanasi, one Brāhmaṇa of Śāṇḍilya clan had donated him one piece of the land there. On the same land Guru-dvārā was established in the area of Gurubagh, Varanasi. Pandit Devarāja Sharma was born in the same family of the Brāhmaṇa who donated the land to Guru Nānaka Deva. Pandit Raghupati was his father and the name of Sanskrit teacher was Shivalal Sharma. Devarāja Sharma was contemporary to Guru Govind Singh. He took initiation of udāsī sect from Dvārakādāsa Vaiṣṇava.

After a few years of inititation accomplishment and study became fruitful. Extraordinary prudence, genius and poetic power enhanced in him. Devarāja Sharma explained his prudential power by himself in Nānakacandrodaya :

'tatrāsid devarājaḥ parama-kavayitā dhāraṇāśaktiśāli'*(4.21)*

He used his poetical power in twenty one canto epic named 'Nānaka-candrodaya' to explain life and philosophy of Guru Nānakadeva, where he composed 3276 verses in Sanskrit. This epic was published in my chief editorship from Sampurnanand Sanskrit University during 1979.

The heart of Devarāja filled with love after the composition of this epie Nānakacandroday. Śṛṅgāra is chief among all the Rasas (Relish), He determined to draw this overflowing stream of love through a poetic work. He composed this Aniruddha campū on the basis of love between Aniruddha, the grandson of Lord Kṛṣṇa, and Uṣā the daughter of the demon Bāṇāsura. Devarāja showed here his talent to associate poetic prose with poems. Here he used two kinds of prose : utkalikāprāya and cūrṇaka. The sentence which is full of long compounded words, called utkalikāprāya. Cūrṇaka is that prose which is not ponderous with long compounds. It's speciality is the performance of samallcompounded words.

This is the first poetic work where Uṣā a princess kidnapped Aniruddha, a prince staying very far from her place. She was living in Soṇitapura (modern Tejapur) of Assam in the eastern part of India and Aniruddha was staying in Dvārakā on the western coast of the ocean. There are many examples belonging to kidnap princess by kings in Indian history, but this is the unique example where a princess kidnapped a prince.

**The source of the story of Aniruddha Campū**

Uṣā met Aniruddha in dream and she was arrested in his love. She

could not forget him even after her awakening. Day by day she was confined in depression. Her friend Chitralekhā asked its reason. After her explaination Chitralekhā drew photographs of the most famous princes. On the choice of Uṣā Chitralekhā went flying way with her yogic power to Dvārakā and having kidnapped Aniruddha presented him to Uṣā in her herem. Chitralekhā married them by Gāndharva sort. After four months Bāṇāsura became aware of the presence of Aniruddha in his daughter's herem. He arrested him after fighting. After a few months Nārada informed Lord Kṛṣṇa that Aniruddha was put in jail by Bāṇāsura. He had on him the protective hand of Koṭavī and Lord Śiva. Bāṇāsura was very proud of his one thousand arms. He had itching on them that someone should fight with him. He prayed to Śiva to fulfil this desire. Śiva blessed him somebody will come to fight with you and will defeat you.

**Marriage of Uṣā with Aniruddha**

In the war between Lord Kṛṣṇa and Bāṇāsura, Śiva helped Bāṇāsura. He was fighting with Kṛṣṇa on behalf of Bāṇāsura. Koṭavī (the nude goddess) also jumped in war on bahalf of Bāṇāsura. But after both left the ground. Lord Kṛṣṇa cut 998 arms of Bāṇāsura. Later the marriage of Aniruddha and Uṣā took place.

Kumbhāṇḍa, the minister of Baṇāsura had given hand of Uṣā to Aniruddha. The source of this story is found in Padma Purāṇa, Śiva Purāṇa and Śrīmadbhāgavata Purāṇa. Detailed explaination exists in Bhāgavāta Purāṇa as a Vaiṣṇava treaty. Aniruddha was a disciple of Vaiṣṇava Dvārakādāsa. So he choose this Purāṇa which is belonging to Kṛṣṇa and this story concerned direct to him.

**Nature of Language**

Devarāja the poet filled up poetical colours in this love story. Here Vīra Rasa is inserted in the Śṛṅgāra Rasa. He explained six seasons, many metres, alaṅkāras and Natural description in this containing nine ucchvāsa (chapters) treaty.

**The Manuscript**

I searched the manuscript of Aniruddha Campū in the Sarasvaī Bhavana library of Sampurnanand Sanskrit University. Other manuscript exists in Rajashahi library of Bangla Desh. I did not receive any reply after many correspondences. The available manuscripts letters are attractive like pearl drops. But inside it was full of mistakes. There were a lot of different readings. I attached a chapter of these at the and of this book as an appendix.

Readers may injoy reading juicy and poetical Language of the prose and poem. You may feel reading prose with delight as of poem. This treaty is equal to any great epic.

21th of June, 2010

**Vagish Shastri**

# प्ररोचना

सुरगवीकोविदो वैष्णवो द्वारकादास आसीद् गुरुनानकदेवस्य शिष्येष्वन्यतमः। तेन वित्रं चिरायुष्ट्वं सार्धद्विशतवार्षिकम् (द्र. नानकचन्द्रोदयमहाकाव्यस्य पद्यं २१,२०८)। गुरुगोविन्दसिंहस्य (१६६६-१७०८) समयं यावज्जीवन्नास्ते स्म सः। वाराणसीमुपेताय गुरुनानकदेवाय समार्पिपच्छाण्डिल्यगोत्रः कश्चित् सरयूपारीणो विप्रो भूमिखण्डमेकम्। तस्मिन्नेव भूभागे वाराणस्यां गुरुबागक्षेत्रे स्थापितमभूद् गुरुद्वारम्। तस्मिन्नेव भूमिदायिनि विप्रकुले जनिं लेभे तावदनिरुद्धचम्पूकाव्यप्रणेता महाकविः पण्डितदेवराजत्रिपाठिशर्मा। अस्य पितुराख्यासीत् पण्डितरघुपतित्रिपाठीति। विद्यागुरोश्च नामधेयमभूत् पण्डितशिवलालशर्मेति। एष आसीत् समकालिको गुरुगोविन्दसिंहस्य। एष दीक्षितः शिष्य आसीदुदासिमते वैष्णवस्य द्वारकादासस्य। कतिचिद्धायनेषु सम्पद्यमानायां साधनायां संवृत्ते चाध्ययने दीक्षा प्रतिफलिता। एतत्परिणामत एतस्मिन्ननतिसाधारणी मेधा, प्रतिभा काव्यशक्तिश्चोन्मिषिता। तेन स्वत एव तदीयमेधाशक्तिर्वर्णिता नानकचन्द्रोदयमहाकाव्ये—

***'तत्रासीद् देवराजः परमकवयिता धारणाशक्तिशाली' (४,२१) इति।***

तेन तदीया काव्यशक्तिः प्रयुक्ता गुरुनानकदेवस्य चरितनिध्याने, तद्दर्शनचित्रणे चैकविंशतिसर्गाणां महाकाव्यस्य निबन्धनेन यत्र षट्सप्तत्युत्तरशतद्वयोपरि सहस्त्रत्रयसंख्याकानि पद्यान्यगुम्फ्यन्त। एतत्काव्यप्रकाशनं समजनि मन्मुख्यसम्पादकत्वे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९७७ तमे ख्रीस्ताब्दे।

महाकाव्यस्यास्य संग्रथनोत्तरं महाकवेरस्य हृदयं संवृत्तं प्रेमसम्परिप्लुतम्। शृङ्गाररसः शीर्षण्यतमो निखिलेष्वेव रसेषु। उन्मिषितस्य प्रेम्णो धारेयं तेन प्रवाहयितुं संकल्पिता कृष्णचरितगर्भितेन काव्यमुखेन। श्रीकृष्णपौत्रस्यानिरुद्धस्य बाणासुरपुत्र्या साकं सञ्जातं प्रेमानुरागं विषयीकृत्य प्रणीतमिदमनिरुद्धचम्पूकाव्यम्। इह तेन खलु प्रदर्शिता नैपुणी पद्यकाव्येन सह गद्यकाव्यस्यापि। इह द्विविधं प्रयुक्तं गद्यम्- १. उत्कलिकाप्रायम्, २. चूर्णकं चेति। यद् वाक्यं दीर्घसमासवत्या पदावल्या संजुष्टं भवति तदाख्यायते तावदुत्कलिकाप्रायम्। चूर्णकं तावच्चूर्णवद् विशीर्णं दीर्घसमासविधुरं च भवति। अल्पसमासवत्पदावलीसम्पन्नमेवेदं विशिष्यते।

उषापहारितानिरुद्धप्रेमकथासंवलितमिदमिदम्प्रथमतया संग्रथितं चम्पूकाव्यमास्ते यत्र कयाचिद् राजपुत्र्या दविष्ठोऽभिरूपो युवा भवेदपहारितः। प्रतीच्यामब्धितटवर्तिन्यां द्वारकापुर्यामासीदावासस्तावदनिरुद्धस्य। उषायास्तु वसतिरासीत् प्राच्यामुपचीनं शोणितपुरे। इदमद्य तेजपुरनाम्ना सम्प्रथते। अधिभारतमैतिह्ये भूपतिभिरपहृतानां राजपुत्रीणामितिवृत्तं तु समासाद्यते। परमिदमप्रतिमं निदर्शनं यत्र कयाचिद् युवत्या युवाऽपहारितो भवेत्।

यद्यप्येतस्या अनिरुद्धचम्पूरचनायाः प्रागुषारागोदयाख्या नाटिका रुद्रदेवप्रणीताऽभूत्, तथापि ततोऽपहरणघटनाऽपनुन्नेति तत्रापहरणरूपस्य प्रमुखाकर्षणस्यैव वैधुर्यान्नास्ति सामञ्जस्यम्। एतदतिरिच्य तत्र समलङ्कृतं गद्यपद्यमयं काव्यमपि न प्रदर्शितम्। इयमपि मदीये मुख्यसम्पादकत्वे प्रकाशिता सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९७९ तमे ख्रीस्ताब्दे।

## किमिदं चम्पूकाव्यम्?

समलङ्कृतं बन्धयुतं मिश्रकाव्यस्यानन्यं रूपं तावच्चम्पूकाव्यं निगद्यते। बन्धविहीनमनलङ्कृतं गद्यपद्यमयं काव्यं मिश्रकाव्यमेव भवितुमर्हति न तु चम्पूकाव्यम्। गद्यपद्यमिश्रितरचनाप्रवृत्तिरैतरेयब्राह्मण उपनिषत्सु महाभारते पुराणेषु च लक्ष्यते। प्रथमशताब्द्यां विरचितस्यावदानशतकस्यापि प्रवृत्तिर्गद्यपद्यमय्यां शैल्यामुपलभ्यते। दिव्यावदानस्यार्यसूरप्रणीताया जातकमालायाश्चापि रचनासरणिर्गद्यपद्यगर्भितचम्पूकाव्यवल्लक्ष्यते। गद्यपद्यात्मिकायामाख्यानशैल्यां सन्दृब्धा जातकमाला चकास्ति काव्यगुणगर्भा। शैली च तदीया प्रसादगुणसमन्विता। आर्यसूरो ह्यग्रगण्यो मानवहृदयमभिद्रावकाणां भावसन्तानानां वितानैः। हरिषेणप्रणीतायां समुद्रगुप्तप्रशस्तौ (३६० ख्री.) गद्यपद्यात्मकमिश्रशैल्याः समलङ्कृतरूपं शक्यते द्रष्टुम्। प्रशस्तिरेषा चम्पूकाव्यशैल्या आद्यमन्यतमं च रूपं प्रस्तौति।

गद्यपद्यमय्यां मिश्रितशैल्यामभिव्यक्तौ सत्यामपि रूपकमाहोस्विन्नाटकं तावद् दृश्यकाव्यमेव वरीवर्ति। तस्माच्छ्रव्यकाव्येष्वन्यतममुत्कृष्टतमं चाङ्गं प्रबन्धात्मकस्य मिश्रकाव्यस्य चम्पूकाव्यमेव शोभते। समुद्रगुप्तप्रशस्तेः प्रभृति दशमशताब्दं यावदुत्कीर्णानां शिलालेखानां प्रमुखं वैशिष्ट्यमस्ति तदीयं गद्यबाहुल्यम्। वस्तुतस्तु गद्ये काव्यत्वसंनिवेश एव कवीनां निकषोपलः— 'गद्यं कवीनां निकषं वदन्ति' इति। काव्ये मिश्रशैलीस्वीकरणस्य लक्ष्यमस्ति गद्यकाव्यस्यार्थगौरवं पद्यकाव्यस्य च रागमयतामेकत्र संनिवेश्य परिवेषणम्। समलङ्कृतगद्यसम्बन्धेन पद्यसूक्तिर्वाद्यसंयोगेन गीतिरिवातितरां हृदयग्राहिणी चमत्कारिणी च सम्पद्यते। तत्र सुधामाध्वीकयो रसो यौगपद्येन भाव्यते।

यद्यप्याचार्यदण्डिनः कालावधौ (६००-७०० ख्री.) 'गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते' इति तदुक्त्या सिध्यति चम्पूकाव्यानामस्तित्वम्, तथापि तानि तदनेहसि विरचितानि नोपलभ्यन्ते स्म। चम्पूनां या सार्धशतद्वयी तन्मध्ये त्रिविक्रमभट्टेन (९१५ ई.) विरचितस्य नलचम्पूकाव्यस्य प्राथम्यं साहित्यिकसौष्ठवदृशा च प्राधान्यं विद्यते। प्रायशस्तत्रत्याःकवयः सन्ति दाक्षिणात्याः। क्वचिन्नु स्याद् दाक्षिणात्यसंस्कृतिस्रोतस्कत्वं चम्पूशब्दस्येति प्रतीयते। औणादिकेन प्रत्ययेन निष्पन्नाऽस्य व्युत्पत्तिः कृत्रिमा स्वारस्यविधुरा च प्रतिभाति।

गन्धरूपस्य गद्यस्य रागरूपस्य च पद्यस्य करम्बितेन प्रणीयन्ते चम्पूकाव्यानि। यद् गद्यं भवेदनुप्रासाद्यलङ्कारसमासबहुलं पद्यवद्रुचिरं च तदभिधीयते वृत्तकं वृत्तगन्धि वा। स्वर्णचम्पकप्रसूनानि भवन्ति गन्धरागपरिमण्डितानि। तानि भवन्ति तावदीषत्पीतरागरुचीनि तीव्रगन्धीनि च। एतत्प्रसूनपादपाः प्रायेण प्राप्यन्ते दक्षिणभारते। चम्पूशब्दार्थस्वारस्यं स्वर्णचम्पकप्रसूने निहितमिति सर्वथा युक्तियुक्तं प्रतीयते। बिल्हणकविना चिरं भावयित्वा स्वप्रेयस्या देहश्रीसौष्ठवोपमा 'चम्पकदामगौरी' इत्यभिधाय चम्पकप्रसूनेन सममुपन्यस्ता यतोहि चम्पकपुष्पं तस्या रागं रूपं चोभयप्रकाशनस्य सामर्थ्यं बिभर्ति।

## चम्पूकाव्यस्य कथा तत्स्रोतश्च

अनिरुद्ध आसीद् योगेश्वरकृष्णस्य पौत्रः प्रद्युम्नस्य च सूनुः। स स्वजनकेन पितामहेन च साकं भारतात् प्रतीचीनसमुद्रतटवर्तिन्यां द्वारकापुर्यां न्युवास। अद्यापि वेटद्वारका तावदधिसमुद्रमवस्थिता विद्योतते। तत्रापि श्रीकृष्णोऽध्युवास। भारताद् दवीयस्यां प्राच्यामवस्थिते शोणितपुरे बाणासुरतनया तस्थौ। स्वप्ने तया सार्धमनिरुद्धः संगतः। उभयोः प्रीतिरागः संवृत्तः। प्रगे प्रबुद्धायां सत्यामपि सा तं न विसस्मार। अन्वहं तामौदासीन्यमाक्रामत्। तदीयसख्या चित्रलेखया पृष्टायां सत्यां व्याज्ञीत्

साऽऽत्मनीनां व्यथाम्। चित्रलेखया सुप्रसिद्धानां राजकुमाराणां चित्राणि दर्शितानि। तन्मध्ये पर्यचिनोदनिरुद्धमुषा।

योगविद्यानदीष्णया चित्रलेखयाऽनिरुद्धमपहृत्यासावुषाशयनागारं प्रापित:। तेन गान्धर्वविवाहेन च परिणीताऽसौ। कालान्तरेण बाणासुरोऽवबुद्धोपस्थितिमनुरुद्धस्य तावदुषाशयनागारे। अनिरुद्धो निरुद्धस्तेन मृधे। मासचतुष्टयानन्तरं नारदेन बोधित: कृष्णो यदनिरुद्धो निरुद्ध: शोणितपुरे बाणासुरेण तदा स ससैन्यदलमाचक्राम शोणितपुरम्। कोटवी ररक्ष बाणासुरम्। बाणासुरपक्षत: शिवोऽपि युयुधे कृष्णेन। यदा बाणासुरो जगर्व स्वबाहुबलेऽचकथच्चासौ शिवं यदहमप्रतिमोऽस्मि, न कोऽपि युयुत्सते, प्रतीक्षे कश्चन युध्येत मया सममिति श्रुत्वा शिवो व्याजहार प्रतीक्षस्व सत्वरमेव कश्चिदायास्यति पराजेतुं त्वामिति। अन्ततो युध्यमानस्य श्रीकृष्णेन तस्य हस्तद्वयं विहाय लूना अन्ये समे करा:। ससमारम्भं समजनि परिणय उषाया अनिरुद्धेन सत्रा। श्रीकृष्णस्तावानिनाय द्वारकापुरीं सभाजनपुरस्सरम्।

अनिरुद्धस्य कयाचिद् राजकुमार्याऽपहरणस्येयं कथाऽपूर्वा चाद्वितीया संस्कृतसाहित्ये। तत्र पुरुषै राजकुमारीणामपहरणस्य भूयांसि निदर्शनानि समुपलभ्यन्ते। परं कयाचिद् युवत्या यूनोऽपहरणस्येयं कथाऽनन्यैव राजते। अनिरुद्धस्यापहृते: प्राक् तज्जनकोऽप्यपहृत आसीच्छम्बरेण प्रद्युम्न:। अस्या उषाऽनिरुद्धकथाया उत्स: पद्मपुराणे (उ. २५०), शिवपुराणे (रुद्र. ५१-५९), श्रीमद्भागवतमहापुराणे च विद्यते। देवराजशर्मणा प्रणीतस्यास्य चम्पूकाव्यस्य कथानकं तु श्रीमद्भागवतपुराणमवलम्बते। वैष्णवी परम्पराऽऽसीद् देवराजस्येति तेनेदमद्वितीयमुपाख्यानमाधृत्य चम्पूकाव्यमेतत् सज्जितं विविधै रङ्गै:।

**अनिरुद्धचम्प्वां प्रयुक्ता रसा अलङ्काराश्च**

सुस्पष्टा कथानकेन तावदस्या: शृङ्गाररसगर्भिता वीररसता। शृङ्गारप्रभृति रसानामिह सूत्तमतया विहित: प्रयोग:। पञ्चम उच्छ्वासे शृङ्गाररसस्फीतं व्यधायि वर्णनम्। इह वसन्तर्तुरुद्दीपक: सिध्यति— 'मुग्धं चूतमरन्दमत्तमधुप: कालश्च कोऽप्यागमत्' (५,२८)। वसन्तवर्णनं ४,१५८ त: २१९ तमं पद्यं यावत्, शिशिर-वसन्तवर्णनं ४,२०२ त: २०५ पर्यन्तम्, भव्यवसन्तवर्णनच्छटा ३,९० त: १२९ तमं पद्यं यावत् दर्शनीया। 'चूतचम्पकसरोजकेसरैरर्चयन्ति मदनं मृगीदृश:' (३,११३)। समग्रे तृतीय उच्छ्वासे मृगयाविनोदप्रसङ्गे वसन्तो बाढं संगुम्फित:। चतुर्थ उच्छ्वासे रतिरसो निर्वर्णित:। मदनसमरशूरा: (४,४५), 'मन्मथ: प्रियसमागमशंसी' (४,४७), 'व्रीडया दरधृतां नववध्वा: कञ्चुकीं कुचगतां विचकर्ष' (४,८४), 'नवाङ्गनानीविमपाहरत्सु' (७,४६), 'नूपुरैश्चिरमकारि समन्तात् पञ्चबाणविजयस्तुतिघोष:' (४,९३)।

शृङ्गारवर्णनम् (९,५४-६७), स्मरसंगर: (५,७१); 'दिगम्बरीभूतबृहन्नितम्बा शातोदरी कामपि कान्तिमाप' (५,९८), 'पादयोस्तव पतामि किङ्करी' (५,९९) 'सा जजल्प मधुरं मृगेक्षणा। भूय एव ववृधे तथा तथा कामिन: सुरतरागसम्भ्रम: (५,१०३), रोमाञ्चरम्या पटु सीच्चकार' (५,१०४), रतोत्सवे (५,१०४)। रतान्तक्षीबता- 'नयने मत्तचकोरचेष्टिते' (५,१०७)। परिरम्भणम्- 'परिरभ्य दृढं प्रियो भुजाभ्याम्' (५,१०८)। त्वदृते न शक्नोमि जीवितुम्— 'क्व साम्प्रतं यास्यसि न त्वया विना क्षणेऽपि जीवामि यत: सुमध्यमे' (५,१०९)। सुरतप्रबन्ध:-

'उद्वेलरागरसयोः पुनरेव यूनोरासीदहो विविधबन्धविधानरम्यः। प्रत्यग्रवत् प्रियतरः सुरतप्रबन्धः' (५,१११)। विपरीतरतिः- 'स्वेदसिक्ततनुराकुलालका सा रराज यदुवीरवक्षसि' (५,११३)। रतान्तक्रीडा- 'व्रीडैव प्रसभमुपागता रतान्ते' (५,११४)। 'नवाङ्गनानीविमपाहरत्सु' (७,४६)।

अनिरुद्ध उषाया वेणीं बबन्ध, कपोलयोः पत्राङ्कनम्, चरणयोर्लाक्षारसम्, स्तनयोश्च सुगन्धिलेपं योजयामास—

*बबन्ध वेणीं नवबन्धबन्धुरां*
*लिलेख पत्राणि कपोलयोः कृती।*
*उरोजयोः स्थासकसम्पदं व्यधाद्*
*विचित्रलाक्षारसरञ्जनं पदोः।।५,११८।*

अनिरुद्धेन तावदुषायाः सर्वाण्यङ्गान्याभूषणैः सज्जीकृत्य समुदीरितम्- 'देहि मे चुम्बनं प्रिये' इति—

*विभूष्य सर्वावयवान् विभूषणै-*
*स्तमालपत्रं विरचय्य कौङ्कुमम्।*
*प्रयच्छ मे चुम्बनमम्बुजेक्षणे*
*पणे प्रहस्येति चुचुम्ब स प्रियाम्।।५,११९।।*

अनिरुद्धवक्षस्यलक्तकचिह्नमवलोक्यासावुपहसित उषासखीभिः (५,१२१); पर्यङ्के विश्राम्य-तोर्वार्तां च कुर्वतोः क्षपाच्छन्ना (५,१२०)। हल्लीसकनृत्यवर्णनम् (५,११५), विविधक्रीडाभी रमणम् (११५ पृ.)। मिथो मुखविलोकने क्षणान्तरमप्यसह्यमभवत् (५,१२४)। ५,२३ तः ५३ तमं पद्यं यावदुषाया नखशिखान्तप्रशंसाया वर्णनम्। कर्णारुन्तुदकोकिलाकलकलः कालः कथं यास्यति (४,१८५)। उषायाः प्रणयनिवेदनम् (४,२००-२०१), प्रणयविनयरम्यं वावदूकावभाणम् (४,२२९)। आकस्मिकोष्मणारम्यं कान्तायाः स्तनमण्डलम् (९,११०) कालोऽयं भोगिवल्लभः (९,११२), 'नामुञ्चन् कृपणा इवार्यमभिकाः कान्तास्तनं तन्वपि (९,११३)। राजकुमार्या अङ्गप्रत्यङ्गं शृङ्गारिकं वर्णनम्- 'स्मरराजधानी' (४,१२३)।

**नखशिखान्तवर्णनाम्**

स्वापे मिथो दर्शनं प्रीतिश्चोभयोरुषानिरुद्धयोः (१६४ पृ.)। गान्धर्वविधिना विवाहोत्तरं रमणम् (१६४ पृ.)। गान्धर्वविवाह उषायाः पाणिरनिरुद्धस्य हस्ते ग्राहितश्चन्द्रलेखया (१०३ पृ.)— दत्ता भूयात् ते सहचरी प्रीतिपात्रं चिराय (५,२१)। ५,२३ पद्यात् प्रभृति ५३ पद्यानि यावदुषाया नखशिखान्तसौन्दर्यवर्णना विहिता। तदीयस्य मुखस्य, कबर्याः, अलकावल्या; मुक्तावल्याः, वेण्याः, नासामौक्तिकस्य, ताटङ्कस्य, नेत्रद्वयस्य, कटाक्षस्य, कृताञ्जननयनयोः, कुचयोः, कपोलयोः, पत्राङ्गुलीनाम्, करयोः, माणिक्यमय्याः काञ्च्याः, मालायाः, नखानाम्, अलक्तकस्य, अधरीयनैसर्गिक-लौहित्यस्य समजनि रुचिरा वर्णना।

**वियोगवर्णनम**

**वियोगिनीदशा–**

*किञ्च स्विन्नतनुः सरोरुहमुखी गेहं मुहुर्गच्छति (४,१८८)।*

*चलति मलयमारुते शिव शिव सा परिवेपते लतेव (४,१८९)।*
*नयनगलितवारिसारिणीभिः (४,१९४)।*

**वियोगे स्मरणम्–**

*आशासु भाति परितो दिवि दृश्यते च*
*स्वप्नेऽपि सा स्फुरति तिष्ठति जागरेऽपि।*
*धर्तुं मया प्रवितते बत बाहुपाशे*
*न ज्ञायते शशिमुखी क्व तिरोदधाति।।४,२०७।*

*अनिशं मनसि स्थितिं विधत्ते*
*सततं तिष्ठति चक्षुषोर्मृगाक्षी।*
*अपि दृश्यत एव दिक्षु नित्यं*
*तदियं काचन मन्मथस्य सभा।।४,२०८।*

वियोगिनां वासन्तिकं निशायापनं महते कष्टाय जायते—

*'नीयन्ते न वियोगिभिः कथमहो हा हन्त चैत्रक्षपाः' (३,१२७)।*

वियोगिनां सर्वं विपरीतमिवाभाति—

*दृष्टा मोहमहौषधिर्यदवधि स्वप्ने मयाऽजानता*
*कन्दर्पस्य ततो मनागपि मनः स्थैर्यं न धत्ते क्वचित्।*
*चन्द्रः कालति चन्दनद्रवरसो हा हा हलत्यङ्के*
*माला व्यालति चन्दनाचलभवो मन्दानिलो ज्वालति।।४,२१०।*

*सौधोऽचलीभवति चन्दनपङ्किलोऽयं*
*दावानलीभवति पल्लविनी च शय्या।*
*लोको मृगीभवति भाविनि तां विना मे*
*मन्वन्तरीभवति च त्रुटिरार्तिभाजः।।४,२११।*

पद्ययोरनयोश्च्विप्रत्ययान्तप्रयोगो दर्शनीयः

**पुटपाकभावः**

*सम्भावितस्य मम धैर्यधनस्य नित्यं*
*तापः कथं बहिरुपैतु वचोभिरेषः।*
*अन्तः प्रसर्पयति तत् कलयत्यमुष्मिन्*
*दीप्ते मदीयहृदयं पुटपाकभावम्।।४,२१४।*

**विरहवारिधिः**

*वसति कुत्र सरोरुहलोचना नयतु को नु तदन्तिकमद्य माम्।*
*मयि विचिन्तयतीति विचेतसि प्रकटितासि कुतश्चन वेधसा।।४,२१६।*
*स्वागतासि नियतं करणीये वेधसस्त्विह मूर्तिमतीच्छा।*
*मज्जतो विरहवारिनिधौ मे हस्तधारणमतः कुरु भद्रे।।४,२१७।*

**वीररसः**

मया साकं कोऽपि योद्धुं समुद्यतो भवेदिति बाणासुरः स्वसदृशप्रतियोद्धुरन्वेषणे चिराय प्रयासनिरतः समतिष्ठत। सहस्रभुजानां कण्डूमसौ समरद्वाराऽपनुनुत्सति स्म। स शिवं युद्धाभिलाषपरिपूर्तिमयाचत। 'युद्धाभिलाषपूर्तिस्तेऽचिरं भूयात्' इति महेशाषिसाऽसौ प्रासीदत्तमाम् (६,१८३ पद्यानन्तरवर्ति गद्यम्)। ततो युद्धमहोत्सवस्य वर्णना (१६३ पृ.)। वीररसस्य किञ्चिन्निदर्शनम्—

***'दैत्यानीकमचूर्णयच्चटचटच्चुर्यत्करोटिक्षणात्' (६,१८७)***

वीररसस्य भव्यं वर्णनं ५,१५७ तः १६५ पद्यपर्यन्तम्, पुनश्च १७२ तः १८७ पद्यपर्यन्तं दृश्यते। बीभत्सकरुणादयो रसा अपि तत्रैव संनिविष्टाः सन्ति।

**ऋतुवर्णनम्**

निदाघवर्णनं ५,१२५ तः १४७ पद्यपर्यन्तम्, वर्षर्तुवर्णनम् ५,१५१ तः १५४ पद्यपर्यन्तम्, पुनश्च २४१ तः २७० पद्यपर्यन्तमभूत्। इह मयूरचातकेन्द्रगोपादीनां हृदयावर्जकं वर्णनमभूत्। वर्षर्तौ विरहिणीदशाचित्रमालिखितम् (५,२६७-२६९)- 'वियोगिनी कथय कथं न जीवेत् सा' (५,२६८)। शरद्वर्णनम् (६,१९७-२१८)- 'अकलयत् स्वच्छां श्रियं शारदीम्' (६,१९८); शुद्धाम्बरा स्त्रीव ऋतोरपाये (६,१९९)। भव्यं वसन्तनिरूपणम् ३,९० तः १२९ पद्यपर्यन्तम्।सकले तृतीय उच्छ्वासे मृगयाविनोदप्रसङ्गे वसन्तवर्णनमभूत्। तच्च ४,१८५ तः २१९ पर्यन्तमपि जातम्। शिशिरवसन्तौ वर्णितौ ४,२०२-२०५ पर्यन्तम्। मध्ये हेमन्तर्तुरपि निर्वर्णितः (९,१०९,९)।

अस्मिन् प्रकृतिचित्रणे बकुल-कुरबक-तिलक-मधूक-चम्पक-रसाल-प्रियाल-शेफालिका-स्थलपद्मप्रभृतीनां विविधानां पादपानां चित्रणं संजातम्। अशोकपादपस्य संनिधौ सुभ्रुवां पादाघातप्रदानं साधीयश्चित्रितम्।

**अलङ्काराः**

पद्यान्यतिरिच्य गद्यमपि समलङ्कृत्य सुसज्जितमेतस्मिन्ननिरुद्धचम्पूकाव्ये। अस्मिन्नुपमाऽनुप्रासरूपकयमक-परिसंख्या-विरोधाभासादीनां विकीर्णोऽस्ति मञ्जिमा। इह द्वित्रनिदर्शनैः कवेः काव्यकलापरीक्षा पर्याप्ता स्यात् स्थालीपुलाकन्यायेन। यथा कृष्णपक्षशशाङ्कः प्रत्यहं क्षीणतामुपैति तथैव दिने दिने विरहिण्या नायिकाया देहयष्टिरपि कार्श्यं भजते- 'बभूव शुक्लेतरपक्षसम्भवा शशाङ्कलेखेव कृशा दिने दिने (४,१६९), 'तद् गृहं शब्दभूयिष्ठं शब्दशास्त्रमिवाभवत्' (२,२०); 'कालस्य दन्ता इव दुर्निवाराः' (८,३), 'कटाक्षलेखा इव सिन्धुयोषिताम्' (६,२१४); 'वाराङ्गनानूपुरशिञ्जितेन च्छात्रा इवाभ्यासपरा गृहा ये' (६,१३१); 'तदङ्के पारितथ्येव शोभस्व वरवर्णिनि' (४,१७१); 'रक्ताम्बरा प्रव्रजितेव दूती सन्ध्यावधूनामभिसारशैघ्र्यम्' (४,१२)। २३६-३७ पृष्ठाभ्यामखिलं गद्यमुपमालङ्कारभूषितम्।

**इदानीं दृश्यतां गद्ये परिसंख्यालङ्कारनिदर्शनम्–**

'वृषमवितुमवतीर्णोऽपि वृषं जघान' इत आरभ्य 'आरोहन् प्रकृतयो नागं नागम् (४,५ पृ.)

इत्यन्तं यावन्निखिले वाक्ये प्रश्नराहित्येऽपि निषेधेन तदितरनिराकरणाच्छाब्दी परिसंख्या नामालङ्कारः संघटितो जायते।

**आर्थी परिसंख्या नामालङ्कारस्तावदिदानीं निदर्श्यते–**

तस्य केशेष्वेव मालिन्यं न चरितेषु, भ्रुवोरेव कौटिल्यं न मनसि, रङ्ग एवातङ्को नाङ्गे, मध्य एव तनुता न यशसि, मतङ्गजेष्वेवावग्रहो न देशेषु (३४ पृ.)। शाब्दिकेष्वेव परापवादचर्चा (१७५)। 'यत्र चापशब्दो रणेषु न वैयाकरणेषु' (१७६ पृ.)। 'यत्र चारित्रक्षेपो नौकासु न कुलकामिनीषु' (१७६ पृ.)। 'जनस्तापसहितो न तापसहितः (१७६ पृ.) इत्यादिष्वनेकस्थलेषु देवराजस्य स्वोपज्ञता लक्ष्यते। नैतानि पूर्ववर्तिभ्यश्चम्पूकाव्येभ्यो गद्यकाव्येभ्यो वाऽनुकृतानि। अनुप्रासस्यापीहच्छटा विलोक्यते।

**संलक्ष्यतामिवशब्दस्य पौनर्वृत्त्यं गद्ये–**

स च खर्व इव विनयेन प्रांशुरिव प्रतापेन, स्मित इव विवेकेन, मृदुरिव सौजन्येन, जड इव गाम्भीर्येणोन्मत्त इव वात्सल्येनाक्रान्त इव चौर्येण' (२,७४ पद्योत्तरं गद्यम्)।

ऐतिह्यमयीनामुपमानामनेकत्र दर्शनं भवति। यथा- 'वाग्मी वाचस्पतिरिव' (६,६९), 'अद्वैतवाद इव' (५,१५३), 'मैनाक इवाम्बुराशौ' (५,१७५), 'हरनेत्रेऽग्निरिव' इत्यादि।

**दशावतारेषु श्लेषसंकीर्णा तावदार्थी परिसंख्या स्वद्यताम्–**

यश्च मीन इव धृताखिलश्रुतिः, कूर्म इव सहसा मन्दराधाररसोल्लासः, वाराह इवोद्धृतगोत्रः, नृसिंह इव प्रणतप्रह्लादवर्धनः, वामन इव दर्शितविक्रमः, राम इवोन्मूलितार्जुनः, दाशरथिरिव सुमित्रानन्दनानुरक्तः, बलदेव इव धेनुकान्तकरः, बुद्ध इव याज्ञिकावमानक्षमः, कल्किरिव यवननाशकृतक्रमः (४ पृष्ठे)।

**यमकालङ्कारस्त्वनेकत्र प्रयुक्तो राजते–**

*अन्ते वृष्टः फेरवाणां रवाणां*
*पद्यां प्राप्तो यो नदीनां न दीनाम्।*
*दृष्टिं कृत्वा रूक्षतारां क्षतारां*
*द्वीपी तृप्तो मारयेतं दयेतम्।।३,४१।*
*कामकाण्डे नवेऽपि तां*
*कामकाण्डेन वेपिताम्।।९,११५।*

**अन्यान्यपि निदर्शनानि-**

'स्मरयशोरयशोधितभूतलम्' (९,११७); 'उपवनं पवनं बुबुधे हरिः' (९,११९);
'नहि मतो हिमतो मदकृत्परः' (९,११९); 'मृगमदोऽगमदोज इवातनो;' (९,१२०);
'प्रमदया मदयाचितचुम्बनः' (९,१२१); 'न सुरयासुरयादनुरक्तया' (९,१२१);
प्रियतमोयतमोऽहमचुम्ब्यत' (९,१२१); 'स्तम्बेरमा रमाभर्तुः' (९,१२४); 'नरो दयिता न रोदयिता' (१०६ पृ.)।

**विरोधाभासः**

*त्वं दीनबन्धुश्च न दीनबन्धुः*
*नाम्नाऽसि कृष्णो यशसा सितोऽसि।।६,१६७।*

द्वारवत्यपि रिपूणामद्वारवती (९३ पृ.)। पराङ्मुखत्वेऽपि न सम्मुखत्वम् (४,१५१)।

**एकावल्यलङ्कारः**

वक्ष्यमाणपद्य एकावल्यलङ्कारः प्रयुक्तो देवराजेन। किन्तु स स्पष्टतो भट्टिकाव्यस्य 'न तज्जलं यत्र सुचारुपङ्कजम्' (२,१९) इत्यनुकृत्या संदृब्धः—

*न तद् वनं यत्र न पुष्पितो द्रुमो*
*न स द्रुमो यत्र न मत्तकोकिलः।*
*न कोकिलः सोद्गतपञ्चमो न यो*
*न पञ्चमः सोऽपि हरेन्न यो मनः।।३,१२०।*

**छन्दोमञ्जूषा**

छन्दस्स्वनतिसाधारणग्रहो देवराजस्य। अस्मिन्ननिरुद्धचम्पूकाव्ये सम्भूय १६४३ पद्यानि संग्रथितानि तेन। तेषु षट्त्रिंशत्तोऽधिकानिच्छन्दांसि प्रायुङ्क्तासौ— १. अनुष्टुप्, २. वंशस्थविलम्, ३. इन्द्रवज्रा, ४. उपेन्द्रवज्रा, ५. उपजातिः, ६. विद्युन्माला, ७. रथोद्धता, ८. स्रग्विणी, ९. प्रमाणिका, १० मालिनी, ११. शालिनी, १२. वसन्ततिलका, १३. शिखरिणी, १४. हरिणी, १५. स्वागता, १६. प्रमिताक्षरा, १७. इन्द्रवंशा, १८. मत्तमयूरी, १९. प्रहर्षिणी, २०. मञ्जुभाषिणी, २१. पञ्चचामरम्, २२. पृथ्वी, २३. रुचिरा, २४. स्रग्धरा, २५, मन्दाक्रान्ता, २६. शार्दूलविक्रीडितम्, २७. जलोद्धतगतिः, २८. नर्दटक, २९. माणवक, ३०. द्रुतविलम्बितम्, ३१. तोटक, ३२. सुन्दरीप्रभृतीनि। इतोऽप्यधिकानि विषमवृत्तार्धसमवृत्तजात्यादीनिच्छन्दांसि प्रयुक्तानि। क्वचिच्छन्दोभङ्गोऽपि यथा 'सहस्रदृशाम्' (५,१६०)।

**लोकदृष्टिः**

कविदृशा किमप्यलक्षितं नास्ते— 'कवयः किं न पश्यन्ति' इत्युक्तेः। कविर्बहुश्रुतो लोकद्रष्टा, बहुशास्त्रज्ञः, गुणदोषविवेचकश्च भवति। विश्वसृजो निखिलसृष्टिज्ञानं कविना कृतं स्यात्। यत्किञ्चिदपि लोके दृश्यते, सूक्ष्मेक्षिकया तदभिज्ञता बाढं लम्भनीया कविना। नैसर्गिकाणि दृश्यानि स्वत एव साधीयो निरीक्षणीयानि। प्राणिनां स्वभावमपि परिचिनुयादसौ। कविरनूनकैः शास्त्रैरखिलाभिर्विद्याभिः सर्वाभिःकलाभिश्च परिचितः स्यादिति निदेशः क्षेमेन्द्रस्य। देवराजस्य चम्प्वामस्यामिदमीयानि सकलानि लक्षणानि दृश्यन्ते। अस्यां शब्दनैर्मल्यमर्थनैर्मल्यं रसवैमल्यं चेति त्रय एव गुणा भासन्ते। चम्प्वामस्यां शबरगृहाणां (३,८०), पर्णशालानां (३,८१), आश्रमाणां (३,८२), तपःप्रभावस्य यथायथं वर्णनं समुपलभ्यते। सूक्ष्मेक्षिकया वन्यकन्दानां तिन्दुकफलादीनां (३,८२) च निरीक्षणं व्यधायि देवराजेन। इह द्राविडचोलाङ्गनानां स्वभावः कीदृशो भवतीति सूचितम्। लुण्टाका दक्षिणात्याः (३,९०), कावेरीसुहृदः, लाटलुटिताः, कार्णाटकान्ताः (३,९१) इत्येतादृशवर्णनेन ज्ञायते यत् कविना विविधदेशेषु भ्राम्यता लोकदृष्टिरासीत् समासादिता। देवराजो न व्यस्मार्षीन्नागरिकाणां वेषभूषाचित्रणम् (५,५७)। राजनीतिं विषयीकृत्य विरचितानि तेन चतुर्विंशतिः पद्यानाम् (६,१०३-१२६)। अनिरुद्धे निगडबद्धे सति मुमूर्च्छ शोकभागुषा (१२७ पृ.)। तस्या विलापं त्रयोदशपद्यैर्वर्णयामास कविः (५,१०३-१२६)। अनिरुद्धः प्राहिणोत् सान्त्वनामुषां प्रति (१२८ पृ.)।

शाकुन्तलस्य 'शुश्रूषस्व गुरून्' इति पद्यमनुकृत्य रचितमनिरुद्धचम्वा वक्ष्यमाणमिदं पद्यं विचार्यताम्—

*सुमहति कुले जाता दत्ता ततोऽपि महत्तरे*
*सुकृतविभवैर्भोग्यं प्राप्ता प्रियं जगतः प्रियम्।*
*गुरुषु दयिते देवे वृद्धासु यातृषु जामिषु*
*व्यवहर तथा वत्से यामो यथा न वयं ह्रियम्।।१,१०४।*

सम्भ्रमे त्वरायां वा महिलाः पुरुषा वा वस्त्राण्याभूषणानि च परिदधते विपर्यस्ततया। महाभारते यदा कौरवा विराटमाचक्रमुस्तदा बृहन्नला परिदेधे कवचादि विपर्यस्ततया। तत् सम्भ्रमापेक्षया विनोदमनुचक्रे। अनिरुद्धचम्वां वरदर्शनपरीप्सायां काचिद् योषिदाभूषणानि परिदेधे विपर्यस्ततया। इह कविः कालिदासमश्वघोषं चानुससार—

*एकस्यां कलितवता कपोलपालौ*
*पत्रालीं द्रुतमितरत्र तामकृत्वा।*
*आयाता झटिति गवाक्षमीक्षमाणा*
*प्राद्युम्निं परिहसिता सखीभिः।।९,२२।*

*केयूरं वलयपदे निवेश्य वामा*
*सैमन्तं मणिमपिनह्य कण्ठदेशे।*
*सीमन्ते कलितललाटिका च काचित्*
*सम्भ्रान्ता करधृतवीटिका प्रपेदे।।९,२३।*

बाणासुरमन्त्रिणा कुम्भाण्डेन व्यधायि खलूषायाः कन्यादानम्। वरयात्रिकाणां कृते प्रदत्तस्य भोजस्य वर्णनं कृतं षोडशभिः पद्यैः (९,६९-८४)। भोजनवेलायां विहितो हासपरिहासस्तरुणीभिः। श्रीकृष्णं हासयितुं ताभिर्योजितं दधि नारदकूर्चश्मश्रुणोः (९,८२)। जन्ययात्रिकाश्च नर्तितुमुपक्रान्ताः (९)। ततो नाट्यप्रदर्शनं संवृत्तम् (९,८७)। नर्तितमप्सरोभिः, शिल्पिभिश्च वादितानि चतुर्विधानि वाद्यानि (९,८६)। पाणिपीडनोत्तरं दीर्घकालमस्थाज्जन्ययात्रा शोणितपुरे (९,९०)।

**आध्यात्मिकी दृष्टिः**

आध्यात्मिक्या दृष्ट्या परिपुष्ट आसीद् देवराजः। तेनैकविंशतिसर्गीयस्य नानकचन्द्रोदय-महाकाव्यस्य प्रतिसर्गमादौ सरस्वती वन्दिता। तत्र स पद्यद्वये (८,५६-५७) अप्रतिमं श्रीकृष्णलावण्यमववर्णत्। इहानिरुद्धचम्वां दिग्दर्शनं कारयामास तावदर्धनारीश्वरत्वस्य (४,१२३)। अनिरुद्धो निगडबद्धो ववन्दे कुलदेवताम् (५,२०५-२३७)। दुर्गादेव्या स्तुतिः, अष्टम उच्छ्वासे विष्णुशिवस्तुतिः, नारदकृता श्रीकृष्णप्रशंसा (६,१५५-१७२) च दर्शनीया। मार्मिकं तन्त्रशास्त्रीयं षट्चक्रभेदनं वर्णयन्, परापश्यन्तीमध्यमावैखरीणां विवेचनं विदधानो दुर्गादेवीं भोगमोक्षदां व्यवर्णयत् कविरयम्। कालीस्वरूपं निरूपयन्नसौ चामुण्डां विन्ध्यवासिनीं चास्मार्षीत्। सर्वमङ्गला (५,२३५) एकानंशा च साक्षात् प्रकटीभूय समाश्वासयामासतुरनिरुद्धम्। पातञ्जलयोगसूत्रमविकलमुद्धृतम्-'दृष्टानुश्रविकविषयवैतृष्ण्य- (१५७ पृ.) इति।

**अनिरुद्धचम्वा भाषानिदर्शनम्**

यद्यपि रसालङ्कारच्छन्दोभिर्भाषाभावोऽभिव्यज्यते तथापि भाषाभिव्यक्तीनामन्येऽपि प्रकाराः सन्ति यैस्तस्याः प्रकृतिः परीक्ष्यते। तेषु काकुशब्दपौनर्वृत्त्यप्रभृतयः सन्ति विविधाः प्रकारास्तानिह परीक्षिष्यामहे। 'नु' शब्दस्य पौनर्वृत्त्येन प्रश्नतर्कावुभावुपस्थाय भावाभिव्यक्तिं दृढीकुर्वाते। यथा- 'गुणगौरवान्नु बुद्धिसौष्ठवान्नु दम्भविरहान्नु देवयोगान्नु' (८७ पृ.)। सहशब्दस्य पौनर्वृत्त्यम्— 'मयि परमसौ विश्वसिति, सह स्नाति सहाश्नाति, सह पिबति, सह विहरति, सह स्वपिति, सहोत्तिष्ठति, सह निषीदति, सह कुप्यति, सह प्रसीदति'। नकारस्य प्रयोगो यथा- 'किञ्चिदपूर्वं न पश्यति, न शृणोति, न जिघ्रति, नास्वादयति, न स्पृशति' (८७ पृ.) इति।

**किमिति- शब्दपौनर्वृत्त्यम्**

किमिति सौकुमार्यसाराणि ताम्यन्ति तवाङ्गानि, किमिति बन्धुवर्गमखिलमेव संशयित-जीवितं विदधती मुहुर्मूर्च्छसि, किमिति कतिपयदिनानि मदन्तिके नागताऽसि, किमिच्छसि, किं करवाणि, किं ददानि' (८९-९० पृ.)।

**क्रियाणां पौनर्वृत्त्यम्**

निद्रानिःश्वास-दाह-मोह-प्रलापोत्तरं ताम्यति, नाभिनन्दति, प्रियताम्बूला प्रियताम्बूलवीटिकामपि.... किमपि चिन्तयति, किमप्यालिखति, किमपि सम्मन्त्रयति, किमपि वीक्ष्येव प्रसीदति, जिघृक्षति, चुचुम्बिषति, पुनस्तेन वियुक्तेवोच्छ्वसिति, विषीदति, विलपति, चलति, लुठति, प्रस्वपिति' (९० पृ.)।

**'किम्'- शब्दपौनर्वृत्त्यम्**

***केनाम्बुधिर्नियमितो दृढसेतुबन्धात्***
***कालानलो व्यरचि केन च रुद्धशक्तिः।***
***केनार्यमा बलवता स्थगितः कराभ्यां***
***मेरुः प्रकम्प्य भुवि केन निपातितश्च।।५,१७७।***

**गद्यस्य क्वाचित्कं सम्भाषणत्वम्**

आः कः कालदर्वीकरस्य दंष्ट्रामाक्रष्टुमोजायते (११९ पृ.)। उक्तिप्रत्युक्तीनां सम्भाषणीया भाषा सातिशयं रुचिरा (९०-९२)। उषा तु विषमविषधरदेशशङ्काकुलकृत्तमूला कदलीव सहसा पपात (१२७ पृ.)।

**ध्वन्यनुकरणात्मकाः शब्दप्रयोगाः**

देवराजेन प्रसङ्गोचितध्वन्यनुकरणात्मकानां शब्दानां प्रयोगे नानुष्ठितं कार्पण्यम्। यथा— छर्छरध्वनिः (८५ पृ.)। फेत्कारिषु फेरवेषु काङ्कारमुखरेषु काकेषु घूत्कारघोरेषु घूकेषु, चीङ्कारिणीषु चीरीषु चूँचूँचञ्चलनाय (४,३४)। चटुलचूड्कृतैः (७० पृ.); सनसनायमान (८,१९५); चटचटायमान (२२९ पृ.)। कौक्षेयकाणां झणझणायितेन, पतत्त्रिणां सनसनायितेन।

**दुर्लभशब्दप्रयोगाः**

इहानिरुद्धचम्पूकाव्ये तावदेतादृशाः शब्दाः प्रयुक्ता ये सन्ति द्व्यर्थका आहोस्विद् यदीया व्युत्पत्तिरस्पष्टा। प्रायशस्ते विवेचिता मया टिप्पण्याम्। इहाहं द्वित्रशब्दान् निदर्शनार्थमुपस्थापयामि।

तेष्वन्यतमोऽस्ति 'निविरीसम्' इति। पाणिनिना 'नेर्बिडज्विरीसचौ' (५,२,३२) इत्यनेन सूत्रेण न्युपसर्गात् विडज्- विरीसचौ प्रत्ययौ विहितौ नतनासिकार्थे। काशिकायां 'निबिडाः केशाः' इत्युदाहृत्य सान्द्रार्थोऽपि स्वीकृतः। एवं सत्यपि 'निविरीस'-प्रयोगे मौनमास्थितम्। अनिरुद्धचम्प्वां निविरीसशब्दः सान्द्रार्थे प्रयुक्तः। शिशुपालवधे (७,२०) एतदीयः प्रयोगः सान्द्रार्थको दृश्यते। परमेतस्य निविरीशोऽपि लभ्यते पाठः। तद्धितस्य भूयांसः प्रत्ययाः शब्दरूपा अपि। यथा मात्रशब्दान्मात्रच् प्रत्ययः, कटशब्दाच्च कटच् प्रत्ययो गृहीतः। एवमेवेह 'बिड' - शब्दाद् बिडच् प्रत्ययो घटितः। विडः (बिडः) लवणविशेषो यो देशभाषायां 'खार' इति 'खारी' इति वा निगद्यते। बिडीशः>विरीसः>निविरीस इत्येतादृशो विकासक्रमो ध्यातव्यः।

द्वितीयस्तावदस्ति शब्दः 'वार्ध्रीनसम्' (३,८४)। तैत्तिरीयसंहितायामापस्तम्बे च प्रयुक्तपूर्वोऽयम्। 'चर्मणोऽञ्' (५,१,१५) इत्येतस्मिन् पाणिनीये सूत्रे काशिकावृत्तावुदाहरणमस्ति चर्मार्थकं 'वार्ध्रम्' इति। अमरकोषश्चर्ममयरज्ज्वर्थकं 'वर्ध्री' शब्दं दर्शयति। छेदनार्थकाच्चौरादिकाद् वर्धधातोरयं निष्पद्यते। काष्ठस्यच्छेत्ता तनूकर्ता च वर्द्धकिः। यस्य चर्म पीनं पुष्टं वा स्यान्नासा चोच्छ्रिता भवेत् सोऽयं वार्ध्रीनसः=गण्डक इत्यर्थः। वस्तुतः 'पूर्वपदात् संज्ञायामगः' (८,४,३) इत्यनेन पाणिनीयेन सूत्रेण णत्वविधानाद् 'वार्ध्रीणसः' इत्येव शुद्धः पाठः। तत्रान्ये शब्दा अपि निरीक्ष्याः-निध्यम् (६,१०८)=दुर्निरीक्ष्यम्, हेवाकिनः (१४५ पृ.)=अभ्यस्ता लीना वा। देशीभाषानिधिरेष शब्दः। 'हेवा' इति मराठीभाषायां प्रयुक्तः। एकादशशताब्द्या उत्तरार्द्धे विद्यमानेन काश्मीरिकेण कविना बिल्हणेन विक्रमाङ्कदेवचरिते सुधाकरेण चाऽऽर्यविद्यायां प्रयक्तोऽयं शब्दः। पाषण्डो वा पाखण्ड इत्यस्य निर्णय ६४ तमपृष्ठस्य टिप्पण्यां विलोकनीयः।

**व्याकरणाश्रिताः प्रयोगाः**

केचन दुरवगमा अपि शब्दाः प्रयुक्ता देवराजेन। यथा- 'अतृणेट्'- 'द्विजत्राणायातृणेट् (३५ पृ.)। प्रेरणार्थकस्य सामान्यभूतकालस्य (लुङ्लकारस्य) चारुप्रयोगा अपि कृतास्तेन। यथा- समचूकुचत् (४,४), समबीभवन् (७० पृ.), अभ्यतीतडत् (४,३८), अवीवदत् (४,७८), अजिग्रहत् (१०३ पृ.), व्यजिज्ञपत् (१०३ पृ.), अजीहरम् (५,१९६), अशिश्रियत् (४,१०३) अयं ण्यन्तवदाभाति। आत्मनेपदस्य सामान्यभूतकाले 'प्रागल्भिष्ट' (५,५७)। कर्मणि 'व्यवेचि (५,५९)। क्रियाक्रीडापटीयान् देवराजः। परोक्षभूतकाले 'मदयाम्बभूव (४,३८), कलयाञ्चकार (४,३८), बिभराम्बभूव (३९ पृ.) इत्यादयः। नामधातुप्रयोगाणां तु प्राचुर्यम्। निदर्शनार्थं केचित् प्रयोगाः प्रस्तूयन्ते। यथा- ओजायते (११९ पृ.), लोहितायति नयनकाणे (१५२ पृ.), अतिवीरायते (५,१५९), ओजायितुम् (५,१६५), कण्डयति (६,१००), विमनायमानः, उन्मनायमानः (१६४ पृ.), अन्यथयितुम् (४,६), असिद्धान्तयत् (४,३९), लघयस्व (६,१९५), मूकन्ति (५,१२९), दासन्ति (५,२२९), रसयाम्बभूव (६,१३२), ओजायामास (४,४४), अभिषेणय (१६५ पृ.) इत्यादयः।

**इच्छार्थकसन्नन्तप्रयोगाणां कतिचन निदर्शनानि–**

आचिंस्कन्त्सून् (२,४६), जिगणयिषुः, प्रतितीर्षुः, पिधित्सुश्च—

*जिगणयिषुः परमाणून् प्रतितीर्षुः सागरं दोर्भ्याम्।*
*अञ्जलिना च पिधित्सुर्व्योम जनस्ते गुणी स्तौति।।६,१७१।*

अनिच्छार्थकोऽपि सन्नन्तप्रयोगः— चिकित्समानैः (२०८ पृ.)।

**च्विप्रत्ययस्यच्छटापि विलोक्यताम्–**

सफलीकुरुष्व (६,१९५), पिञ्जरीकृत्य (७,८), व्याकुलीचकार (२१५ पृ.)। समयाचकार (१३४ पृ.) इह डाच्प्रत्ययश्च्व्यर्थकः 'समयाच्च यापनायाम् (५,४,६) इति पाणिनीयेन सूत्रेण च्व्यर्थे डाच् प्रत्ययो विहितः।

**णमुल्प्रत्ययस्य प्रयोगः**

***स्नायं स्नायमनुष्णवारिषु सरित्पूरेषु पान्थश्रमं***
***क्षायं क्षायमनोकहालिनिबिडच्छायं क्षणं संश्रयन्।***
***धारं धारमपि स्तनेषु सुदृशामामोदभारं गुरुं***
***मन्दं मन्दमुपैति चन्दनगिरेः श्रान्तः समीरोऽध्वगः।।३,८९।***

**उक्तिशैल्या वाग्व्यवहारशैल्या वा प्रयोगाः**

समूलकाषं कषितुम् (६,१२०) इत्यादयः।

**अपाणिनीयाः प्रयोगाः**

√ नम् (णम्) धातौ भौवादिके परस्मैपदिनि सत्यपि पर्युपसर्गपूर्वकमस्य व्यावहारिकः प्रयोगो लभ्यत आत्मनेपदे 'परिणमते' इति। देवराजेन प्रपूर्वकस्याप्यस्य व्यवहारि प्रयोग आत्मनेपदे- 'कः प्रणमेत' (६,५९)। अयं नूनमपाणिनीयः। मन्ये पर्युपसर्गपूर्वकस्य सादृश्यसंस्कारादियं स्खलतिः। तेन भावप्रत्ययद्वयस्य यौगपद्येन विहितः प्रयोगो यद्यप्यपाणिनीयो न शक्नोति वक्तुम् तथाप्यमुनो व्यवहारप्रतीपता न पार्यतेऽपलापयितुम्— 'दैन्यता' (९,८८) इति। एकत्र 'परितः' इत्यस्य योगे षष्ठ्याः प्रयोगोऽप्यपाणिनीयः— 'दैत्येश्वरस्य परितः शिविकासहस्रैः' (९,३२)।

**पौराणिकमितिवृत्तम्**

इह देवराजेन शर्मणा कथानकमितिवृत्तीयं समुद्धृतं तच्च क्वचिदुपमारूपं क्वच्चिच्च वर्ण्यविषयरूपम्—

***नासत्यनिर्माणधृतावधानः***
***पुरूरवाः सृष्टिगृहीतशिल्पः।***
***नलेन लब्ध्वा स्थिरतां करस्य***
***कृतस्मरोऽमुं विदधे विधाता।।४,१७७।***

परन्तु क्वचिद् व्यतिक्रमोऽपि समजायत। यथा—

द्वापरयुगे बोधिसत्त्वस्य स्थितेरभावेऽपि देवराजेन चम्प्वामस्यां प्रस्तुत्य तन्नामधेयं तदितिहासानभिज्ञता प्रकाशिता। यद्यपि बौद्धधर्मे बोधिसत्त्वानामुररीकृता चिरन्तनी परम्परा, तथाप्यसावितिवृत्तप्रतीपा पौराणिकपरम्परापराचीनापि मन्यते—

***न बोधिसत्त्वं बहु मन्यते जनः।***
***कृपाभरेणास्य कृतात्मतेजनः।।७,११८।***

षष्ठ उच्छ्वासे कविना सा कथा समुदलेखि या पञ्चतन्त्रे दृश्यते। इहापि व्युत्क्रमः। साधीयः स्याच्चेन्महाभारते लभ्येत—

*श्रूयते हि पथिकः सुखं स्वपन्*
*कर्कटेन भुजगान्निवारितः।।६,५५।*

**सामान्यसम्पादनात् पाण्डुलिपिसम्पादनभेदः**

सम्पादनशब्द आङ्गलभाषीयस्य 'एडीटिंग्- (editing) इत्यस्यानुवादरूपः। पत्रपत्रिकाणां सम्पादनकर्मणः पाण्डुलिपेः सम्पादनस्य सर्वथा सिध्यति विश्लेषः। पत्रपत्रिकासु मुद्रयिष्यमाणानां लेखानां शुद्धीकरणेन प्रकाशनयोग्यताया आपादनमीक्ष्यसंशोधनेन च मुद्रणमात्रं नाम सम्पादनमाख्यायते। अनेकत्र तावदीक्ष्यसंशोधनपूर्वकं पुनर्मुद्रितस्य पुस्तकस्य भूमिकारचनया सम्पादनं कथ्यते। बहुत्र भूमिकामन्तरेणापि यथायथं पाण्डुलिपेरीक्ष्यसंशोधनमात्रेणापि सम्पादनं निगद्यते। कृष्णकविविरचिता 'मन्दारमरन्दचम्पूः' एतादृश एव ग्रन्थो यत्र भूमिकालङ्करणमन्तरापि तस्य सम्पादितत्वमुदीरितम्। सम्पादनविधुरस्य तस्य सम्पादको विराजते पण्डितकेदारनाथशर्मा संशोधकश्चास्ते वासुदेवशर्मा। अयं १९३४ तमे खीस्ताब्दे निर्णयसागरमुद्रणालयेन मुद्रितः। अत्र काचन पादटिप्पण्यपि नोपन्यस्ता। भ्रान्तिवशादीक्ष्यसंशोधनमात्रेणापि तत्सम्पादनमाश्रुतमिति स्पष्टीभवति।

**पाण्डुलिपिसम्पादनप्रविधिः**

पाण्डुलिपीनां सम्पादनविधावाद्यं कार्यं भवति संबद्धग्रन्थस्य मातृकाणां चयनम्। तिसृणां मातृकाणामुपलब्धौ पाठशुद्ध्यनुसारेण तदन्यतमां मूलत्वेनावधार्य तदन्यतरयोः क.ख. रूपतया क्रमो निर्धार्येत। द्वितीयं कार्यं तासां मातृकाणां सुवाच्यैरक्षरैः प्रतिलिपीकरणम्। तृतीयं कार्यमस्ति पाठभेदनिदर्शनम्। अन्यतरयोर्मातृकयोर्भिन्नस्य पाठस्य पादटिप्पण्यां क.ख. रूपेण समङ्कनम्। तुरीयं कार्यमास्ते विवेचनपूर्वकं शुद्धपाठस्य निर्धारणम्। पञ्चमं कार्यमस्ति त्रुटितानामक्षराणां पदानां वोहापूर्वकं कोष्ठके विन्यसनमाहोस्विद् यथास्थानं तत्संनिवेश्य पादटिप्पण्यां तन्निर्देशनम्। षष्ठं कार्यं परिशिष्टपरिकल्पनम्, सप्तमं कार्यं वर्तते सम्पूर्णं ग्रन्थं पर्यालोड्य विषयवर्गीकरणपूर्वकं भूमिकोपन्यासः। वस्तुतः कस्या अपि पाण्डुलिपेः सम्पादनं नैकेन विदुषा साध्यम्। तदर्थं नैयून्येन त्रयाणां विदुषां साहाय्यमपेक्ष्यते।

**प्रकृतपाण्डुलिपिं परिष्कृत्य तत्सम्पादनम्**

इदमीयो हस्तलेखो मयाऽधिगतः सरस्वतीभवनपुस्तकालयात्। एतस्य प्रतिलिपीकरणतिथि-रङ्कितस्तदन्ते वि.सं. १८४७ इति। एतदीया द्वितीया मातृका विद्यते बाँग्लादेशस्य राजशाही-पुस्तकालये। भूयसि पत्राचारे कृतेऽपि नैव विन्नं साफल्यम्। तस्मान्मया तावदेकलाया एतस्या एव प्रतिलिपिः कारिता। तत्रैतस्या तूभे गद्यपद्ये लिखिते एकस्यामेव पङ्क्तावव्यवहितत्वेन। न तु तत्र पदच्छेदो विहितो न वा विरामादिचिह्नान्यप्यङ्कितानि। हस्तलिपेराकृतिः सुषमा परं तस्याः प्रकृतिः सर्वथैव विषमा। क्वचिदक्षराणां विषमाकृतिः, क्वचिदक्षरच्युतिः क्वचित् पदच्युतिः, क्वचिच्च पद्यपादच्युतिः। एवंभूता दोषा 'अमृतं विषसम्पृक्तम्' इति 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इति चाभाणकद्वयं स्मारयन्ति। पाण्डुलिपिप्रतिलिपिकर्ता त्वासीत् साहित्याचार्यः परन्तु तदीयं कार्यक्षेत्रमभूज्ज्योतिषम्।

तेनाक्षराणि यथा बुद्धानि तथा लिखितानि। तेन चतुर्वेदिना स्वबुद्ध्यापि कल्पिता नूतनपाठभेदाः। 'प्रलयमुग्घेतिरिति या' इत्यस्य स्थाने सोऽलेखीत्— 'प्रलयमुग्धेतिरिति या' इति। अनेकेषु

स्थानेषु यथेच्छं पदच्छेदं कल्पयित्वा- 'दश रामशरा:' इत्यस्य स्थाने तेन 'दशरा मशरा' इतीव रचिता नूतनपदावली। बहुत्र तेन ***षकारस्थाने खकारो*** लिखित:। 'गौर्या धातुविषमविशिखस्य' (५,२१) इत्यस्य स्थाने - 'गौर्या धातुविषमविशिषस्य' इत्युपन्यस्तम्। एतत्प्रकृतिकमन्यदेकमुदाहरणं प्रस्तौमि— एकदा मया प्राप्ते निमन्त्रणपत्रे दृष्टम्— 'चन्द्रशेखर द्विवेदी' इति खकारस्थाने षकारो विन्यस्त: 'चन्द्रशेषर द्विवेदी' इति।

इह पाण्डुलिपौ सर्वत्र बकारस्थाने वकारो लिखित:। बहुत्र ***यकारस्थाने पकारोपन्यासात्*** 'स्पन्दमानस्य स्यन्दमानात् स्यन्दमानस्य वा स्पन्दमानाद् भेदं कर्तुमशक्यता। एवमेव दुरूहता निर्धारणे— 'कलयति तिलपर्णी पङ्कमाप्याय्य सद्य:' अथवा 'कलयति तिलपर्णी यं कमाप्याय्य सद्य:' (६,७७)। पाण्डुलिपौ सर्वत्र परसवर्णस्थानेऽनुस्वारस्य प्रयोग: कृत:। क्वचित् ***पकारमकारयोरैक्यरूपाद्*** भेदो दुष्कर:। यथा— 'पुष्णान्< >मुष्णान्' इति। क्वचिद् यकारमकारयोरभेदो यथा—

***अत्र भवता सनाथस्य मे न कयापि चिन्तया भवितव्यम्।***

***अत्र भवता सनाथस्य येन कयापि चिन्तया भवितव्यम्।***

क्वचिद् ***वकाररेफयोरभेद:***— 'संकल्पोपवतै:'< >संकल्पोपरतै: (४,१८४)। वकारबकारयोरभेदादिह दृश्यतां भ्रमोत्पत्ति:— 'वदन्वभारस:'<>वदन् बभार स:' (९,९५)। एतादृशानां पाठभेदानां निर्णये भूयान् समयो हापितोऽभूत्। बहुषु स्थलेषु मया खण्डितपादपूर्तिरपि कृताऽभवत्। रेफझकारयोर्मध्ये महदन्तरं नैव दृश्यतेऽस्यां पाण्डुलिपौ (१३२,१३३ पृ.)। ***पकारयकारयोरभेद:***— 'सपदि< >स यदि' (२,२७) इत्यत्र महान् भ्रम: समुपतिष्ठते। 'अतरतु<>अवतरतु' (८८ पृ.) ***इहाक्षरच्युति:***। एवमेव 'नितान्तरङ्गे<>नितान्तमन्तरङ्गे' (९० पृ.)। ***वर्णविपर्यय:–*** ममावस:<>ममासव: (२७५ पृ.)। ***यकारस्थाने सकार:–*** 'मानमसुंजनम्< >मानममुं जनम्' (९१ पृ.)। ***पदच्छेदे भ्रम:–*** 'अभिमतस्य च पलमेव व्रजामि<>अभिमतस्य चपलमेव व्रजामि' (९१ पृ.)। ***अक्षरच्युति:–*** 'दहनुर्निरीक्षंत:<>दहनदुर्निरीक्षमन्त:पुरम्' (९१ पृ.)। ***स्वरविहीनस्य (रा) णकारस्य रात्वेन भ्रान्ति:–*** 'परापवाद:< >पण्यवाद: (१७५ पृ.)। ***अक्षराधिक्यम्–*** 'गण्डशैललकटितकठ< >गण्डशैलकटिकट' (१७७ पृ.)। ***षकारपकारयोरभेद:–*** 'वेषितम्< >वेपितम्। ***अक्षरच्युत्यक्षराधिक्यम्–*** 'चन्दाराविन्दवातां सुभय< >चन्दनारविन्दवातांशुभयम्'। ***द्य*** >< ***ट्य–*** चेद्य:< >चेट्य: (८९ पृ.)। ***दु:शोध्यो भ्रष्टपाठ:***— शरनिकरमयोह्यखै:शरै: प्रादुरासीत्< >शरनिकरमयोग्रै: स्वै: शरै: प्रादुरासीत्' (८,१६४)।

सर्वेषां पाठभेदानामिह भूमिकायामुपन्यसनं कर्तुमशक्यम्। अत्र तेषां केवलं निदर्शनमात्रमेव दर्शितम्। इतोऽधिकतरा: पाठभेदा: पादटिप्पणीषु समावेशिता: सन्ति। भूयिष्ठानां पाठभेदानां विचाराय ग्रन्थान्ते 'पाठभेदनिदर्शनम्' इत्याख्यं परिशिष्टमेव संयोजितम्। पाठकबन्धवस्तत्रास्या: पाण्डुलिपेर्दुरूहतामनुमातुं शक्नुयु:।

अस्या: पाण्डुलिपेर्यावाननेहा व्यत्यापितोऽभवत्, तावति कतिचित् स्वोपज्ञकृती रचयितुमपारयिष्यम्। एतदतिरच्य पाण्डुलिपीनां सम्पादनमेकं नीरसं रूक्षं च कार्यमास्ते। पाण्डुलिपीनां पाठनिर्धारणे

सूक्ष्मेक्षिकया विवेचनपूर्वकं व्युत्पत्तिज्ञानमपेक्ष्यते। तत्र शब्दविद्यायामपि नदीष्णता स्पृहणीया। साहित्यिक्यां कृतौ सत्यां साहित्यस्य काव्यस्य च चातुरी तावदनुपेक्षणीया येन त्रुटितच्छन्दसां पूर्तिः कर्तुं पार्येत। पर्यन्ते चानहंयुः परामर्शः-सम्पादनविधिवेत्तुर्निर्देशने निष्पादितः सम्पादनकार्यपूर्वानुभवो नितान्तमावश्यकः। तदभावे 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इत्युक्तिः प्रपुष्टिमुपेयात्।

एतादृशीं पाण्डुलिपिसम्पादनदुरूहतां समीक्ष्य प्रायशः परम्पराप्रशिक्षिताः सुधियो विरिरंसन्ति पाण्डुलिपिसम्पादनकर्मणः। पाण्डुलिपेरेकाधिकासूपलब्धासु मातृकासु किञ्चित् सौकर्यमवश्यमासाद्यते पाठभेदतौल्ये तन्निर्धारणेऽपि। केवलायामुपलब्धायां मातृकायां तु तत् सम्पद्यते दुस्साध्यं दुरवगमं च। मातृकायाः भ्रष्टलिपौ च सत्यां तद् भवति कष्टसाध्यतरं दुरूहतरमपि। अनिरुद्धचम्प्वाः पाण्डुलिपिरेतस्यामेव कोटौ परिगण्यते। अस्या अक्षराणि मुक्ताबिन्दुवच्चारूणि परन्त्वेतदन्तः-प्रविष्टे सत्येतस्या वैरूप्यं विज्ञायते 'मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्' इत्याभाणकवत्। पाण्डुलिपिसम्पादनमार्गः कण्टकाकीर्णः। पाण्डुलिपिसम्पादनकर्मण्येतादृशीर्दुरूहताः परिलक्ष्य प्रकाशितपूर्वग्रन्थान् पुनर्मुद्राप्य सम्पादकश्रेण्यां संमिमिलिषा पूर्यते।

देवराजप्रणीतस्य नानकचन्द्रोदयमहाकाव्यस्य पाण्डुलिपेः संशोधनं तदीयेन भ्रातृव्येन विहितमिति तदन्ते तेन स्वयमेव स्वीकृतम्—

***कथिता कविदेवराजनाम्ना***
***विमलकथा सुधिया च नानकीया।***
***तदनु तदनुजात्मजेन तुष्ट्या***
***परितः शोधितखण्डिता व्यधायि।।२१,२४२।***

तदीयस्यास्यानिरुद्धचम्पूकाव्यस्य संशोधनपरिष्करणे कृतप्रयासेन मयाऽपि प्रत्युच्छ्वासमन्तेऽनु-देवराजनामधेयं परिष्कर्त्रा संनिविष्टं स्वनामधेयम्।

काश्यां सत्यामपि विद्याराजधान्यामसौ प्रायशश्चम्पूनां सौरभानाकृष्टा बभूव। म.म. गोपीनाथ—कविराजमहोदयेन 'काशी की सारस्वत साधना' इत्याख्ये ग्रन्थे तावदष्टादशशताब्दीं यावदवस्थिता विवृता इह कोविदाः। नानकचन्द्रोदयमहाकाव्यस्य पुष्पिकया प्रणेतृदेशो न भवति सुस्पष्ट इति मन्ये तत्र देवराजशर्मा तत्कृती च नोल्लिखिते। अनिरुद्धचम्पूकाव्ये तत्कुलस्य देशस्य च स्पष्टता जायते। बलदेवोपाध्यायमहोदयस्यापि दृक्पथातीतत्वमभजतामिमौ ग्रन्थाविति तेनापि देवराजनाम विस्मृतमुल्लेखितुं 'काशी की पाण्डित्यपरम्परा' इत्यभिधे पृथुलेऽपि ग्रन्थे। देवराजात् परतः १७७० तमे खीस्ताब्दे काशिराजचेतसिंहकालावधौ शंकरमिश्रेण शङ्करचेतोविलासचम्पूः प्रणीतासीत् काश्याम्। कवेरस्य पितामहनामधेयमासीड्ढुण्ढिराजो दाक्षिणात्य इति। द्वाभ्यां लेखकाभ्यामियमपि चम्पूरुपेक्षिताऽभवत्। एतेन देवराज एक एवौत्तराहश्चम्पूप्रणेतेति सिध्यति।

पुण्यदायिन्याः श्रीगङ्गायास्तटमाश्रितस्य ज्ञानदायिनः काशीपुराधीश्वरस्य क्षेत्रे ज्ञानस्य विविधविद्याविधानां स्रोतांसि प्रवाहितान्यभूवन्। तेष्वनेकान्यन्तर्निगूढानि विलसन्ति। काशीशो महेश्वरो बुधजनानां श्रीमुखेन ज्ञानं वितरति। आशासे त एवाज्ञातस्रोतस्कानि ग्रन्थरत्नानि गवेषयित्वा ज्ञानधारानैरन्तर्यं साधयेयुरिति।

*वटसावित्र्यां*
*वि.सं. २०६७* }

**श्रीगुरुचरणचञ्चरीको**
**वागीश शास्त्री**

# प्ररोचना

*(बाणासुरपुत्री द्वारा अपहारित श्रीकृष्णपौत्र अनिरुद्ध की प्रेमकथा)*

गुरुनानक देव के शिष्यों में अन्यतम थे संस्कृत विद्वान् द्वारकादास वैष्णव। उन्हें २५० वर्षों का आयुष्य प्राप्त था (द्र. नानक-चन्द्रोदय-महाकाव्य २१,२०८)। गुरु गोविन्द के समय (१६६६-१७०८ ई.) तक वे विद्यमान थे। गुरुनानक देव जब वाराणसी पधारे थे तब शाण्डिल्यगोत्रीय एक सरयूपारीण ब्राह्मण ने उन्हें भूमि प्रदान की थी। उसी भूमि पर वाराणसी में गुरुबाग का गुरुद्वारा स्थापित हुआ है। भूमिदायी उसी ब्राह्मण कुल में अनिरुद्धचम्पू काव्य के प्रणेता महाकवि पण्डित देवराज शर्मा त्रिपाठी का जन्म हुआ। इनके पिता का नाम था पण्डित रघुपति त्रिपाठी और विद्यागुरु का नाम था पण्डित शिवलाल शर्मा। ये गुरु गोविन्द सिंह के समकालीन थे। इन्होंने गुरुनानक देव के वैष्णव शिष्य द्वारकादास से उदासी मत की दीक्षा ली थी। कुछ वर्षों की साधना एवं अध्ययन के पश्चात् दीक्षा रंग लायी। इनमें विलक्षण प्रतिभा, मेधा तथा काव्यशक्ति का उन्मेष हुआ। देवराज शर्मा ने स्वयं अपनी मेधाशक्ति का वर्णन नानकचन्द्रोदय-महाकाव्य में किया है—

*'तत्रासीद् देवराजः परमकवयिता धारणाशक्तिशाली' (४, २१)।*

इन्होंने अपनी काव्यशक्ति का प्रयोग गुरुनानक देव की जीवनी, उनके दर्शन इत्यादि के चरित्रचित्रण में इक्कीस सर्गों के महाकाव्य की रचना की जिसमें कुल मिलाकर ३२७६ श्लोकों को गुम्फित किया गया है। उस महाकाव्य का नाम है 'नानकचन्द्रोदयमहाकाव्यम्' अर्थात् नानकचरितावली। इसका प्रकाशन मेरे मुख्य सम्पादकत्व में सम्पूर्णानन्द संस्कृत विश्वविद्यालय से सन् १९७७ में हुआ।

महाकाव्य की इस रचना के अनन्तर महाकवि का हृदय प्रेम-परिप्लुत हो गया। शृङ्गार रस का सभी रसों में प्राधान्य माना गया है। उमड़ते प्रेम की इस रसधारा को इन्होंने काव्य के माध्यम से प्रवाहित करने का संकल्प लिया। इस हेतु भगवान् श्रीकृष्ण के पौत्र अनिरुद्ध का बाणासुर की पुत्री उषा के साथ हुए प्रेमानुराग को विषय बनाकर इस अनिरुद्धचम्पू काव्य की रचना की गयी है। इसमें इन्होंने पद्यकाव्य के साथ गद्यकाव्य का भी कौशल प्रदर्शित किया है। इसमें द्विविध गद्य प्रयुक्त हुआ है— १. उत्कलिकाप्राय तथा २. चूर्णक। दीर्घ समासवाली पदावली से संयुक्त वाक्य को ही उत्कलिकाप्राय कहते हैं। चूर्णक यह चूर्ण की तरह विश्लिष्ट भी रहता है और दीर्घ समासों से बोझिल नहीं होता। अल्प समास युक्त पदावली से सम्पन्न होने में ही इसका वैशिष्ट्य माना गया है।

उषा द्वारा अपहृत कराये गये अनिरुद्ध की प्रेमकथा से संबद्ध यह प्रथम चम्पूकाव्य है जिसमें किसी राजकुमारी द्वारा दूरवर्ती राजकुमार का अपहरण कराया गया हो। पश्चिमी समुद्र तट पर स्थित द्वारकापुरी में अनिरुद्ध का निवास था जबकि भारत की पूर्ववर्ती सीमा पर स्थित आसाम के शोणितपुर में बाणासुर की पुत्री उषा रहती थी। शोणितपुर आज तेजपुर के नाम से जाना जाता है। भारत के इतिहास में अनेक भूपतियों द्वारा राजकुमारियों के अपहरण का इतिवृत्त तो मिलता

है। किन्तु यह अद्वितीय उदाहरण है जिसमें किसी राजकुमारी ने किसी राजकुमार का अपहरण कराया हो। यद्यपि इस अनिरुद्धचम्पू की रचना के पूर्व कूर्माचल के नृपति रुद्रचन्द्रदेव द्वारा विरचित 'उषारागोदया' नामक नाटिका ग्रथित हो चुकी थी तथापि उसमें से अपहरण की घटना हटा दी गयी है। इसके अतिरिक्त उसमें गद्यपद्यमय काव्य-कौशल प्रदर्शित नहीं किया गया है। इसका भी प्रकाशन मेरे मुख्यसम्पादकत्व में उक्त विश्वविद्यालय से सन् १९७९ में हो चुका है।

**चम्पूकाव्य**

बन्धयुक्त मिश्रकाव्य का एकमात्र रूप चम्पूकाव्य है। बन्धविहीन गद्यपद्य काव्य केवल मिश्रकाव्य हो सकता है चम्पूकाव्य नहीं। गद्यपद्यमिश्रित रचना की प्रवृत्ति के दर्शन हमें ऐतरेय ब्राह्मण, उपनिषदों और महाभारत में होते हैं। ईसा की प्रथम शताब्दी में प्रणीत अवदानशतक भी गद्यपद्यमिश्रित शैली में विरचित है। दिव्यावदान और आर्यसूर की जातकमाला की रचनासरणि भी गद्यपद्यमिश्रित चम्पूकाव्य की ही तरह है। गद्यपद्यात्मक आख्यान शैली में निबद्ध जातकमाला काव्यगुणों से ओत-प्रोत है। उसकी शैली प्रसाद गुण सम्पन्न है। मानव हृदय पर आघात करने वाले भाव सन्तानों का भव्य विवरण देने में आर्यसूर अग्रगण्य हैं। हरिषेण-प्रणीत समुद्रगुप्त प्रशस्ति (३६० ई.) में गद्यपद्यात्मक मिश्र शैली का अलङ्कृत रूप देखा जा सकता है। यह प्रशस्ति चम्पूकाव्य की शैली का प्रथम एवं अन्यतम उदाहरण प्रस्तुत करती है। गद्यपद्य की मिश्रित शैली में अभिव्यक्त होने पर भी रूपक दृश्य काव्य है। अत: श्रव्यकाव्यान्तर्गत प्रबन्धात्मक मिश्र काव्य का एकमात्र एवं सर्वोत्कृष्ट अङ्ग चम्पूकाव्य ही है। हरिषेण की प्रशस्ति से लेकर दसवीं शताब्दी तक के शिलालेखों का मुख्य वैशिष्ट्य उनकी गद्यबहुलता है। वस्तुत: गद्य में काव्यत्व का संनिवेश ही कवियों की कसौटी मानी गयी है- 'गद्यं कवीनां निवषं वदन्ति'।

यद्यपि पञ्चतन्त्र, हितोपदेश, शुकसप्तति, वेतालपञ्चविंशतिका; द्वात्रिंशत्पुत्तलिका तथा पुरुषपरीक्षा आदि में गद्यपद्यात्मक मिश्र शैली का दर्शन होता है, तथापि उनमें कवित्वपूर्ण या अलङ्कृत गद्यपद्य का सर्वथा अभाव रहता है। इसलिए वे चम्पूकाव्य की श्रेणी में परिगणित नहीं हो सकते। सम्पूर्ण गद्यपद्य भाग को काव्यगुण-सम्पन्न बनाना चम्पूकाव्यों का मुख्य उद्देश्य रहा है। गद्यपद्य मिश्रित शैली में विरचित काव्य ही चम्पूकाव्य कहाता है। काव्य में मिश्र शैली अपनाने का उद्देश्य गद्यकाव्य के अर्थगौरव एवं पद्यकाव्य की रागमयता को एकत्र संनिविष्ट करना है। गद्य संबन्ध से पद्यसूक्ति वाद्य से युक्त गीत की तरह अधिक हृदयग्राहिणी बन जाती है। इसमें सुधा एवं माध्वीक के स्वारस्य की युगपत् प्राप्ति होती है।

यद्यपि आचार्य दण्डी के समय (६००-७००) तक चम्पूकाव्य अस्तित्व में आ चुके थे— 'गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते', तथापि उनके समय में विरचित वे उपलब्ध नहीं हुए हैं। त्रिविक्रम भट्ट (९१५ ई.) का नलचम्पू दो सौ पचास उपलब्ध चम्पूकाव्यों में प्रथम एवं साहित्यिक सौष्ठव की दृष्टि से एक महत्त्वपूर्ण कृति है। सम्प्रति उपलब्ध उक्तसंख्यक चम्पूकाव्यों में से अधिकांश चम्पूकाव्यों के प्रणेता दक्षिण भारतीय कवि रहे हैं। इससे प्रतीत होता है कि चम्पू शब्द का स्रोत कहीं न कहीं दक्षिण भारतीय संस्कृति में निहित है। उणादि प्रत्यय से निष्पन्न इसकी व्युत्पत्ति कृत्रिम और स्वारस्यविहीन लगती है। गन्धरूपी गद्य और

रंगरूपी पद्य के मिश्रण से चम्पूकाव्यों की निष्पत्ति होती है। जिस गद्य में अनुप्रासों और समासों का बाहुल्य हो तथा जिसमें पद्य का आनन्द आता हो उसका अभिधान है वृत्तक या 'वृत्तगन्धि'। चम्पा या स्वर्णचम्पक पुष्प गंध और रंग दोनों से मण्डित होते हैं। ये हलके पीतवर्ण होते हैं और इनमें तीव्र गन्ध रहती है। इन फूलों के वृक्ष अधिकता से दक्षिण भारत में पाये जाते हैं। इसलिए यह सर्वथा युक्तियुक्त प्रतीत होता है कि 'चम्पू' शब्द का स्वारस्य चम्पक या स्वर्णचम्पक पुष्प में निहित है। बिल्हण कवि ने बहुत सोच-समझ कर अपनी प्रेयसी के व्यक्तित्व की उपमा 'चम्पकदामगौरी' कह कर चम्पक पुष्प से इसलिए दी है क्योंकि वह उसके व्यक्तित्व के रंग औ ढंग दोनों को प्रकाशित करने की सामर्थ्य रखता है।

## अनिरुद्धचम्पू की कथा और उसका स्रोत

अनिरुद्ध श्रीकृष्ण का पौत्र और प्रद्युम्न का पुत्र था। वह अपने पिता तथा पितामह के साथ भारत के पश्चिमी समुद्र तट पर बसी द्वारकापुरी में रहता था। आज भी वेट द्वारका समुद्र के मध्य में बसी है। वहाँ भी श्रीकृष्ण रहते थे। भारत के पूर्वी छोर पर आसाम के तेजपुर में बाणासुर रहता था। उसकी पुत्री उषा का स्वप्न में अनिरुद्ध के साथ मिलन हुआ। वह उसके प्रेम में गिरफ्तार हो गयी। प्रातःकाल जागने पर भी वह उसे भुला न सकी। दिन-प्रतिदिन उस पर उदासी छाने लगी। उसकी सखी चित्रलेखा के पूछने पर उसने अपनी व्यथा कही। चित्रलेखा ने प्रसिद्ध राजकुमारों के चित्र बना उसे दिखाये। अनिरुद्ध का चित्र देखते ही वह लज्जित हुई। चित्रलेखा योगविद्या में निपुण थी। उसने द्वारका से अनिरुद्ध का अपहरण कर उसे उषा के शयनागार में उपस्थित कर दिया। अनिरुद्ध ने उषा के साथ गन्धर्व विवाह कर लिया। कुछ समय के पश्चात् बाणासुर को उषा के शयनागार में अनिरुद्ध की उपस्थिति का पता चला। उसने अनिरुद्ध के साथ युद्ध किया और उसे निरुद्ध कर लिया।

चार महीनों के पश्चात् जब श्रीकृष्ण को नारद से पता चला कि अनिरुद्ध तेजपुर में बाणासुर के द्वारा निरुद्ध हुआ है तब उन्होंने ससैन्यबल तेजपुर पर आक्रमण कर दिया। बाणासुर की रक्षिका कोटवी थी। शिव ने भी उसके पक्ष से श्रीकृष्ण के साथ युद्ध किया। बाणासुर को अपने सहस्र बाहुबल पर गर्व था। जब उसने शिव से कहा कि मैं अप्रतिम हूँ। कोई योद्धा आकर मुझसे युद्ध करे। तब शिव ने कहा था- 'प्रतीक्षा करो, तुम्हें युद्ध में परास्त करने वाला शीघ्र आएगा। अन्ततः श्रीकृष्ण ने युद्ध में बाणासुर के दो हाथों को छोड़ सारे हाथ काट डाले। उषा का अनिरुद्ध के साथ धूमधाम से विवाह हुआ और वे वर वधू को लेकर द्वारकापुरी आ गये।

अनिरुद्ध की किसी राजकुमारी द्वारा अपहरण की यह कथा संस्कृत वाङ्मय में अनूठी और अद्वितीय है। वहाँ पुरुषों द्वारा युवतियों के अपहरण के तो अनेक उदाहरण मिलते हैं किन्तु किसी युवती द्वारा युवक के अपहरण का यह इकलौता उदाहरण है। अनिरुद्ध के अपहरण के पूर्व उसके पिता प्रद्युम्न का अपहरण शम्बर ने किया था।

इस उषा अनिरुद्ध कथा का उत्स पद्मपुराण (उ. २५०), शिवपुराण (रुद्र. ५१-५९) तथा श्रीमद्भागवतपुराण (१०,६२-६३) में निहित है। महाकवि देवराज शर्मा द्वारा प्रणीत अनिरुद्धचम्पूकाव्य का कथानक स्पष्टतः श्रीमद्भागवतपुराण पर अवलम्बित है। देवराज की

वैष्णव परम्परा थी। अत: उन्होंने इस अद्वितीय कथानक के आधार पर अनिरुद्धचम्पू को विविध रंगों से सजाया है।

### अनिरुद्धचम्पू में प्रयुक्त रस, अलङ्कार तथा छन्द

कथानक से स्पष्ट है इसकी शृङ्गाररसगर्भित वीररसता। शृङ्गार आदि रसों का अनिरुद्धचम्पू में बड़ी खूबी के साथ प्रयोग किया गया है। पञ्चम उच्छ्वास में शृङ्गाररसस्फीत वर्णन किया गया है। इसमें वसन्त ऋतु उद्दीपक बनती है- 'मुग्धे चूतमरन्दमत्तमधुप: कालश्च कोऽप्यागमत् (५,५८); वसन्तवर्णन ४,१८५ से २१९ तक, शिशिर-वसन्तवर्णन ४,२०२ से २०५ तक; भव्य वसन्त वर्णन की छटा ३,९० से १२९ श्लोक तक दर्शनीय है। 'चूतचम्पकसरोजकेसरैरर्चयन्ति मदनं मृगीदृश:' (३,११३)। सम्पूर्ण तृतीय उच्छ्वास में मृगयाविनोद के वर्णन में वसन्त का गुम्फन हुआ है। चतुर्थ उच्छ्वास में रतिरस का वर्णन है। मदनसमरशूरा: (४,४५), मन्मथ: प्रियसमागमशंसी (४,४७), व्रीडया दरधृतां नववध्वा: कञ्चुकीं कुचगतां विचकर्ष (४,८४), नूपुरैश्चिरमकारि समन्तात् पञ्चबाणविजयस्तुतिघोष: (४,९३)।

शृङ्गारवर्णन ९,५४-६७; स्मरसंगर (५,७१); दिगम्बरीभूतबृहन्नितम्बा शातोदरी कामपि कान्तिमाप (५,९८); पादयोस्तव पतामि किङ्करी (५,९९); सा जजल्प मधुरं मृगेक्षणा। भूय एव ववृधे तथा तथा कामिन: सुरतरागसम्भ्रम: (५,१०२); रोमाञ्चरम्या पटु सीच्चकार (५,१०४), रतोत्सव (५,१०५)। रतान्त खुमारी- नयने मत्तचकोरचेष्टिते (५,१०७)। परिरम्भण-'परिरभ्य दृढं प्रियो भुजाभ्याम्' (५,१०८)। तुम्हारे बिना नहीं जी पाऊँगा- 'क्व साम्प्रतं यास्यसि न त्वया विना क्षणेऽपि जीवामि यत: सुमध्यमे' (५,१०९)। सुरतप्रबन्ध- 'उद्वेलरागरसयो: पुनरेव यूनोरासीदहो विविधबन्धविधानरम्य:। प्रत्यग्रवत् प्रियतर: सुरतप्रबन्ध:' (५,१११) विपरीतरति- 'स्वेदसिक्ततनुराकुलालुका सा रराज यदुवीरवक्षसि' (५, ११३)। रतान्तक्रीडा- 'व्रीडैव प्रसभमुपागता रतान्ते' (५,११४)। नवाङ्गनानीविमपाहरत्सु (७,४६)।

अनिरुद्ध ने उषा की वेणी बाँधी, कपोलों पर पत्राङ्कन, पैरों में लाक्षारस और स्तनों पर स्थासक (सुगन्धित लेप) लगाया—

***बबन्ध वेणीं नवबन्धबन्धुरां लिलेख पत्राणि कपोलयो: कृती।***
***उरोजयो: स्थासकसम्पदं व्यधाद् विचित्रलाक्षारसरञ्जनं पदो:।।५,११८।***

अनिरुद्ध ने सब अङ्गों को आभूषणों से सजा कर उषा से कहा— मुझे चुम्बन दो—

***विभूष्य सर्वावयवान् विभूषणैस्तमालपत्रं विरचय्य कौङ्कुमम्।***
***प्रयच्छ मे चुम्बनमम्बुजेक्षणे पणे प्रहस्येति चुचुम्ब स प्रियाम्।।५,११९।***

अनिरुद्ध के वक्ष:स्थल पर अलक्तक का चिह्न देखकर उषा की सखियों ने उपहास किया (५,१२१)। एक पलंग पर सोते हुए बातें करते-करते रात बीत गयी (५,१२०)। हल्लीसक नृत्य (५,११५), विविध क्रीडाओं द्वारा रमण (११५ पृ.)। परस्पर मुख विलोकन में एक क्षण का अन्तर भी असह्य हो गया था (५,१२४)। ५,२३ से लेकर ५३ श्लोक तक उषा की नखशिखान्त प्रशंसा का वर्णन।

### नखशिख वर्णन

स्वप्न में परस्पर दर्शन और प्रीति (१६४ पृ.)। गान्धर्व विधि से विवाह के पश्चात् रमण

(१६४ पृ.)। गान्धर्व विवाह में चित्रलेखा ने उषा का हाथ अनिरुद्ध के हाथ में दे दिया (१०३ पृ.)— 'दत्ता भूयात् ते सहचरी प्रीतिपात्रं चिराय' (५,२१)। ५,२३ से लेकर ५३ पद्यों तक उषा के नख-शिख की सौन्दर्यवर्णना। अनिरुद्ध ने उषा के साथ गान्धर्व विधि से विवाह करने के अनन्तर (१०३ पृ.) उसके मुख, कबरी, अलकावली, मुक्तावली, वेणी, नासामौक्तिक, ताटङ्क, नेत्रद्वयी, कटाक्ष, कृताञ्जन नयन, कुच-कपोल की पत्राङ्गुलि, कर, माणिक्य काञ्ची, माला, नखों का अलक्तक और अधर की स्वाभाविक लालिमा का सुन्दर वर्णन किया है।

कर्णारुन्तुदकोकिलाकलकल: काल: कथं यारस्यति (४,१८५)। उषा का प्रणयनिवेदन (४,२००-२०१), प्रणयविनयरम्यं वावदूकावभाणम् (४,२२९)। स्वप्न में परस्पर दर्शन और प्रीति (१६४ पृ.)। गान्धर्वविधि से विवाह के पश्चात् रमण (१६४ पृ.)। आकस्मिकोष्मणारम्यं कान्ताया: स्तनमण्डलम् (९,११०), कालोऽयं भोगिवल्लभ: (९,११२), नामुञ्चन् कृपणा इवार्थमभिका: कान्तास्तनं तन्वपि' (९,११३)। राजकुमारी के अङ्ग-प्रत्यङ्ग का शृङ्गारिक वर्णन- 'स्मरराजधानी' (४,१२३)।

**वियोगवर्णन**

**वियोगिनी दशा–**

*किञ्च स्विन्नतनु: सरोरुहमुखी मोहं मुहुर्गच्छति (४,१८८)।*
*चलति मलयमारुते शिव शिव सा परिवेपते लतेव (४,१८९)।*
*नयनगलितवारिसारिणीभि: (४१९४)।*

**वियोग में स्मरण–**

*आशासु भाति परितो दिवि दृश्यते च*
*स्वप्नेऽपि सा स्फुरति तिष्ठति जागरेऽपि।*
*धर्तुं मया प्रवितते बत बाहुपाशे*
*न ज्ञायते शशिमुखी क्व तिरोदधाति।।४,२०।*
*अनिशं मनसि स्थितिं विधत्ते सततं तिष्ठति चक्षुषोर्मृगाक्षी।*
*अपि दृश्यत एव दिक्षु नित्यं तदियं काचन मन्मथस्य सभा।।४,२०८।*

वियोगियों को चैत्र (वसन्त) की रातें काटना कठिन होता है—

*'नीयन्ते न वियोगिभि: कथमहो हा हन्त चैत्रक्षपा:' (३,१२७)।*

वियोग में सब विपरीत लगता है—

*दृष्टा मोहमहौषधिर्यदवधि स्वप्ने मयाऽजानता*
*कन्दर्पस्य ततो मनागपि मन: स्थैर्यं न धत्ते क्वचित्।*
*चन्द्र: कालति चन्दनद्रवरसो हाहा हलत्यङ्कके*
*माला व्यालति चन्दनाचलभवो मन्दानिलो ज्वालति।।४,२१०।*
*सौधोऽचलीभवति चन्दनपङ्किलोऽयं*
*दावानलीभवति पल्लविनी च शय्या।*
*लोको मृगीभवति भाविनि तां विना मे*

*मन्वन्तरीभवति च त्रुटिरार्तिभाजः।।४, २११।*

इन पद्यों में नामधातु और च्विप्रत्ययान्त प्रयोग दर्शनीय हैं।

**फुटपाकभावः**

*सम्भावितस्य मम धैर्यधनस्य नित्यं*
*तापः कथं बहिरुपैतु वचोभिरेषः।*
*अन्तः प्रसर्पयति तत् कलयत्यमुष्मिन्*
*दीप्ते मदीयहृदयं पुटपाकभावम्।।४, २१४।*

**विरहवारिधि**

*वसति कुत्र सरोरुहलोचना नयतु को नु तदन्तिकमद्य मां*
*मयि विचिन्तयतीति विचेतसि प्रकटितासि कुतश्चन वेधसा।।*
*स्वागतासि नियतंकरणीये वेधसस्त्विह मूर्तिमतीच्छा।*
*मज्जतो विरहवारिनिधौ मे हस्तधारणमतः कुरु भद्रे।।४, २१७।।*

**वीररस**

बाणासुर को स्वसमान प्रतियोद्धा की खोज थी कि कोई उससे युद्ध करे। वह सहस्र भुजाओं की खुजली युद्ध द्वारा मिटाना चाहता था। उसने शिव से युद्धाभिलाषा की याचना की। महेश के आशीर्वाद से वह अतिप्रसन्न हुआ कि तेरी युद्धाभिलाषा पूर्ण होगी (६,१८३ के बाद का गद्य)। युद्धमहोत्सव का वर्णन (१६३ पृ.)। वीररस की एक झलक—

*दैत्यानीकमचूर्णयच्चटचटच्चुर्यत्करोटिक्षणात् (१, १८७)।*

वीररस का भव्यवर्णन ५,१५७ से लेकर १६५ श्लोक पर्यन्त तथा १७२ से लेकर १८७ श्लोक पर्यन्त हुआ है।

**ऋतुवर्णन**

निदाघवर्णन (५,१२५ से १४७ श्लोकपर्यन्त)। वर्षावर्णन (५,१५१ श्लोक से १५४ श्लोकपर्यन्त) तथा (५,२४१ से २७० श्लोक पर्यन्त)। इसमें मयूर, चातक, इन्द्रगोप इत्यादि का मनोहर वर्णन हुआ है। वर्षर्तु में विरहिणी दशा का चित्र उकेरा गया है (५,२६७-६९)। वियोगिनी कथय कथं नु जीवेत् सा (५,२६८)। शरद्वर्णन (६,१९७-२१८) अकलयत् स्वच्छां श्रियं शारदीम् (६,१९८); शुद्धाम्बरा स्त्रीव ऋतोरपाये (६,१९९)। भव्य वसन्त वर्णन (३,९० से १२९ श्लोक तक)। सम्पूर्ण तृतीय उच्छ्वास में मृगयाविनोद के प्रसंग में वसन्त वर्णन हुआ है। शिशिर वसन्त वर्णन (४,२०२-२०५); वसन्त वर्णन (४,१९५ से २१९ तक)। हेमन्त ऋतु के भी उदाहरण हैं (९, १०६-९)।

इस प्रकृति वर्णन में बकुल, कुरवक, तिलक, मधूक, चम्पक, आम्र, केसर, रसालपादप, प्रियाल, शेफालिका, स्थलपद्म इत्यादि विविध पादपों का वर्णन हुआ है। अशोक पादप को सुभ्रुवों के पादाघात प्रदान का मनोहारी चित्रण हुआ है (३,१०१)।

**अलङ्कार**

पद्यों के अतिरिक्त गद्य भी अलङ्कारों से सुसज्जित है इस अनिरुद्ध चम्पूकाव्य में। इसमें

अनुप्रास, उपमा, रूपक, यमक, परिसंख्या, विरोधाभास इत्यादि अलंकारों की छटा बिखरी है। यहाँ दो-तीन उदाहरणों द्वारा स्थालीपुलाकन्यायेन कवि की काव्यकला परीक्षा पर्याप्त होगी। कृष्ण पक्ष का चन्द्रमा दिन-प्रतिदिन घटता जाता है उसी प्रकार विरहिणी नायिका की देहयष्टि भी क्षीण होती गयी—

'बभूव शुक्लेतरपक्षसम्भवा शशाङ्कलेखेव कृशा दिने दिने (४,१६९)। तद् गृहं शब्दभूयिष्ठं शब्दशास्त्रमिवाभवत्' (२,२०), कालस्य दन्ता इव दुर्निवाराः (८,३), कटाक्षलेखा इव सिन्धुयोषिताम् (६,२१७), वाराङ्गनानूपुरशिञ्जितेन छात्रा इवाभ्यासपरा गृहा ये (६,१३१)। तदङ्के पारितथ्येव शोभस्व वरवर्णिनि (४,१७१)। रक्ताम्बरा प्रव्रजितेव दूती सन्ध्या वधूनामभिसारशैघ्र्यम्' (४,१२)। २३६-३७ पृष्ठों का संपूर्ण गद्य उपमालंकार से परिपूर्ण है।

अब आप गद्य में ***शब्दी परिसंख्या नामक अलंकार*** का उदाहरण देखिए—
'वृषमवितुमवतीर्णोऽपि वृषं जघान' से लेकर 'आरोहन् प्रकृतयो नागं नागम्' (४,५ पृ.) यहाँ तक सम्पूर्ण वाक्य में प्रश्नरहित होने पर भी निषेध के द्वारा इतर के निराकरण होने से शाब्दी परिसंख्या नामक अलङ्कार की संघटना हुई है।

***आर्थी परिसंख्या नामक अलङ्कार*** का उदाहरण देखिए—
'तस्य केशेष्वेव मालिन्यं न चरितेषु, भ्रुवोरेव कौटिल्यं न मनसि, रङ्ग एवातङ्को नाङ्गे मध्य एव तनुता न यशसि, मतङ्गजेष्वेवावग्रहो न देशेषु..... (३,४५)। 'शाब्दिकेष्वेव परापवादचर्चा' (१७५ पृ.) (यत्र चापशब्दो रणेषु न वैयाकरणेषु' (१७६ पृ.)। 'यत्र चारित्रक्षेपो नौकासु न कुलकामिनीषु' (१७६ पृ.); 'जनस्तापसहितो न तापसहितः' (१७६ पृ.) इत्यादि अनेक स्थलों में देवराज की स्वोपज्ञता के दर्शन होते हैं। ये पूर्ववर्ती चम्पूकाव्यों या गद्यकाव्यों से अनुकृत नहीं हैं। इनमें अनुप्रास के भी दर्शन होते हैं।

गद्य में 'इव' का पौनर्वृत्त्य— स च खर्व इव विनयेन प्रांशुरिव प्रतापेन, स्मित इव विवेकेन, मृदुरिव सौजन्येन, जड इव गाम्भीर्येणोन्मत्त इव वात्सल्येनाक्रान्त इव चौर्येण' (२,७४ के अनन्तर का गद्यभाग) इत्यादि।

अनेकत्र ***ऐतिहासिक उपमाओं*** की झलक मिलती है। यथा- 'वाग्ग्मी वाचस्पतिरिव' (६,६९), 'अद्वैतवाद इव' (५,१५३), 'मैनाक इवाम्बुराशौ' (५,१७५), हरनेत्रेऽग्निरिव।

दशावतारों में ***श्लेषसंकीर्णा आर्थी परिसंख्या*** नामक अलङ्कार की छटा देखिए—

'यश्च मीन इव धृताखिलश्रुतिः, कूर्म इव सहसा मन्दराधाररसोल्लासः, वराह इवोन्मूलितार्जुनः, दाशरथिरिव सुमित्रानन्दनानुरक्तः, बलदेव इव धेनुकान्तकरः, बुद्ध इव याज्ञिकावमानक्षमः, कल्किरिव यवननाशकृतक्रमः (४ पृ.)।

***यमक अलङ्कार*** अनेकत्र प्रयुक्त हुआ है—

***अन्ते वृष्टः फेरवाणां रवाणां***
***पद्यां प्राप्तो यो नदीनां न दीनाम्।***
***दृष्टिं कृत्वा रूक्षतारां क्षतारां***
***द्वीपी तृप्तो मारयेतं दयेतम्।। ३, ४२।***

'कामकाण्डे नवेऽपि तां 'कामकाण्डेन वेपिताम्' ९,११५; 'न हरितो हरितोषमजीजनत्' (९,११६), स्मरयशोरयशोधितभूतलम् (९,११९), 'उपवनं पवनं बुबुधे हरिः' (९,११९), न हि मतो हिमतो मदकृत्परः (९,११९); मृगमदोऽगमदोज इवातनोः (९,१२०); 'प्रमदया मदयाचितचुम्बनः' (९,१२१); न सुरयासुरयादनुरक्तया (९,१२१), 'प्रियतमोयतमोऽहमचुम्ब्यत' (९,१२१); 'स्तम्बेरमा रमाभर्तुः' (९,१२४) द्वीपी तृप्तो मारयेतं दयेतम् (३,५३); 'नरो दयिता न रोदयिता' (१०६ पृ.)।

**विरोधाभास**

*त्वं दीनबन्धुश्च न दीनबन्धुः*
*नाम्नाऽसि कृष्णो यशसा सितोऽसि।। (६,१६७)।*

'द्वारवत्यपि रिपूणामद्वारवती' (९३ पृ.), पराङ्मुखत्वेऽपि न सम्मुखत्वम्' (४,१५१)।

देवराज ने निम्नलिखित पद्य में **एकावली अलङ्कार** का प्रयोग किया है किन्तु वह स्पष्टतः भट्टिकाव्य के 'न तज्जलं यन्न सुचारुपङ्कजम्' (२,१९) की अनुकृति पर रचा गया है—

*न तद् वनं यत्र न पुष्पितो द्रुमो*
*न स द्रुमो यत्र न मत्तकोकिलः।*
*न कोकिलः सोद्गतपञ्चमो न यो*
*न पञ्चमः सोऽपि हरेन्न यो मनः।।३,१२०।*

**छन्दों की मञ्जूषा**

देवराज की छन्दों पर अभूतपूर्व पकड़ है। उन्होंने इस अनिरुद्धचम्पू में कुल मिलाकर १६४३ पद्य निबद्ध किये हैं। उनमें १. अनुष्टुप्, २. वंशस्थ, ३. इन्द्रवज्रा, ४. उपेन्द्रवज्रा, ५. उपजाति, ६. विद्युन्माला, ७. रथोद्धता, ८. स्रग्विणी, ९. प्रमाणिका, १०. मालिनी, ११. शालिनी, १२. वसन्ततिलका, १३. शिखरिणी, १४. हरिणी, १५. स्वागता, १६. प्रमिताक्षरा, १७. इन्द्रवंशा, १८. मत्तमयूरी, १९. प्रहर्षिणी, २०. मञ्जुभाषिणी, २१. पञ्चचामर, २२. पृथ्वी, २३. रुचिरा, २४. स्रग्धरा, २५. मन्दाक्रान्ता, २६. शार्दूलविक्रीडित, २७. जलोद्धतगति, २८. नर्दटक, २९. माणवक, ३०. द्रुतविलम्बित, ३१. तोटक, इत्यादि छन्द प्रयुक्त हुए हैं। अनेकत्र विषमवृत्त और मात्रिक छन्दों का भी प्रयोग हुआ है।

**लोकदृष्टि**

लोकोक्ति है 'कवयः किं न पश्यन्ति' अर्थात् कवि की दृष्टि से कुछ भी ओझल नहीं होता है। कवि बहुश्रुत, लोकद्रष्टा, बहुशास्त्रज्ञ और गुणदोषविवेचक होता है। विधाता की सारी सृष्टि का ज्ञान कवि को होना चाहिए। लोक में जो कुछ है सूक्ष्मेक्षिकया सबसे अभिज्ञता प्राप्त करनी चाहिए। प्राकृतिक दृश्यों का स्वयं निरीक्षण आवश्यक है। उसे प्राणियों के स्वभाव से भी परिचित होना चाहिए। क्षेमेन्द्र का परामर्श है कि कवि को सम्पूर्ण शास्त्रों, सभी विद्याओं और सभी कलाओं आदि से परिचित होना चाहिए। देवराज के इस चम्पू में प्रायः ये सभी लक्षण दिखते हैं। इसमें शब्दनैर्मल्य, अर्थवैमल्य और रसवैमल्य ये तीनों गुण विद्यमान हैं।

इस अनिरुद्धचम्पूकाव्य में शबर गृहों (३८०), वनकन्द, तिन्दुकफल (३,८२), आश्रम-वर्णन (३८२), तपस्याप्रभाव (३,८३), द्राविड़ कामिनी, चोलाङ्गनाओं के स्वभाव का चित्रण किया गया है। लुण्टाका दाक्षिणात्याः (३,९०), कावेरीसुहृदः, लाटलुटिता, कार्णाटकान्ताः (३,९१) इत्यादि से ज्ञात होता है कि कवि ने विविध प्रदेशों में भ्रमण करके लोकदृष्टि प्राप्त की थी। देवराज नागरिक और नागरिकों की वेषभूषा पर भी प्रकाश डालना नहीं भूले (५,५७)। उन्होंने राजनीति के विषय में २४ पद्यों की रचना कर डाली (६,१०३-१२६)।

अनिरुद्ध के निगडबद्ध होने पर उषा मूर्च्छित हो गयी (१२७ पृ.)। १३ पद्यों में उषा का विलाप (५,१९३-२०३)। अनिरुद्ध ने सान्त्वना भिजवायी (१२८ पृ.)।

शाकुन्तलम् के 'शुश्रूषस्व गुरून्' की अनुकृति पर रचित यह पद्य मननीय है—

***सुमहति कुले जाता दत्ता ततोऽपि महत्तरे***
***सुकृतविभवैर्भोग्यं प्राप्ता प्रियं जगतः प्रियम्।***
***गुरुषु दयिते देवे वृद्धासु यातृषु च जामिषु***
***व्यवहर तथा वत्से यामो यथा न वयं ह्रियम्।।१,१०४।***

हड़बड़ी में स्त्रियाँ और पुरुष वस्त्र एवं आभूषण उलट-पुलट कर पहिन लेते हैं। महाभारत में विराट पर जब कौरवों ने आक्रमण किया था तब वृहन्नला ने कवचादि को उलट-पुलट कर धारण किया था। वह हड़बड़ी में भी हो सकता है और जानबूझ कर भी। किन्तु अश्वघोष के बुद्धचरित और कालिदास में इसका स्वाभाविक चित्रण हुआ है। अनिरुद्धचरित में वरदर्शन की त्वरा में एक महिला आभूषणों को उलट-पुलट कर पहिन लेती है—

***एकस्यां कलितवता कपोलपालौ पत्रालीं श्रुतमितरत्र तामकृत्वा।***
***आयाता झटिति गवाक्षमीक्षमाणा प्राद्युम्निं परिहसिता सखीभिः।।९,२२।***
***केयूरं वलयपदे निवेश्य वामा सैमन्तं मणिमपिनह्य कण्ठदेशे।***
***सीमन्ते कलितललाटिका च काचित् सम्भ्रान्ता करधृतवीटिका प्रपेदे।।९,२३।***

बाणासुर के मन्त्री कुम्भाण्ड ने उषा का कन्यादान किया। बरातियों को जो भोज दिया गया उसका वर्णन सोलह पद्यों में किया गया है (९,६९-८४)। भोजन के समय तरुणियों द्वारा हास-परिहास किया गया। श्रीकृष्ण को हँसाने के लिए नारद की दाढ़ी में दही लगा दिया (९,८२) और बराती नाचने लगे (९,८६)। नाट्य प्रदर्शन हुआ (९,८७)। अप्सराओं ने नृत्य किया, शिल्पियों ने चार प्रकार के वाद्य बजाये (९,८६)। विवाह के पश्चात् बहुत दिनों तक शोणितपुर में बरात टिकी रही (९,९०)।

## आध्यात्मिकी दृष्टि

आध्यात्मिक दृष्टि से देवराज परिपुष्ट थे। उन्होंने इक्कीससर्गीय नानकचन्द्रोदय महाकाव्य के प्रत्येक सर्ग के प्रारम्भ में सरस्वती-वन्दना की है। वहाँ (८,५६-५७) दो पद्यों में श्रीकृष्ण के लावण्य का अप्रतिम वर्णन किया है। यहाँ अर्धनारीश्वरत्व (४,१२३) का दिग्दर्शन कराया है। निगडबद्ध अनिरुद्ध ने कुलदेवता की वन्दना की है (५,२०५-२३७)। भवानी दुर्गादेवी की स्तुति और अष्टम उच्छ्वास में विष्णु-शिवस्तुति तथा नारदकृत कृष्णप्रशंसा (६,१५५-१७२)।

तन्त्रशास्त्रीय षट्चक्रभेदन का वर्णन, परा, पश्यन्ती, मध्यमा तथा वैखरी का विवेचन करते हुए दुर्गा देवी को भोगमोक्षदा बताया है। काली के स्वरूप निरूपण के साथ चामुण्डा और विन्ध्यवासिनी का स्मरण किया गया है। सर्वमङ्गला (५,२३५); एकानंशा (१३४ पृ.) ने दर्शन देकर अनिरुद्ध को आश्वस्त किया।

**अनिरुद्धचम्पू की भाषा-बानगी**

यद्यपि रस, अलङ्कारों एवं छन्दों द्वारा भाषा-भावाभिव्यक्ति होती है, तथापि भाषाभिव्यक्ति के अन्य प्रकार भी हैं जिनसे भाषा की प्रकृति को परखा जाता है। उनमें काकु, शब्दों की पुनरावृत्ति इत्यादि अनेक प्रकार हैं, जिन्हें हम यहाँ परखेंगे। ***'नु' शब्द की पुनरावृत्ति*** से प्रश्न और तर्क दोनों उपस्थित होकर भावाभिव्यक्ति को दृढ़ता प्रदान करते हैं। यथा— 'गुणगौरवान्नु बुद्धिसौष्ठवान्नु दम्भविरहान्नु दैवयोगान्नु (८७ पृ.)।

***सह शब्द का पौनर्वृत्त्य***- 'मयि परमसौ विश्वसिति सह स्नाति सहाश्नति, सह पिबति, सह विहरति, सह स्वपिति, सहोत्तिष्ठति, सह निषीदति, सह कुप्यति, सह प्रसीदति।

***नकार का प्रयोग***- किञ्चिदपूर्वं न पश्यति, न शृणोति, न जिघ्रति, नास्वादयति, न स्पृशति (८७ पृ.)।

**किमिति शब्द का पौनर्वृत्त्य**

किमिति सौकुमार्यसाराणि ताम्यन्ति तवाङ्गानि, किमिति बन्धुवर्गमखिलमेव संशयितजीवितं विदधती मुहुर्मूर्च्छसि, किमिति कतिपयदिनानि मदन्तिके नागतासि, किमिच्छसि, किं करवाणि, किं ददानि (८९-९० पृ.)।

**क्रियाओं का पौनर्वृत्त्य**

निद्रा-निःश्वास-दाह-मोह-प्रलापोत्तरं ताम्यति, नाभिनन्दति, प्रियताम्बूला प्रियताम्बूल-वीटिकामपि........किमपि चिन्तयति, किमप्यालिखति, किमपि सम्मन्त्रयति, किमपि वीक्ष्येव प्रसीदति, जिघृक्षति, चुचुम्बिषति, पुनस्तेन वियुक्तेवोच्छ्वसिति, विषीदति, विलपति, चलति, लुठति, प्रस्वपिति (९० पृ.)।

**'किम्' शब्द का पौनर्वृत्त्य**

***केनाम्बुधिर्नियमितो दृढसेतुबन्धात्***
***कालानलो व्यरचि केन च रुद्धशक्तिः।***
***केनार्यमा बलवता स्थगितः कराभ्यां***
***मेरुः प्रकम्प्य भुवि केन निपातितश्च।।५,१७७।***

**संभाषण और गद्य की भाषा**

आः कः कालदर्वीकरस्य दंष्ट्रामाक्रष्टुमोजायते (११९ पृ.)। उक्तिप्रत्युक्तियों की संभाषण भाषा अतीव मनोहर है (पृ. ९०-९२)। उषा तु विषमविषधरदंशशङ्काकुल-कृत्तमूला कदलीव सहसा पपात (१२७ पृ.)।

**ध्वन्यनुकरणात्मक शब्दप्रयोग**

देवराज ने प्रसङ्गोचित ध्वन्यनुकरणात्मक शब्दों का प्रयोग करने में कृपणता नहीं बरती

है। यथा—

छर्छरध्वनि: (८५ पृ.)। फेत्कारिषु फेरवेषु काङ्कारमुखरेषु काकेषु, घूत्कारघोरेषु घूकेषु, चीङ्कारिणीषु चीरीषु, चूँ चूँ चञ्चलनाय (४,३४), चटुलचूङ्कृतैः (७० पृ.), सनसनायमान (८,१९५), चटचटायमान (२२९ पृ.)। कौक्षेयकाणां झणझणायितेन, पतत्रिणां सनसनायितेन।

**दुर्लभशब्दप्रयोग**

अनिरुद्धचम्पू में कुछ ऐसे शब्दों का प्रयोग हुआ है जो या तो द्व्यर्थक हैं या जिनकी व्युत्पत्ति स्पष्ट नहीं है। अधिकांशत: पाद-टिप्पणी में उन पर विचार किया गया है। यहाँ मैं एक दो शब्दों को निदर्शनार्थ उपस्थित करता हूँ। उनमें एक है 'निविरीस'। पाणिनि ने 'नेर्बिडज्विरीसचौ' (५,२,३२) द्वारा 'नि' उपसर्ग से बिडच् और विरीसच् प्रत्ययों का विधान नत नासिका अर्थ में किया है। काशिका ने 'निबिडा: केशा:' द्वारा इनका सघन अर्थ भी स्वीकृत किया है। किन्तु 'निविरीस' के विषय में मौन साध लिया है। अनिरुद्धचम्पू में सघन अर्थ में 'निविरीस' का प्रयोग किया है। शिशुपाल वध (७,२०) इसका प्रयोग सघन अर्थ में हुआ है। किन्तु इसका पाठ 'निविरीश' भी मिलता है। ध्यातव्य है कि तद्धित के बहुत से प्रत्यय शब्द से घड़ लिये गये हैं। यथा 'मात्र' शब्द से 'मात्रच्' प्रत्यय और कट से कटच् प्रत्यय। यहाँ 'बिड' शब्द से बिडच् प्रत्यय घटित हुआ है। विड (बिड) एक प्रकार का नमक है जिसे देशभाषा में खार या खारी कहते हैं। बिडीश >विरीश>विरीस>निविरीस।

इसी प्रकार का एक दूसरा शब्द है— 'वार्ध्रीनसम्' (३,८४)। यह तैतिरीय संहिता एवं आपस्तम्ब में प्रयुक्त हुआ है। 'चर्मणोऽञ्' (पाणिनि ५,१,१५) सूत्र पर काशिकावृत्ति में उदाहरण है 'वार्ध्रम्'= चमड़ा। अमरकोष चर्ममयी रज्जु अर्थ में 'वर्ध्री' शब्द को दरसाता है। चौरादिक 'वर्ध छेदने' धातु से इसकी निष्पत्ति होती है। वर्द्धकि: = लकड़ी छीलने काटने वाला बढ़ई। जिसका चमड़ा मोटा हो और नाक (उभड़ी) हो वह है वार्ध्रीनस = गैंड़ा। वस्तुत: 'पूर्वपदात् संज्ञायामग: (८,४,३) इस पाणिनीय सूत्र से णत्व होकर 'वार्ध्रीणसम्' पाठ होना चाहिए।

निध्यम् (६,१०८) = दुर्निरीक्ष्यम्, हेवाकिन: (१४५ पृ.) = अभ्यस्त, लीन। यह शब्द देशीभाषा की निधि है। 'हेवा' काश्मीरी या मराठी में प्रयुक्त हुआ है। ११वीं शताब्दी के उत्तरार्ध में विद्यमान काश्मीरी कवि बिल्हण ने विक्रमाङ्कदेवचरित में तथा सुधाकर ने 'आर्यविद्या' में इसका प्रयोग किया है। पाषण्ड या पाखण्ड का निर्णय ६४ पृष्ठ की टिप्पणी में द्रष्टव्य।

**व्याकरण प्रयोग**

कुछ जटिल शब्दों का भी प्रयोग किया है देवराज ने। यथा 'अतृणेट्'— द्विजत्राणायातृणेट् (३५ पृ.), **प्रेरणार्थक** सामान्य भूतकाल (लुङ्) के अनेक सुन्दर प्रयोग भी हुए हैं। यथा- समचूकुचत् (४,४), समबीमवत् (७० पृ.), अभ्यतीतडत् (४,३८), अवीवदत् (४,७८), अजिग्रहत् (१०३ पृ.), व्यजिज्ञपत् (१०३ पृ.), अजीहरम् (५,१९६), अशिश्रियत् (४,१०३)। आत्मनेपद के सामान्य भूतकाल में 'प्रागल्भिष्ट' (५,५७), कर्मवाच्य में 'व्यवेचि' (५,२९)। देवराज क्रियाक्रीडा करते हैं। परोक्षभूत काल में मदयाम्बभूव (४,३८), कलयाञ्चकार (४,३८),

बिभराम्बभूव (३९) इत्यादि। ***नामधातु प्रयोगों का तो बाहुल्य है।*** निदर्शनार्थ कुछ प्रयोग प्रस्तुत हैं। यथा- ओजायते (११९ पृ.), लोहितायति नयनकाणे (१५२ पृ.), अतिवीरायते (५,१५९), ओजायितुम् (५,१६५), कण्डयति (६,१००), विमनायमानः, उन्मनायमानः (१६४ पृ.), अन्यथयितुम् (४,६), असिद्धान्तयत् (४,३९), लघयस्व (६,१९५), मूकन्ति (५,२२९); दासन्ति (५,२२९), रसयाम्बभूव (६,१३२), ओजायामास (४,४४), अभिषेणय (१६५ पृ.) इत्यादि।

***इच्छार्थक सन्नन्त प्रयोग*** के कुछ निदर्शन— आचिंस्कन्त्सून् (२,४६), जिगणयिषुः, प्रतितीर्षुः, तथा पिधित्सु—

***जिगणयिषुः परमाणून् प्रतितीर्षुः सागरं दोर्भ्याम्।***
***अञ्जलिना च पिधित्सुर्व्योम जनस्ते गुणी स्तौति।।६,१७१।***

अनिच्छार्थक सन्- चिकित्समानैः (२०८ पृ.)।

***च्वि प्रत्यय की छटा*** भी देखिए— सफलीकुरुष्व (६,१९५), पिञ्जरीकृत्य (७,८), व्याकुलीचकार (२१५ पृ.), समयाचकार (१३४ पृ.) यहाँ डाच् प्रत्यय च्व्यर्थक है— 'समयाच्च यापनायाम् (५,४,६०)।

***णमुल् प्रत्यय*** का प्रयोग देखिए—

***स्नायं स्नायमनुष्णवारिषु सरित्पूरेषु पान्थश्रमं***
***क्षायं क्षायमनोकहालिनिबिडच्छायं क्षणं संश्रयन्।***
***धारं धारमपि स्तनेषु सुदृशामामोदभारं गुरुं***
***मन्दं मन्दमुपैति चन्दनगिरेः श्रान्तः समीरोऽध्वगः।।३,८९।***

***उक्तिशैली या वाग्व्यवहार शैली*** (Phrase)

समूलकाषं कषितुम् (६,१२०) इत्यादि

***अपाणिनीय प्रयोग***

√नम् (णम) धातु परस्मैपदी है। किन्तु परि उपसर्गपूर्वक इस धातु का व्यावहारिक प्रयोग आत्मनेपदी में प्राप्त होता है— परिणमते। किन्तु यह अपाणिनीय है। देवराज ने एक स्थान पर इसका प्रपूर्वक प्रयोग आत्मनेपद में किया है— 'कः प्रणमेत' (६,५९)। एक स्थान पर दो भाव प्रत्ययों का एक साथ प्रयोग हुआ है जो यद्यपि अपाणिनीय प्रयोग तो नहीं माना जा सकता किन्तु व्यवहारविरुद्ध अवश्य है— दैन्यता (९,८८)। एक स्थान पर परितः के योग में षष्ठी विभक्ति का प्रयोग हुआ है— दैत्येश्वरस्य परितः शिविकासहस्रैः (९,३२)।

**पौराणिक इतिवृत्त**

देवराज शर्मा ने पौराणिक इतिवृत्त अथवा कथानक उद्धृत किये हैं। कहीं उपमा के रूप में तो कहीं वर्ण्य विषय के रूप में—

***नासत्यनिर्माणधृतावधानः***
***पुरूरवाः सृष्टिगृहीतशिल्पः।***
***नलेन लब्ध्वा स्थिरतां करस्य***

*कृतस्मरोऽमुं विदधे विधाता।।(४, १७७)*

इतिवृत्त में उनसे चूक भी हुई है।द्वापर युग में बोधिसत्त्व की स्थिति नहीं थी। किन्तु कवि ने अनिरुद्धचम्पू में बोधिसत्त्व का नाम प्रस्तुत करके इतिहासानभिज्ञता प्रकट की है। यद्यपि बौद्धधर्म में बोधिसत्त्वों की चिरन्तन परम्परा मानी गयी है तथापि यह पौराणिक इतिवृत्त तथा इतिहास के विरुद्ध है—

*न बोधिसत्त्वं बहु मन्यते जनः*
*कृपाभरेणास्य कृतात्मतेजनः।।(७, ११८)।*

षष्ठ उच्छ्वास में कवि ने उस कथा का स्मरण किया है जिसका उल्लेख पंचतन्त्र में है। इसमें भी कवि की चूक हुई है—

*श्रूयते हि पथिकः सुखं स्वपन् कर्कटेन भुजगान्निवारितः (६, ५५)।*

**सामान्य सम्पादन से पाण्डुलिपि के सम्पादन की भिन्नता**

सम्पादन शब्द एडिटिंग् (editing) का अनुवाद है। पत्र-पत्रिकाओं के सम्पादन से पाण्डुलिपि के सम्पादन में सर्वथा भिन्नता है। पत्र-पत्रिकाओं में मुद्रित होने वाले लेखों की भाषा को शुद्ध एवं प्रकाशन योग्य बनाकर प्रूफरीडिंग द्वारा उसे छापने मात्र का नाम सम्पादन है। अनेकत्र मुद्रित पुस्तक को प्रूफरीडिंग द्वारा पुनः छापकर भूमिका लिख देने मात्र को सम्पादन कह दिया जाता है। बहुत्र विना भूमिका के ही मुद्रित पुस्तक को सम्पादित कह दिया जाता है। कृष्णकविविरचित 'मन्दारमरन्दचम्पू' ऐसा ही ग्रन्थ है जिस पर भूमिका नहीं लिखी गयी, केवल प्रूफरीडिंग करके मुद्रित कर दिया गया है। किन्तु उसके सम्पादक हैं पण्डित केदारनाथ शर्मा और संशोधक हैं वासुदेव शर्मा। इसे सन् १९२४ में निर्णयसागर प्रेस ने मुद्रित किया है। इसमें कहीं भी कोई पादटिप्पणी भी विन्यस्त नहीं हुई है। इससे स्पष्ट हुआ कि भ्रान्तिवश प्रूफरीडर को सम्पादक मान लिया जाता है।

**पाण्डुलिपि के सम्पादन की विधि**

पाण्डुलिपि के सम्पादन में पहला कार्य होता है— संबद्ध ग्रन्थ की पाण्डुलिपियों का चयन। यदि तीन पाण्डुलिपियाँ प्राप्त हैं तो पाठशुद्ध्यनुसार एक को मूल में रखकर दोनों का क ख के रूप में क्रमनिर्धारण करना। दूसरा कार्य है पाण्डुलिपियों का सुवाच्य अक्षरों में प्रतिलिपिकरण। तीसरा कार्य पाठ मिलान का होता है। पाठभेदों को पादटिप्पणी में रखना। चतुर्थ कार्य है शुद्ध अशुद्ध पाठ का विवेचन। पाँचवाँ कार्य है त्रुटित अक्षरों या पदों की ऊहा करके उन्हें कोष्ठक में लिखना अथवा उन्हें यथास्थान संनिविष्ट करते हुए निर्देश पादटिप्पणी में करना। छठा कार्य है परिशिष्ट बनाना और सातवाँ कार्य है- सम्पूर्ण ग्रन्थ का मन्थन करके विषय वर्गीकरणपूर्वक भूमिका लिखना। वस्तुतः किसी भी पाण्डुलिपि का सम्पादन एक व्यक्ति साध्य नहीं होता। उसके लिए कम से कम तीन विद्वानों का साहचर्य अपेक्षित रहता है।

**अनिरुद्धचम्पू की पाण्डुलिपि का संपादन**

इसका हस्तलेख मुझे सरस्वती भवन पुस्तकालय से प्राप्त हुआ। इसके प्रतिलिपिकरण की तिथि संवत् १८४७ अंकित है। इसका द्वितीय हस्तलेख बँगलादेश के राजशाही पुस्तकालय में

विद्यमान है। अनेकविध पत्राचार करने पर भी सफलता प्राप्त नहीं हुई। अत: मुझे इसी हस्तलेख की प्रतिलिपि करानी पड़ी। प्रथम तो गद्य पद्य दोनों को बिना व्यवधान के गद्य रूप में लिखा गया है। द्वितीय न तो पदच्छेद किया गया है और न ही विराम का चिह्न लगाया गया है। हस्तलिपि की आकृति तो सुषम है किन्तु प्रकृति है पर्याप्त विषम। कहीं अक्षरों की विषमाकृति है, कहीं अक्षरच्युति तो कहीं पदच्युति।

प्रतिलिपिकर्ता थे तो साहित्याचार्य किन्तु उनका कार्यक्षेत्र था ज्योतिष। उन्हें जैसा समझ में आया लिख दिया। प्रतिलिपिकर्ता श्रीचतुर्वेदी ने अपनी बुद्धि लगाकर नये पाठभेद उत्पन्न कर दिये। यथा 'प्रलयहुतमुग्घेतिरिति या' के स्थान पर 'प्रलयहुतमुग्धेतिरितिया' लिख दिया। अनेक स्थानों पर मनमाने पदच्छेद करके 'दशरा मशरा' कर दिया। इसलिए सम्पादक को बार-बार मूल पाण्डुलिपि का सहारा लेना पड़ता था। श्रीचतुर्वेदी ने 'ख' के स्थान पर 'ष' लिख दिया—

'गौर्या धातुविषमविशिखस्य' के स्थान पर लिखा 'गौर्याधातुविषमविशिषस्य' (५,२१)। एक बार मुझे एक वैवाहिक निमन्त्रण पत्र मिला जिसमें वर का नाम लिखा था चन्द्रशेषर द्विवेदी। पाण्डुलिपि में सर्वत्र 'ब' के स्थान पर 'व' लिखा गया है। कहीं-कहीं य के स्थान पर 'प' लिखा गया है। इस कारण 'स्पन्दमान' और 'स्यन्दमान' (२७५ पृ.) में भेद करना सरल नहीं है। इसी प्रकार—

'कलयति तिलपर्णी पंकमाप्याय्य सद्य:' अथवा 'कलयति तिलपर्णी यं कमाप्याय्य सद्य:' (६,७७)।

कहीं-कहीं 'प' और 'म' एक रूप में लिखे गये हैं— पुष्णन्<>मुष्णन्। कहीं-कहीं म और य की एकरूपता दिखती है। यथा—

***अत्रभवता सनाथस्य मे न कयापि चिन्तया भवितव्यम्***
***अत्रभवता सनाथस्य येन कयापि चिन्तया भवितव्यम्***

संकल्पोपरतै: के स्थान पर लिखा है 'संकल्पोपवतै:' (४,१८४), वदन्वभारस:< वदन् बभार स: (९,९५)। इन सबके पाठभेद निर्णय में बहुत समय लगा है। बहुत स्थलों में मुझे खण्डित पादपूर्ति करनी पड़ी है। 'र' और 'ज्ञ' की लिपि में बहुत अन्तर नहीं है (१३२,१३३)। सपदि< >स यदि (२,२७) में महान् भ्रम उपस्थित होता है। ***वर्णविपर्यय-*** ममावस:< >ममासव: (२७५ पृ.)। ***यकार के स्थान पर थकार***— महेशकान्तथाज्ञप्तो< >महेशकान्तयाज्ञप्तो (९१ पृ.)। ***'म' के स्थान पर सकार***-मानमसुं जनं< >मानममुं जनम् (९१ पृ.)। अभिमतस्य च पलमेव व्रजामि< >अभिमतस्य चपलमेव व्रजामि (९१ पृ.)। अवरतु< >अवतरतु (८८ पृ.)। **अक्षरच्युति** - 'नितान्तरङ्गे< >नितान्तमन्तरङ्गे' (९० पृ.), 'दहनुर्निरीक्षत:पुरम्< >दहनदुर्निरीक्षमन्त: पुरम्' (९१ पृ.)। 'पण्यवाद >< परापवाद (१७५पृ.)। गण्डशैललकटितकठ< >गण्डशैलकटिकट' (१७७ पृ.), वेषितम् < >वेपितम्। चन्दाराविन्दवातां सुभय'< > चन्दनारविन्दवातांशुभयम्'। चेद्य: >चेट्य: (८९ पृ.)। ***अतिकठिन भ्रष्ट पाठ***— शरनिकरमयोह्यखै: शरै:प्रादुरासीत् <> शरनिकरमयोग्रे: स्वै: शरै: प्रादुरासीत् (८, १६४)।

सभी पाठभेदों का वर्णन भूमिका में देना शक्य नहीं है। यहाँ केवल उनका निदर्शनमात्र

उपस्थित किया गया है। इससे अधिक पादटिप्पणियों में समाविष्ट हैं। 'पाठभेदनिदर्शनम्' नामक एक परिशिष्ट ही ग्रन्थ के अन्त में जोड़ दिया गया है। पाठकबन्धु वहाँ इस दुरूह पाण्डुलिपि का अनुमान लगा सकेंगे।

इस पाण्डुलिपि के उद्धार में जितना समय लगा है उतने में कुछ मौलिक कृतियों की रचना हो सकती थी। इसके अतिरिक्त पाण्डुलिपि का सम्पादन एक नीरस और रूक्ष कार्य है। इसके पाठनिर्धारण करने में सूझबूझ और व्युत्पत्तिज्ञान अपेक्षित रहता है। शब्दविद्या में नदीष्णता रहनी चाहिए। साहित्यिक कृति रहने पर साहित्य और काव्य की चातुरी आवश्यक है जिससे त्रुटित छन्द की पूर्ति की जा सके। इसके अतिरिक्त सम्पादन कार्य का पूर्वानुभव भी आवश्यक है जिसे सम्पादनविधावेत्ता के निर्देशन में प्राप्त किया गया हो।

इन्हीं कठिनाइयों के कारण प्रायः परम्परागत पण्डित पाण्डुलिपि सम्पादन कार्य से विरत रहते हैं। पाण्डुलिपि की एकाधिक मातृकाओं के उपलब्ध होने पर मिलान कार्य में कुछ सरलता अवश्य हो जाती है। किन्तु पाण्डुलिपि की केवल एक मातृका उपलब्ध होने पर सम्पादन कार्य कठिन हो जाता है। मातृका की भ्रष्ट लिपि होने पर वह कठिन से कठिनतर और दुरूह बन जाता है। अनिरुद्धचम्पूकाव्य इसी श्रेणी में आता है।

इस पाण्डुलिपि के अक्षर मुक्ताबिन्दु की भाँति रमणीय हैं। किन्तु अन्तःप्रविष्ट होने पर इसकी विरूपता और कठिनाइयों के कान्तार का पता चलता है 'पयस्तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्'। 'दशरा मशरा' की उक्ति तो पदच्छेद की कठिनाइयों को दरसाती है। वह इतनी दुरूह नहीं है। इस पाण्डुलिपि में पदे पदे कठिनाइयों से पाला पड़ता है। इन कठिनाइयों को पाठभेद-परिशिष्ट में दरसाया गया है। पाठकों को इस परिशिष्ट से इस पाण्डुलिपि की दुरूहता का प्रत्यक्ष हो सकेगा। वहाँ अक्षरच्युति, वर्णविपर्यय, पदभ्रंश, पादभ्रंश इत्यादि पाठभेद के विविध प्रकार दिख सकेंगे। इन कठिनाइयों को समझ प्रकाशित ग्रन्थों को पुनर्मुद्रित करके सम्पादकों की श्रेणी में सम्मिलित होने की लालसा पूर्ण कर ली जाती है।

देवराज ने स्वविरचित नानकचन्द्रोदय महाकाव्य के अन्त में स्वयं स्वीकृत किया है कि इस पाण्डुलिपि का संशोधन उनके भतीजे ने किया है—

***कथिता कविदेवराजनाम्ना***
***विमलकथा सुधिया च नानकीया।***
***तदनु तदनुजात्मजेन तुष्ट्या***
***परितः शोधितखण्डिता व्यधायि।।***

*(२१, २४२)*

उनके इस अनिरुद्धचम्पू काव्य को संशोधनपूर्वक परिष्कृत करने के कारण प्रत्येक उच्छ्वास के अन्त में देवराज के नाम के पश्चात् परिष्कर्ता ने अपना नाम संनिविष्ट किया है।

वाराणसी विद्या की नगरी रही आयी है। किन्तु चम्पुओं की सोंधी गन्ध से यह प्रायः अप्रभावित रही है। म.म. गोपीनाथ कविराज महोदय ने 'काशी की सारस्वत साधना' नामक ग्रन्थ में अट्ठारहवीं शताब्दी तक काशी के संस्कृत विद्वानों और उनकी कृतियों का विवरण दिया है।

'नानकचन्द्रोदयमहाकाव्य' के कर्ता देवराज की जन्मभूमि और कार्यभूमि का पता उसकी पुष्पिका से स्पष्ट नहीं होता है। अतः उन्होंने उसका समावेश उक्त ग्रन्थ में नहीं किया। किन्तु अनिरुद्धचम्पू में देवराज ने स्वयं को स्पष्टतः शाण्डिल्यगोत्रीय सरयूपारीण बताया है।

पण्डित बलदेव उपाध्याय की दृष्टि से भी ये दोनों ग्रन्थ ओझल रहे। अतः 'काशी की पाण्डित्य परम्परा' में वे भी इनका उल्लेख नहीं कर सके। सन् १७७० ई. में काशिराज चेतसिंह की कालावधि में दाक्षिणात्य शंकर मिश्र ने 'शंकरचेतोविलासचम्पू' की रचना की है। इस कवि के पितामह का नाम ढुण्ढिराज था। उक्त दोनों लेखकों की दृष्टि से इनका नाम भी ओझल हो गया है। उत्तरभारतीयों में देवराज शर्मा अकेले हैं जिन्होंने चम्पूकाव्य की रचना की है।

पुण्यदायिनी श्रीगंगा के तट पर विराजमान ज्ञानप्रदाता काशीपुराधीश्वर के काशीक्षेत्र में ज्ञान की विविध विधाओं के स्रोत प्रवाहित हुए हैं। उनमें अनेक अन्तर्निगूढ हैं। महेश्वर बुधजनों के श्रीमुख से ज्ञान प्रदान करते हैं। आशा है वे ऐसे अज्ञातस्रोतस्क ग्रन्थरत्नों की गवेषणा कर ज्ञानधारा का नैरन्तर्य बनाये रखेंगे।

वटसावित्री<br>
वि.सं. २०६७.

**श्रीगुरुचरणचञ्चरीकः**<br>
**वागीश शास्त्री**

# विषयानुक्रमणिका

अग्नि॰
१

श्रीगणेशायनमः॥ ॥शार्ङ्गज्याकिणकठिनरश्मिर्योमहांतस्तेऽव्यात्सुरमथनस्स वादवो वः॥पंचानामपिसुरभूरुहा
मसाध्यं चत्वारो विदधति ये जनस्य कृत्यम्॥१॥ जयंत्यजस्रं श्रुतिवामलोचनाशिरस्सु मुक्तावलिविभ्रमा बुधाः॥
अनारतं नारदवल्लकीगुणैरुपासिताः कैटभवैरिकीर्तयः॥२॥ सरस्वती पारपयोजरेणवः सृजंतु मे मानस
दर्पणे मृजाम्॥ चिराय नाम्भुज्वरवेगवेपितैः स्मृताः सकृत्सिद्धरसी भवंति ये॥३॥ प्रसन्नगंभीरपदैरलंकृ
ता मनोमलक्षालनवद्धविभ्रमाः॥ मधुस्रवंत्यो रसभावनिर्भरं जयंति वल्मीकभुवः कवेर्गिरः॥४॥ सुग
धिगोविंदपदाः करंविता जयंति कृष्णस्य सरस्वतीसुधाः॥ सुधामनोदत्यचिरं निपीय पापान्नजंति विक्षेपमुर
स्यनिर्वृतिम्॥५॥ श्रुतासकृत्सर्वशरीरसंभवं ज्वरं दहंती जगतीषु विश्रुता॥ कथाकथं कोकिलकाकलीस
खी संतानकर्णज्वरहारिणी भवेत्॥६॥ परापवादेषु परंपराजुषु खासु खारविंदस्थितसर्पणा या॥ प्रसि
द्ध शांडिल्यकुलोज्ज्वलोदयास्यादमस्यांतिभृतो मदाशया॥७॥ चंद्रग श्रीशैतनरेंद्र पूजिताजितारिषड्वर्ग

वल्लापश्शस्विनः ॥ सदासदाचारसमुत्त्वसद्विभाविभाव्यमानाधुरि सर्ववेदसाम् ॥ ८ ॥ निरंतरं श्रोत्रियमौलिमा
लिकामरंदधारावलिभावितांघ्रयः ॥ रघुप्रवीरेण पुरा निवेशिता वसंति पारेसरं सुद्विजातयः ॥ ९ ॥ त्रिभिर्विशे
षकमात्राप्तलंतेजः स्वीकृताकारसंपद्वाचो देव्याः स्वैरसंवासभूमिः ॥ आसीत्तेषुस्थान गांभीर्यसीमा गौरीकांतो
विश्वविश्रांतकीर्त्तिः ॥ १० ॥ गोदावरीपरुदारगुणैः परलस्तस्मादभूद्रघुपतिः श्रुतपाललसिंधुः ॥ अंकंज
हृज्जगति यस्य पणः शशांकस्त्रैविक्रमं क्रमणकौतुकमाननोति ॥ ११ ॥ ततः सुतोऽजायत देवराजः स
माश्रितः श्रीशिवलालपादान् ॥ नानारसोद्गारगरीयसीयं तेनानिरुद्धस्य कथा निबद्धा ॥ १२ ॥ विशुद्धिभू
म्नाकलिकल्मषघ्नीवदंतिकीर्त्तीः किल केशवस्य ॥ तस्यापरस्य कवेर्वचांसि संतः समाकर्ण्य कृतार्थ
यंतु ॥ १३ ॥ अस्ति खलु जलधिनिकषोपलोल्लिखितविश्वकर्मनिर्माणनैपुण्यत्वसर्वस्वरेखेव शोभमानानाभिनव
नीरदोदरदृश्यमानचंचलाचारुकांतिर्वसुंधराविलासिनी बालपाश्यायमानानभोविभासुरहिरण्मयमराल

श्रीदेवराजनिबद्धं

श्रीवागीशशास्त्रिणा च संशोध्य परिष्कृतम्

# अनिरुद्धचम्पूकाव्यम्



## अथ प्रथम उछ्वासः



शार्ङ्गज्याकिणरुचिरश्रियो महान्त-
स्तेऽव्यासुर्मुरमथनस्य बाहवो वः ।
पञ्चानामपि सुरभूरुहामसाध्यं
चत्वारो विदधति ये जनस्य कृत्यम् ।।१।

जयन्त्यजस्रं श्रुतिवामलोचनाः
शिरस्सु मुक्तावलिविभ्रमावहाः ।
अनारतं नारदवल्लकीगुणै-
रुपासिताः कैटभवैरिकीर्त्तयः ।।२।

सरस्वतीपादपयोजरेणवः
सृजन्तु मे मानसदर्पणे मृजाम् ।
चिराय जाड्यज्वरवेगवेपितैः
स्मृताः सकृत् सिद्धरसीभवन्ति ये ।।३।

प्रसन्नगम्भीरपदैरलङ्कृता
मनोमलक्षालनबद्धविभ्रमाः ।
मधु क्षरन्त्यो रसभावनिर्भरा
जयन्ति वल्मीकभुवः कवेर्गिरः ।।४।

सुगन्धिगोविन्दयशःकरम्बिता
जयन्ति कृष्णस्य सरस्वतीसुधाः ।
बुधा मनोहत्य चिरं निपीय या
व्रजन्ति विक्षेपमुदस्य निर्वृतिम् ।।५।

श्रुता सकृत् सर्वशरीरसम्भवं
ज्वरं हरन्ती जगतीषु विश्रुता ।
कथा कथं कोकिलकाकलीसखी
सतां न कर्णज्वरहारिणी भवेत् ।।६।

परापवादेषु परं पराङ्मुखा
मुखारविन्दस्थितसर्ववाङ्मयाः ।
प्रसिद्धशाण्डिल्यकुलोज्ज्वलोदया
दयादमक्षान्तिभृतो महाशयाः ।।७।

[1]उदग्रशीर्षण्यनरेन्द्रपूजिता
जितारिषड्वर्गबला यशस्विनः ।
सदा सदाचारसमुल्लसद्विभा
विभाव्यमाना धुरि सर्ववेदसाम् ।।८।

निरन्तरं श्रोत्रियमौलिमालिका
मरन्दधारावलिधाविताङ्घ्रयः ।
रघुप्रवीरेण पुरा निवेशिता
वसन्ति पारे सरयुद्विजातयः ।।९।

त्रिभिर्विशेषकम्

ब्राह्मं तेजः स्वीकृताकारसम्पद्
वाचो देव्याः स्वैरसंवासभूमिः ।
आसीत् तेषु ज्ञानगाम्भीर्यसीमा
गौरीकान्तो विश्वविश्रान्तकीर्त्तिः ।।१०।

[2]गोदावरीतनुरुदारगुणौघरत्न-
स्तस्मादभूद् रघुपतिः श्रुतशीलसिन्धुः ।
अङ्कं जहज्जगति यस्य यशःशशाङ्क-
स्त्रैविक्रमं क्रमणकौतुकमातनोति ।।११।

ततः सुतोऽजायत देवराजः

---

१. उदग्रशीर्णेतन ।   २. 'गोदावरीयरुदार'–। अत्रोभयत्राक्षरनैयून्यम् ।

समाश्रितः श्रीशिवलालपादान् ।
नानारसोद्गारगरीयसीयं
तेनानिरुद्धस्य कथा निबद्धा ।।१२।
विशुद्धिभूम्ना कलिकल्मषघ्नी
वहन्ति कीर्तीः किल केशवस्य ।
तस्यार्थगृह्यस्य कवेर्वचांसि
सन्तः समाकर्ण्य कृतार्थयन्तु ।।१३।

अस्ति खलु जलधिनिकषोपलोल्लिखितविश्वकर्मनिर्माणनैपुण्य[1]स्वर्णरेखेव शोभमानाभिनवनीरदोदरदृश्यमानचञ्चला चारुकान्तिर्वसुन्धराविलासिनीबालपाश्यायमाना नभोविभासुरहिरण्मयमरालमालानुकारिणी मुकुन्दोत्सङ्गसङ्गिश्रीनाभिशोभाशातकुम्भमयी द्वारवती नाम नगरी ।

[2]तस्याममरपतिकिरीटकोटिमणिमयूखमृष्टपादपीतपरिसरः सरस्वतीवदनविधुविनिर्गलद्बहलसरस्वतीसुधासारस्तर्पितगुणगणो[3] द्रुहिणमुखसरोजवनविनोदविशृङ्खलयशोराजहंसः सकलसुरवैरिवनितावैधव्यदीक्षादक्षसुदर्शनभ्रमणकिणकर्कशाङ्गुलिरिन्दिराकपोलकाश्मीरपत्रलेखाललामललितोरःस्थलो देवकीजठरजन्मा धरणिभारायमाणमनुजमीषत्समुन्मिषद्दनुजदलनकेलिकौतुकेन मानुष्यकमभिनयन्नुवास वासुदेवः ।

प्रतिसामन्तसीमन्तिनीकपोलकस्तूरीतिमिरलोपलोलुपो लोकालोकशैलसीमानमत्यवर्त्तत विधुरधराधीशललाटन्तपो यत्प्रतापतपनः । अमन्दमन्दारमालामिलन्मिलिन्दवन्दिवन्द्यमाना सकललोकपालमौलिमाणिक्यपर्यङ्किकामध्यमध्यशेत यदाज्ञा । यस्य महानीलमणिस्तम्भसम्भावितमाजानुलम्बिनं बाहुमवलम्ब्य कौलीनलज्जितेव लोलतामत्यजद् विजयलक्ष्मीः । तरुणतमालतुलितकान्तेरजायत श्चतुरुदधिवेलाविलासिडिण्डीरपिण्डपुण्डरीकषण्डपाण्डरं यशः ।

प्रयाणरभसपरिप्लवस्तनकलशयुगलसम्मर्दमृदितशेषस्खलितमुक्ताफलालङ्कृता [4]नखनिहितलाक्षारसार्द्रचरणकोकनदन्यासलोहिन्यस्त्यजन्त्य इव नयनवारिबिन्दून् वहन्त्य इव सद्योविदीर्णानि हृदयानि विपिनभूमयोऽपि यस्य धाटीषु पलायमानवैरिवनिताविपत्तिविलोकनविजृम्भितं करुणमन्वभूवन् । यस्य भुजस्तम्भयोर्भुवनभारमारोप्य दलितदृप्यद्दैतेयदण्डयात्रासमारम्भजृम्भमाणनिश्शाणनिःस्वनश्रवणसम्भ्रमो

१. नैपुण; २. तस्याममारपति; ३. तर्पितगुणगणो; ४. नव ।

नन्दनोद्यानमन्दारमण्डपेषु विबुधवारनारीवदनविधुचन्द्रिकाभिरशिशिरयत् । सहस्र-मक्षणमनाकुलं [१]बलवैरिनिर्गमितसुमेरुगिरिकन्दरोदरदुरन्तवासव्यसनासु यस्य यशांसि गायन्तीषु गीर्वाणगणिकासु क्षीरस्यन्नस्यति चञ्चूश्चिरं विरिञ्चिवाहनविहङ्गनिवहः ।

गुरुगरलानलज्वालजटिलफुत्कारभीषणफणीशफणवासवैशसविनिद्रेव यस्य चिरमाश्रितशीतलं बाहुमुपधाय वसुमती सुखमशेत । वेलावननिखातविजय-वैजयन्तीशतच्छायच्छिदुरसमरविसृमरश्रमोदबिन्दवोऽभ्यमित्रीणभटगलनालनि-र्गलद्बहलकीलालशबलकरवालक्षालना[२]च्चतुरकूपारवारिणि यस्य सैनिकाः शोणिमानमनयन् । सुपर्वस्वस्त्यनाय जिज्वलिषोर्यदमर्षज्वलनस्य कंसकेशिप्रभृतयः प्रथमाहुतित्वमभजन् ।

यश्च मीन इव धृताखिलश्रुतिः, कूर्म इव [३]सहसामन्दराधारसोल्लासः, वाराह इवोद्धृतगोत्रः, नृसिंह इव प्रणतप्रह्लादवर्द्धनः, वामन इव दर्शितविक्रमः, राम इवोन्मूलितार्जुनः, दाशरथिरिव सुमित्रानन्दनानुरक्तः, बलदेव इव धेनुकान्तकरः, बुद्ध इव याज्ञिकावमानक्षमः, कल्किरिव[४] यवननाशकृतक्रमः, उत्सव इव कृतार्थीकृतानकदुन्दुभिः, दैत्ययोध इव देवकीलालितः, धार्मिक इव यशोनन्द-योरुचितस्थितिं बिभ्रत्, मेघ इवानःक्षेपकरः, स्वयशःप्रसर इव पूतनाशः, रविरिव चारितोऽस्रः, भीमसेन इव वल्लवीकृतात्मा, जलदागम इव जनितशक्र-गोपराग-विच्छित्तिः, विरहीव निरस्तकुवलयापीडः, पिपासुरिव कृष्टकंसः, शक्र इवाक्रान्तभुवां भूभृतां पक्षच्छेत्ता ।

तस्य परस्परविरुद्धान्यवदानानि कं न विस्मापयन्ते । तथाहि । वृषमवितुमव-तीर्णोऽपि वृषं जघान । नागोपकारपरोऽपि नागस्यापचकार । गोपहितकरोऽप्य-गोपहितकरो बभूव । भग्नार्जुनोऽप्यर्जुनस्याभङ्गाय प्रयत्नमकरोत् । नरकाय श्रयन्नपि नरकाद्द्रोहमन्वतिष्ठत् । पृथुकान् रक्षितुमागतस्यापि श्रीदाम्नः पृथुकानपजहार । तस्मिन्नवनिमवत्युपमायामेव धर्मलोपो निधुवनेष्वेव बन्धास्तिथिष्वेव शूलसम्बन्धा वेदपारायणेष्वेवावग्रहो रामायण एव मारीचोपद्रवश्च । वार्धुषिकेष्वेवाधिरापणिकेष्वेव व्याधिर्जाबालेष्वेवाविजयो व्याकरणेष्वेव वृत्त्यर्थे विग्रह आमन्त्रितस्य निघातश्च । वेदान्तेष्वेवात्मश्लाघा भारत एव कर्णेजपदानरुचिर्मीमांसा-यामेवाध्वरहितत्वं न्याय एव द्रव्याश्रयगुणाः साङ्ख्य एवागुणः पुरुषो महान् विवेकी च । मास एव मलिम्लुचः । इन्दुरेव दोषारम्भलब्धप्रसादः । अरिदारवर्ग एव कृतकपटः, कार्याणामेव कारणाभिसम्बन्धः, प्रमदोदरस्यैव दुर्बलस्य बलिभिराक्रमणमक्षरेष्वेवावर्णो मतङ्गजेष्वेव मदमीलिताक्षता । कौक्षेयकेष्वेव मुष्टिबन्धः । कवीनामेव कोशगणना । अलभन्त प्रजा न बन्धनं नवन्धनम् । अभ्यास्यन् कुमारा नालीकं नालीकम् । अपश्यन् परिणतवयसो नाकं नाकम् । आरोहन् प्रकृतयो नागं नागम् । किं बहुना—

१. वलवैरी । २. क्षालनाश्चतुर । ३. सहसासंदरा । ४. कल्कीव ।

प्रकाममानं दयता सुकृतोल्लासतः सतः ।
असतः शासता तेन द्वापरेऽपि कृतं कृतम् ।।१४ ।
सद्वृन्दावनसंस्थेन सुप्रवृद्धमघं घ्नता ।
कालिन्दीकेलिभिस्तेन कृतं गोपालनं पुनः ।।१५।

वमद्भिरन्तःश्रुतिसन्ततं सुधां
गुणैस्त्रिलोकीरसनानिवासिभिः ।
सतां समन्तात् पुलकावलीं तनौ
ततान मङ्गल्यकथः कथासु सः ।।१६।

भवन्ति कालेन मलीमसानि यत्
समानि वासांसि विहाय तानि तत् ।
दिशोऽस्य वस्ते यशसा सदा सिता
ध्रुवं शिवः श्वेतपरिच्छदप्रियः ।।१७।

समुद्धरिष्यन्नपि शल्यमौर्वरं
क्वचित् पुरस्ताद् विरुणद्धि न स्मयः ।
तमापतन्तोऽग्निमिव प्रपेदिरे
पतङ्गवन्मङ्क्षु परे परेतताम् ।।१८।

स्तनस्वयंव्यक्तशिवेषुलोचुनै-
रखण्डधाराः किरतीषु सर्वदा ।
अभून्न[1] धन्वन्यपि तद्विरोधिनां
वधूषु शम्भोरभिषेकविच्युतिः ।।१९।

चिराय रिक्तेष्वपि सर्वयामिनीं
महौषधीभिर्ज्वलिताभिरुच्चकैः ।
सभागृहा दीप्तसहस्रदीपिकाः
पुरेव राजन्ति पुरेषु तद्द्विषाम् ।।२०।

स तानि सङ्कल्पजलैरकल्पयद्
बहूनि तीर्थानि वदान्यवन्दितः ।

---

१. अभूच्च ।

ऋते प्रयासादपुनर्भवं ययु-
निर्मज्ज्य येषु द्विजदैन्यतैर्थिकाः ।।२१।
दिशन्ति चिन्तामणिकामरोहिणी
सुरद्रवोऽपि ध्रुवमिष्टमर्थिनाम् ।
ससूक्तिरोमोद्गमसम्मदाश्रु यत्
सभाजनं तत्परमस्य गोचरः ।।२२।
विधाय भामा मनसः समीहितं
स पारिजातो यदवस्थितश्चिरम् ।
उदारतामभ्यसितुं विलक्षणा-
ममुष्य शिष्यत्वमतायि तद् ध्रुवम्[१] ।।२३।
सदोदयं वीक्ष्य यशःसुधानिधे-
र्यदुप्रवीरस्य यदुग्रचिन्तया ।
सुधानिधिस्ताम्यति तेन नीलिका
बभूव बिम्बेऽस्य न लाञ्छनं नु तत् ।।२४।
विसृत्वरैरूष्मभिरस्य तेजसो
गृहीततेजोऽन्तरधर्षणव्रतैः ।
दिनेषु निस्तप्त इव प्रभाकरः
करोति पोतं प्रति सायमम्बुधौ ।।२५।
विमर्दितास्तेन चिराय शत्रव-
श्चिकित्सकेनेव नवेन पारदाः ।
प्रतापतीव्रानलसम्पुटे धृता
द्रुतं कथाशेषमदर्शनं ययुः ।।२६।
गुरोः स सान्दीपनितो यथायथं
कलाश्चतुःषष्टिमधीतवानपि ।
अहो कुशाग्रीयमनीषया मतः
कथं स तामेककलाधरोऽभवत् ।।२७।

---

१. भ्रुवम् ।

बलेन वाचालयतोऽस्य विश्रुतान्
दृढद्विषन्तोऽपि गुणानजीगणन् ।
अपोढरागैर्विगतप्रयोजनै-
स्तपोधनैरप्ययमभ्यलष्यत ।।२८ ।

सत्येन संस्कृता वाचो यशसा भूषिताः श्रियः ।
क्रियास्तस्य विभोरासन् नयेन परिबृंहिताः।।२९।

जित्वाप्यनेकरिपुवर्गमहो रिपूणां
षण्णां सवर्गमनयन् महतोऽभियोगात् ।
नानागुणप्रकरभाजनतां गतोऽपि
षाड्गुण्यमाश्रयदनुक्षणसावधानः ।।३०।

तस्याष्टवर्गकुशलस्य बभौ प्रभुत्वं
सप्ताङ्गमप्रतिहतं गणषट्कयोगात् ।
पञ्चाङ्गमन्त्रचतुरश्चतुरोऽप्युपायान्
नेता विभज्य स भजन्नपुषत् त्रिवर्गम् ।।३१।

बभ्राम तस्य विषयेषु यशो न चेत-
श्चक्राम शीलमधिकं प्रकृतिं न दण्डः ।
चस्खाल मल्लिमकरन्दसुपिच्छिलेषु
पादाङ्गुलिक्षितिपमौलितलेषु नाज्ञा ।।३२।

पादाश्रयाद् यादववंशसिन्धु-
क्षपापतेस्तस्य धराधिपानाम् ।
विकासमीयुः कमलानि कामं
न चापि चक्रस्य भयं बभूव ।।३३।

सुवृत्तबाहुः स्मितशोभिताननो
विशालवक्षा जलजायतेक्षणः ।
नवाम्बुदश्यामवपुर्विलोकितः
सुधाभिषेकात् स जनं व्यतृष्णायत् ।।३४।

विलोकयन्तो यदुपुङ्गवं जना
pevegMeleesLew mebgeâlemleo evevee:[१] ।

---

१. तदातनाः ।

न कोटिपुष्पायुधकूटदर्शना-
दवापुरानृण्यमयत्नतो दृशाम् ।।३५।
निपीय तत्कान्तिकथासुधाकरीं
मुहुः स्मरोन्मादकरीं मृगीदृशः ।
यदप्यथो मानसमाधिमात्मन-
स्तथापि नो मानसमाधिमत्यजन् ।।३६।
अतुलितकुलकान्तिकीर्त्तनीयाः
परिणतपुण्यचयाश्रयास्तरुण्यः ।
अनुगुणगुणशीलभावभव्याः
समधिगताः कमलतावरं वरं ताः ।।३७।
रुक्मिणी सत्यभामा च सत्या भद्रा च लक्ष्मणा ।
जाम्बवत्यपि कालिन्दी मित्रविन्देति विश्रुता ।।३८।
प्रधानपत्न्यस्तस्यासन्ननुरूपगुणोदयाः ।
अष्टौ विभूतयो मूर्ता नूनं कुसुमधन्वनः ।।३९।

युग्मम्

अवतीर्य दिवः सुराङ्गनाः किमसेवन्त सुरारिसूदनम् ।
अथवा कमलैव ताः स्वयं वपुषां व्यूहमुपेयुषी बभौ ।।४०।

विकस्वरस्मितचन्द्रिकासु वितन्द्रनयनारविन्दमालास्वम्लानदन्तच्छद-बन्धुजीवराजितासु कलक्वणितमञ्जीरमरालशालिनीषु तासु परं प्रससाद यदुचन्द्रः ।

विलासविकसत्तारास्तारालङ्करणाः स्त्रियः ।
व्योम्नि तारा इव हरौ ता राजन्ति स्म सङ्गताः ।।४१।

षोडशसहस्रमत्तकाशिनीनयन[१]नलिनपूजनीययौवनमहोत्सवस्य केलिकलहकोप-कलितमौनमानिनीमुखसरोजस्मेरतोपचारचतुरस्य तस्य सुरासुरस्पृहणीयपरार्ध्य-समृद्धिवर्धिष्णुचन्द्रं चन्दनद्रवदामादिदिव्यसम्भारसुभगम्भावुकाः कामकेलयः काममपि काममम्मूमुहन् ।

मह्यमेव स्पृहयते ममैव च वशंवदः ।
प्रत्येकमित्यमन्यन्त हरिं हरिणलोचनाः ।।४२।

---

१. षोडशसहस्रमतकाशिनीनयननलिन-

तासु तप्तकनकोत्तरद्युतिस्त्रस्तबालहरिणीविलोचना ।
नीलकुञ्चितघनालकावली शारदेन्दुवदनारुणाधरा ।।४३।
पीवरस्तननितम्बगौरवाद् बिभ्रती किमपि मध्यमानतम् ।
वल्लकीक्वणितमञ्जुभाषिणी [१]मानहंसगमना शुचिस्मिता ।।४४।
निम्ननाभिरुदरेण फल्गुना रोमराजिलतया बलिश्रिया ।
शोभितोरुपरिणाहसौष्ठवैरङ्गकैर्नवशिरीषकोमलैः ।।४५।
भङ्गुरभ्रुसविलासवीक्षितैरार्जवेन गुणगौरवेण च ।
भीष्मकस्य तनया मनस्विनी प्रेयसी परमभून्मधुद्विषः ।।४६।

चतुर्भिः कालापकम्—

सा बभूव हृदि चन्दनच्छटाकौमुदीनयनयोर्निरन्तरम् ।
रूपिणीपरमऋद्धिरालये मानसे सुरभिदोऽधिदेवता ।।४७।
तामवाप्य नवसङ्गमत्रपारूढरागरससन्धिबन्धुराम् ।
[२]तद्गुणश्रवणस्तरङ्गितान्निर्विवेश स बहून् मनोरथान् ।।४८।
तत्पयोधरतटीं परामृशत् किं न पाणिकमलेन केशवः ।
उद्धृतस्य धरणीभृतः क्षणं बालकेलिषु सलीलमस्मरत् ।।४९।
आजहार परिरम्भणं भ्रमादेतयोर्न तिलतण्डुलीकृतम् ।
अङ्गमुष्णाविगमे विलम्बिनो वारिदस्य धृतविद्युतः श्रियम् ।।५०।
नेति नेति यददोषया गिरा सेविता श्रुतिरिव प्रियाऽवदत् ।
अन्वभूद् विगतविश्वविभ्रमां तेन केवलसुखां दशामसौ ।।५१।
ओष्ठसंक्रमितकज्जलद्युतिं पावकस्नपितकौस्तुभं प्रगे ।
सञ्चुकोच विचकास च प्रियं वीक्ष्य पङ्कजदृशो दृशोर्द्वयी ।।५२।

इति चिरपरिरम्भप्रेमसञ्जल्परम्यैः
कुसुमविशिखकेली कौतुकैर्याति काले ।
अभवदतुलतेजास्तत्र देव्यां कुमारः
पुरमथनवरेण प्राप्तजन्माथ मारः ।।५३।

धन्विनामग्रणीरासीन्नाम्ना प्रद्युम्न इत्यसौ ।
अचिरेण गुणैर्लोके कृष्णात् प्रति च [३]पप्रथे ।।५४।

---

१. मनहंस-; २. तद् गुणश्रवणात्स्त-, ३. प्रतिचयप्रथे ।

कथमिव चास्य गुणौघमखिलमुदाहरेदुदारमतिरपि यः खलु षडहजात एव शंवरेण हृतो मायावतीलम्भिताखिलमायः शैशवशेषेणानतिप्रगल्भोऽपि सुतशतदुरास्कन्दमनेकमायाबलविहस्तीकृतविबुधवाहिनीकमूर्जस्विनं तमुन्मथ्य निरन्तरनिबद्धाश्रुधाराणि बन्धुतानयननीरजानि निरवीवरत्। पञ्चपारिजातहरण-प्रसङ्गेन प्रवर्त्तमाने रणे जयन्तमपि जयन्तमवलोकयतो बलिभिदो विस्मयविकस्वराणि विलोचनानि मध्यन्दिनं नलिनवनविनोदमनुविदधुः। मण्डलीकृतकोदण्डस्य यस्य रणाङ्गने वदनविधुपरिधिविलोकिनां विधुरधरापतीनामुत्पातदर्शनादिव सद्यः सीदन्ति स्म हृदयानि। स च निखिलखलकक्षधुक्षणदवानलो नलोदग्रकीर्त्तिनिवहो बहोर्गुणगणस्य राशिराशिषां भाजनं जनं निजमनुरञ्जयन् नरालीन्नरातीतमहामहाधिषणो धिषणो दारनीतिविभवो भवोपमधैर्यशाली शालीनीकृतसमस्तासुरसमाजः समाजगाम गामभिगोपितुः पितुः सहायतां सहायतान्धुरमधरथः सकलकामिनीकमनीयेन परमसुरभिणा शृङ्गारसाम्राज्यविजयध्वजेन मृगमदमकराङ्कुरेणेव तेन धरणिरमणी चिरमराजत। निसर्गरमणीयस्य तस्य यौवनाभोगभूषितान्यङ्गानि पुनरुक्तामभि-ख्यामबिभरुः। तथाहि भाजनमभून्नयनयुगलं कमलदलदुरापस्य द्राघिम्णः शरदिन्दुना-भिनन्दनीयां द्युतिं वदनमदधात्। स्कन्धपरिणाहो महोक्षमक्षिपत्। बिभराम्बभूव वैदूर्यवितर्दिकाविलासं वक्षः। भोगीन्द्रभोगैरननुभूताङ्करिकैः स्वप्नेऽप्यदृष्टां विशालतां भुजावभजतां प्रबलकमनीयं कामनीयकं पादयोरपतत्। [1]मुग्धवनितासंवननमन्त्रा-धिपत्येऽध्यक्रियन्त स्मिताभिषिक्ता गिरः।

अभिरूपवर्गमखिलं कवयस्तुलयन्ति येन मदनेन सदा।
उपमीयतां स खलु केन ततो रुरुचे च चास इव सप्तसभम्॥५५॥

तस्यावलोकनात् प्रत्यर्थिपार्थिवानां यशोभिः सह न्यगभूवन् शिरांसि। मत्सरिणां मुखच्छायया सह समकुचन् श्रियः। वनीयकानां मनोरथेन सहापूर्यन्त गृहाः। मानिनीनां धैर्येण सहास्खलन्नीवीबन्धाः। तस्य नवतमालनीलद्युतेरयातयाम-यौवनोन्मेषमहनीयतराकृते[2]र्यौवनमनोमीनसमुदयासङ्गसरसो दूतीयमानया कान्तिकीर्त्या भयोजिता विदर्भनाथस्य रुक्मिणः शुभाङ्गी नाम दूरमुदमनायत। सा खलु स्वलावण्यसम्पदा श्रियमप्यतिशयाना समस्तयुवजनस्य मन्मथोन्माथहेतुरमुष्यापि मनसि रत्नशालभञ्जिकेव प्रत्युप्ताचिरमासामास।

अत्रान्तरे च स्पृहणीयं वयः स्पृशन्त्याः सुतायाः स्वयंवरं करिष्यन् विदर्भराजो राजकमामन्त्रयाम्बभूव। ततो जवनकरितुरगशताङ्गशतैः परापतन्तो नृपतयः पतिंवराभिलाषैरकलिताध्वश्रमा भोजकटं नाम तन्नगरमन्ववसिता न्यविशन्त। प्रद्युम्नोऽपि प्रियवयस्यैरनुगम्यमानो द्विधा द्विजानां मङ्गल्यगिरः शृण्वन् वैवाहिकेन वेषेणातिरो-चिष्णुरूर्जस्वलेन यदुबलेन स्वलावण्यनिर्वर्णनजनितसात्त्विकभावामिव मेदिनीमा-कम्पयतस्तस्य[3] पुटभेदनस्योपशल्यमलमकृत।

---

१. मुग्धवनितासंवनमन्त्रा-, २. यैविव, ३. माकंपर्यस्तस्य।

अथ मत्स्यलाञ्छनेन ध्वजेन दूरादध्यवस्यन्तः प्रणिधयस्तमागतं नृपतिमभिदधुः । सोऽपि सम्भ्रममर्घ्यपाणिर्गोपुरं यावदागतः सबहुमानमेनमर्चयाञ्चकार विज्ञपयाम्बभूव च तन्निवासक्षमामनूनोपकरणामुपकार्याम् । तस्यामसौ प्रियतमागतेन चेतसा निद्रामलभमानः कथं कथमपि सङ्कल्पसोपानपरम्परागतागतैर्युगशतापि तां यामिनीमत्यवाहयत् । अथ प्रत्युषसि राजभिः समं सरागे मरीचिमालिनि स्नातानुलिप्तेषु जनेषु वाद्यमानेषु विविधवादित्रेषु भोगावलीराददानेषु वन्दिषु श्रुतिमुखरमुखेषु स्वस्तिवाचनिकेषु प्रसरत्सु कालागुरुधूपधूमेषु प्रचरत्सु चामरेषु प्रेक्षकैराकुलाकुलेषु प्रेक्षागृहगवाक्षेषु मौक्तिकजालकान्तरितेष्वसूर्यम्पश्येषु राजदारेषु कनकमञ्चानधिष्ठितेषु पार्थिवेषु परम्परितेष्वाह्वानविज्ञप्तिबद्धाञ्जलिषु पुरुषेषु प्रतीक्षमाणे रुक्मिणि यादवेन्दुरुदयधर्माणं मञ्चमानं च ग्रहा इवेतरे महीक्षितो म्लानिमभजन् ।

ततः प्रादुरासीत् कनकपुत्रिकेव गौरगात्रयष्टिः शरदिन्दुसुन्दरमुखी चकितचमूरुलोचना कलभकुम्भोपमपयोधरा चमरचारुणा चिकुरभारेण निःश्वसितसौरभानुसारिभिरलिभिस्तनीयसोदरेण क्रशीयसा विलग्नेन गरीयसा नितम्बेन स्थवीयसोरुदण्डेन म्रदीयसाङ्घ्रियुगलेन कूलमुद्वहेन सर्वाङ्गीणलावण्यपूरेण स्वर्णगौरं वासो वसाना विदग्धसख्यानुगम्यमाना सामाजिकानुच्चक्षुः कुर्वती वरणदामदिव्यपाणिः कर्णीरथारूढा राजकन्या ।

तां निर्निमेषं मिषतां महीपतीनामिति मतिरुदभूत्—नूनमस्याः कान्तिपरमाणुश्रेणिरेवारम्भकसामग्रीसंमता विधातुर्न खलु दृष्टपूर्वा भौतिकानामङ्गनामियमभिख्या । इमां स्रष्टुः सृष्टिमवलोक्य किन्न चित्रीयन्तां चित्रकराः । किन्न गलितगर्वाः सकर्णग्रहं प्रणमन्तु शिल्पिनः। किन्न हतचित्ताः सन्तु प्रातिहारिकाः । किन्न लाञ्छनच्छलेन वहतु हृद्रोगं हिममयूखः । किन्न कालं पाययतु जलेषु जलजजातिः । किं न नयनमयीं तनुमनुरुध्यतां जीवलोकः, किन्न संसारविश्लेषे शिथिलयत्नोऽस्तु मुमुक्षुवर्गः । दूरमस्याः स्वीकारप्रत्याशा यदवलोकनेनानुगृह्णीत नस्तेनैव चरितार्थः समस्तोऽप्यभिनिवेशः ।

अथातपत्रच्छायेन शतचन्द्रनभस्तलं वितन्वतो विविधभावभङ्गीर्विरचयतो वर्ण्यमाननामगोत्रावदानान् पतीनतीत्य क्रमेण कनकरागरञ्जितकपोलपालिमुद्रश्मिरत्नकेयूरमुद्भिद्यमानश्मश्रुमत्युदारप्रकृतिमुत्तमाङ्गनास्पृणीयरूपं[1] रौक्मिणेयमभिवर्तमाना विदर्भराजदुहिता वयस्या निजगदे—

वंशे बभूव शशिनः शशिशुभ्रकीर्ति-
र्यज्वा ययातिरुचितो मनुवन्मनीषी ।

१. स्पृहीयरूपं ।

राजादिराजचरिते सततं श्रुतः स्याद्
आख्यानिकैरिति ह सुन्दरि पठ्यमानः ।।५६।

तस्य प्रभावमवलोक्य परं प्रसन्नः
सर्वत्रगं रथमदादुचितं विडौजाः ।
दिक्कूलमुद्रुजयशःप्रसरस्तरस्वी
तेनावनीं स सकलां षडहे विजिग्ये ।।५७।

नानाविधा बहुतिथं समयं विचित्रै-
र्भोगक्रमैश्च विषयाः समुपास्यमानाः ।
ज्ञाता विशिष्य दुरुदर्कदुरन्तभोगा-
स्तेनोज्झिता लवमपि स्मरयन्ति न स्म ।।५८।

तस्मादभूद् यदुरुदग्रमहामहर्द्धिः
ख्यातः क्षितौ निजगुणैस्तनयो न योऽन्यः[१] ।
नाम्नास्य सत्पुरुषमौक्तिकसूः प्रसिद्ध-
कोदण्डदण्डमहिमाजनि तन्विवंशः ।।५९।

औदुम्बरीविततिदन्तुरितावनीकः
कोदण्डशब्दबधिरीकृतदिक्करीन्द्रः ।
साहायकं मघवतोऽसुरसम्पराये
कर्ता न कोऽजनि जनिप्रथितोऽन्वयेऽस्मिन् ।।६०।

एकं सहस्रदमनेकमनेकदोऽपि
निर्दोषतामुपगतोऽपि सहस्रदोषम् ।
शूरैर्युतोऽपि बहुभिः परमेकशूर-
मुत्पाद्य विस्मयमयं वितनोति वंशः ।।६१।

शूरादजायत सुतो वसुदेवनामा
दातावदातचरितो विमले कुलेऽस्मिन् ।
जन्माभ्यनन्दि विबुधैः किल पुष्पवृष्ट्या
घोषैस्तथास्य चिरमानकदुन्दुभीनाम् ।।६२।

१. योत्यः ।

उत्साहवान् न तरलः सहनो न भीरुः
कर्ता विमृश्य सुचिरं न च दीर्घसूत्री ।
उद्योगभृन्न कुहनः स परं प्रजानां
प्रीतिं पुपोष मनुमार्गमनुप्रपन्नः[१] ।।६३।
तस्मिन् विधाय विषमं न चिरेण कंसो
दीनां दशामनुबभूव विचेष्टमानः ।
अद्रोहणे कुमतिभिर्विपदः प्रयुक्ताः
प्रत्याययन्ति दृषदः खरवोद्विमुक्ताः ।।६४।
एकेन सूनुमनिरूप्य गुणं प्रसूय
बन्धादमोच्यत न केवलमेक आत्मा ।
तं लोचनैश्चुलुकयंश्चरितेषु तस्य
जल्पाकतामिह वहन् सकलस्तु लोकः ।।६५।
यो रोहिणीपतिरपि प्रतिषिद्धदोषो
यो देवकीलितगुणोऽपि गुणैरयन्त्रैः ।
किं वर्ण्यतां स खलु वृष्णिकुलोद्भवोऽपि
यो विश्रुतं पुरुषसिंहपदं प्रपेदे ।।६६।
उदायतां यदुऋषभादतः सुतौ
बलो बली तदनु च केशिसूदनः ।
विसृत्वरी शरदिजचन्द्रिका सखी
ययोरियं त्रिजगति कीर्त्तिरुद्गता ।।६७।
प्रमाथिना नयविदुषामपि द्विषां
[२]किमेनयोः सुमुखि समोऽस्तु तेजसा ।
जले निजं बलमुपदर्शयन् परं
हयप्रियावदनसमुद्भवो ऽ नलः ।।६८।
नभोमये पृथुफलके किमेनयोः
सरोजभूरजनिषु तारकामिषात् ।
यथा यथा विजयलिपीर्लिखत्यये
तथा तथा विधुकठिनी विलीयते ।।६९।

---

१. मनुमार्गमनुपयत्नः ।  २. द्विषां के ।

गभीरतां परममुयोर्विलोकितुः
स्वलङ्घिनीमतिसविधे पयोनिधेः ।
त्रपाभरान्ननु हृदयं द्विधा दलेद्
गरीयसो गिरिकठिनं न चेद् भवेत् ।।७०।
उदीरितं शयनजडेन केनचिद्
विरोधिनां पुरि निशि[1] नाम चेत् तयोः[2] ।
परस्परं तरलकृपाणपातिनां
तरस्विनां भवति मुधा मृधे क्षयः ।।७१।
प्रतानिनीलवलिलतापि तातयो
[3]रणाङ्गणे शशिमुखिकीर्तिरुज्ज्वला ।
फलायितं तदुदितपाण्डिमा प्लुतै-
रसङ्ख्यकैस्तदनु च विश्वगोलकैः ।।७२।
कनीयसः खगपतिलक्ष्मणस्तयोः
फणीश्वरो गणयति वा न वा गुणान् ।
अमुं किल प्रवदति सूरिमण्डली
रमासखं विबुधहिताय गां गतम् ।।७३।
पराक्रमं पारमिह शुल्कमावहन्
पितृष्वसुस्तव सह पाणिनाग्रहीत् ।
धनुर्भृता मगधविदर्भभूभृतां
प्रयस्यतां समिति समानमुन्नतम् ।।७४।
अधीतिना धनुषि चिरं भृगूद्वहाद्
बलीयसा तव गुरुणाऽप्यगृह्यत ।
शिलीमुखैः पुलकवता तनौ स्थिरैः
शरासनं विगुणमपोह्य तद्गुणः ।।७५।
सरित्पतेः सुरतरुवत् ततो ऽ भवद्
विदर्भजे कलयसि यं पुरः स्थितम् ।

१. तिथि; २. चेतयोः । ३. रणाङ्गने ।

जगत्त्रयी तरुणवपुष्मतां गणो
वहेद् गुणं कतिथममुष्य चेच्छवे ।।७६।
जगत्त्रयं कुसुममयेन पत्त्रिणा
वशीकृतं परममुना धनुष्मता ।
किमुच्यतामिति महिमा पिनाकिनः
शरव्यतामनयत चेन्मनः स्वकम् ।।७७।
विजानता समिति समग्रशाम्बरीं
वरीयसा धनुषि च शम्बरद्रुहा ।
सुरद्रुहामपि सह युध्यतां[१]हि यं
च केशिनी जनयति कूटकल्पना ।।७८।
समागमे ननु युवयोश्चिरन्तनं
परिश्रमं सफलय साब्धि वेधसः ।
शुभाङ्गि यत्त्वदनुगुणां शुभां गता-
मनङ्गतामयमपनीय लम्भितः ।।७९।
अकारणं विरहिजनेषु चण्डतां
चरन्नयं गतकरुणस्त्वयाधुना ।
अनीयत प्रसभमहो रसज्ञतां
सुवत्सले नवविरहानलोष्मणः ।।८०।
तवाकरोद् यदवधि कर्णगोचरान्
गुणानसौ रणरणकप्रदायिनः ।
ततः प्रभृत्यहह निजैः शिलीमुखै-
रनङ्गता वरतनु नीयते पुनः ।।८१।
निजानलो ज्वलयति नित्यसन्निधिः
समन्ततः प्रसरति किञ्च पाण्डिमा ।
हिमावलीविलुलितनीलपङ्कजैः
समां श्रियं वहतितरां ततोऽङ्गकैः ।।८२।

---

१. युद्धनांहि पंचकेशिनी । अत्र सुस्पष्टता नास्ति पाठे ।

प्रतिक्रियामतिभवति स्मरज्वरे
शरीरके प्रसरति तीव्रसंज्वरे ।
क्षिपत्यसौ शिशिरसरोरुहाणि चेत्
तुदन्त्यमून्यधिकतरं शराः किल ।।८३।

कुशस्थलीमनुजलराशिराजितां
दिदृक्षसे यदि यदुपालितां पुरीम् ।
अमुष्य तत्कलयं किशोरिकन्धरा-
मसंशयं वरवरणस्त्रजानया ।।८४।

अनुक्षणं तव दशनानुकारिणी-
महोर्मिभिर्विसृजति मौक्तिकावलीः ।
अपां पतिस्तव चरणं च विद्रुमैः
सुलोचने तुलयति तत्र कौतुकी ।।८५।

स्वतन्त्रतो विरचितबन्धविभ्रमे
कृतामुना सुरतरसे सुनिस्सहा
जलोल्लसन्मृदुपवनेन वीजिता
मनिष्यसे महिमगुणं महोदधेः ।।८६।

रविं विना कमनुदिनद्युतिः स्फुरे
विधुं विना प्रसजतु केन चन्द्रिका ।
स्मरं विना क इह तवास्तु वल्लभी
हरिं विना क इव रमासमाश्रयः ।।८७।

प्रियः प्रियः सकलसचेतसां न किं
विधीयते विदुषि [1]जगद्गुरुर्गुरुः ।
प्रगल्भतां बिभृहि विलज्ज्यते खलु
स्वमानसे ननु शतधा वृतं वृणु ।।८८।

पितृष्वसुः पितुरपि ते मनीषितं
मनीषिणामपि वरयोग्यताविदाम् ।

१. जगद्गुरुर्गुः ।

प्रियंवदे[1] सखि विरहाधिसाक्षिणी
तवापि चेदभिमतमाचराचिरम् ।।८९।

इति प्रियवयस्ययाऽभिधीयमाना विदर्भराजनन्दना कथं कथमपि त्रपातिरस्करिणीं तिरस्कृत्य वेपथुविसंष्ठुलेन पाणिपल्लवेन पुलकपालिकर्कशे यदुकुमारस्य कण्ठनाले दूर्वाङ्कुरकरालां मधूकमालामाबबन्ध । उदतिष्ठच्च जयशब्देन सार्द्धमितरराजवर्गः न्यपतच्च दिव्यसुमनोभिः समं सुमनसामानन्दाश्रुबिन्दुसन्दोहः । अनुरूपदाम्पत्यनिर्माणनैपुणेन हर्षमाणो जनो विधातारं वर्णयन्निदमुदीरयामास ।

सोऽयं स्वर्णमुद्रिकामहनीलयोः सन्निवेशकनककेतकीतमालयोराश्लेषस्तडितोपदयोः सहोदयो जम्बूनदी न दीनयोः संभेदः । किमधिकमुच्यतां सहस्रं समाः समाहरन्नयनव्रतां महोत्सवं मिथुनमिदमवियोगबन्धुरं बन्धुरञ्जनं जनयतु ।

अथ निदेशदत्तावधानपरिजनसहस्रं संबाधपरिसरमुदारमणितोरणमयूखमांसलमनूचानैश्चरमवयोभिरारब्धपुण्याहमङ्गलमुल्लसितगीतध्वनिमुज्ज्वलितरत्नप्रदीपमुन्नत[2]-चित्रकेतनमभिनवप्रबालकनककुम्भदधिदूर्वाङ्कुररोचनारुचिरं विवाहमण्डपमवतीर्य मौक्तिकक्षोदमेदुरचतुरचतुष्करचनारोचिष्णु वेदिमध्यमण्डनायमानमाणिक्यपीठमध्यासामासतुरामुक्तमङ्गप्रतिसरौ वधूवरौ ।।

विदर्भराजेन सरत्नमर्घं मुदा [3]वितीर्णं मधुपर्कमुच्चैः ।
सौवर्णसूत्रं वसनं च तत्र जग्राह दाशार्हविधुर्विधिज्ञः ।।९०।

जुहवाञ्चकार विधिवत् पुरोहितः
सुरभीणि बर्हींषि हवींषि रुक्मिणः ।
ज्वलितः प्रदक्षिणमरूक्षनिस्वनः
स विवाहसाक्ष्यमनलोऽन्वमन्यत ।।९१।

ततो विदर्भाधिपतिः सुतायाः करं कुमारस्य करे प्रयच्छन् ।
रत्नाकरस्य श्रियमाप सर्वां श्रियं ददानस्य जनार्दनाय ।।९२।
अन्योन्यलावण्यरसं पिपासा ह्रीतर्जिते हन्त दृशौ वहन्तौ ।
वधूवरौ गृह्यविदां नियोगात् प्रदक्षिणीचक्रतुराश्रयाशम् ।।९३।

---

१. इंदवेद । २. मुन्नति । ते- ३. वितरांमिधुपर्क-

लाजान् जुहाव दहने दहनप्रतप्त-
जाम्बूनदद्युतिरियं नृपतेः कुमारी ।
दृष्टानि किं नु सुमनोभिरकूटसाक्षाद्
वह्नेरलक्ष्यगतिभिः कुसुमानि हृष्टैः ।।९४।

पादकोकनदं तस्याः स युवा निदधेऽश्मनि ।
अशिशिक्षन् निधास्यन्नु कठोरे स्वस्य वक्षसि ।।९५।

धूमपाटलविलोचनां वधूमुच्चकैर्ध्रुवमदर्शयद् वरः ।
लज्जितामिव निरीक्ष्य तां सतीमरुन्धतीं तनुमरुन्धतीमपि ।।९६।

ऊचिरे क्षितिसुराः शुभाशिषो वैदिकीस्तदनु कूकुदः स्वयम् ।
गीतिभिर्मृदुमृदङ्गवादिका दम्पती अभिमृगीदृशस्ततः ।।९७।

ततो विमोचितप्रियतमाञ्चलग्रथितोत्तरासङ्गपल्लवबन्धो विदर्भेश्वरो वनीयकेषु वसूनि वर्षत्कुलजरतीनां पादवन्दनायोदतिष्ठद् वधूवरौ च तरुणहरिणीदृशः कौतुकागारमनयन् । तत्र च नारीक्रियमाणवारयात्रिकवृद्धविप्रविडम्बनाविशेषहसदशेष-सीमन्तिनीजनक्षणविघ्नितप्रवेशे निर्यासलिप्तपूर्वेण पीठेन संश्लिष्टत्रिकस्य कस्यचि-दुत्तिष्ठतो मुहुर्मुहुस्तद्विमोचनाभिनिवेशान् कस्यचित् सयन्त्रदेहलीदत्तपादस्याकस्मात् पण्यतद्द्वारपार्श्वद्वयदारुतरुणीपञ्जरपातचकितस्य स काकुनादान् कस्यचित् कृत्रिमवृश्चिकश्लिष्टप्रान्तस्य प्रावारस्योत्क्षेपरभसानवलोक्य स्मयमानो वरो गर्भगृहमविशत् ।

तत्र सपरिहासाः सविलासाः सकूटदैवतपूजानियोगाः सप्रियतमोच्छिष्टताम्बूल-चर्वणाभियोगाः सदीपवर्त्तिव्यतिकरनिदेशाः सश्वश्रूजनप्रणिपातोपदेशाः [1]प्रणय-वैयात्यजनितस्वयंग्रहोपगूहनास्वादाः साभिसरणगलहद्यूतवादाः साश्लीलवचनाः सविविधाकाररचनाः सकुमारीप्रीतिप्रार्थनानुनयाः सविनयाः सगूढदानाः सबहुमानाः कामिनां प्रियाः कौतुकक्रियाः प्रावर्त्तन्त ।

तत्र तत्र च प्रद्युम्नस्य वाग्भङ्गिभिर्विदग्धिमानमनुभवन्ती निरतिशयलावण्योल्ल-सितसर्वेन्द्रियवृत्तिर्वधूमयी सृष्टिरमुह्यत् । कथं कथमपि मनोनयनहारिणीभिर्हरिणनयनाभिः स विसृष्टो जन्यवासमासाद्य [2]वयस्येषु तत्तद्वदन् विनोदमन्वविन्दत् । ततः कविभिरिव व्यञ्जनावृत्तिसुहितैर्बर्बरैर्विशिष्य वर्ण्यमाना विधिवदाराधितवारयात्रिकजना खादतमोदता भुजिक्रिया चिरमवर्त्तत ।

---

१. चैयात्य । २. वस्येषु ।

सुगन्धिसलिलैः सिक्ता मालाभिः समलङ्कृताः ।
तौर्यत्रिकेण तेजन्या रजन्यामतिमोहिताः ।।९८।

इत्थमासीदनेकराजसमाजसुभगम्भविष्णुरसंहतवीणावेणुपणवस्त्रिचतुराणि दिनानि महोत्सवः ।

श्वशुरौ व्यजिज्ञपदथ स्ववेश्मने
विमनायमान इव शम्बरं द्विषन् ।
विनयेन तस्य नयनाम्बुवर्षिणो
रुदितं कथञ्चन तयोरनुज्ञया ।।९९।

ख्यातानि राजसु धनूंषि पुराणखड्गा
ये वाजिनश्च करिणश्च रथाश्च हैमाः ।
मुक्ताफलानि मणयो महितास्तदस्मै
रुक्मी सुदायमददाद् यदुपुङ्गवाय ।।१००।

स विसृज्य विदर्भभूपतिर्विकलः स्नेहवशेन चेतसा ।
रुदतीं सुदतीं स्वकन्यकामवदद् वाष्पपरिप्लुतेक्षणः ।।१०१।

श्वशुरौ पितरौ च दैवतं प्रतिपद्यस्व हरिं च रुक्मिणीम् ।
अपि संहर पुत्रियोऽभवन्मयि तं हन्त ममेति दुर्ग्रहम् ।।१०२।

अश्रूणि वर्त्तयन्तीं दुहितरमाघ्राय मूर्ध्नि महिषीणाम् ।
घनबिन्दुदुर्दिनाक्षी कथञ्चिदाश्वास्य निजगाद ।।१०३।

सुमहति कुले जाता दत्ता ततोऽपि महत्तरे
सुकृतविभवैर्योग्यं प्राप्ता प्रियं जगतः प्रियम् ।
गुरुषु दयिते देवे वृद्धासु यातृषु यामिषु
व्यवहर तथा वत्से यामो यथा न वयं ह्रियम् ।।१०४।

अत्रान्तरे च प्राविषेण्यपयोधरध्वनिं निराकरिष्णुः प्रयाणभेरीभाङ्कारो नगरनीरजाक्षीनयननिबद्धचक्षुषः सैन्यान् समनीनहत् । अनन्तरं च कौङ्कुमवाससामश्ववारवरूथिनीनामन्तरुत्तुङ्गमत्तमातङ्गनिहितरत्नशारिनिर्यन्मरीचिदुर्निरीक्षो नवनितम्बिनीनयननीलोत्पलगृहीततोरणाधिकारं नगरमवगाहमानः पश्यतां प्रणतीरवलोकनेन सफलयन् मकरकेतनः प्रतस्थे ।

सौरभ्यलुभ्यदलिवृन्दनिवारणोद्यद्-
दासीसहस्रकरचामरवीज्यमाना ।
श्यामायमानगगनाङ्गमसादि कुन्त-
च्छायाश्रयेण रविरश्मिभिरप्यमृष्टा ।।१०५।
दुर्दान्तवर्षवरवेत्रनिपातभीत-
दूरीभवन्नगरबालविलोक्यमाना ।
आख्यायमानगुणमुत्कलिकार्द्रचित्तं
बद्धाश्रुधारमबलाभिरुदीक्षिता च ।।१०६।
प्रत्युप्तरत्नरुचिरेण सुवर्णसूत्र-
जालेन रुक्मितनयः समचिच्छदद् द्याम् ।
सार्द्धं मनोभिरथ भोजकटे स्थितानां
सा निर्जगाम शिविकाकुलपालिकायाः ।।१०७।

त्रिभिर्विशेषम्

पाणौकृत्य मसारसारनयनां संसारसिन्धोर्मणी-
[1]मासारं मणिमौक्तिकस्य सृजतः संश्रित्य तुङ्गद्विपम्
तस्यैरावतवन्महोदयमनुप्रीता ननन्दुः परं
सर्वे [2]मागधसूतवन्दिशिखिनो भोगावली केकया ।।१०८।
सरसिजदृशं लज्जामौनादकिञ्चनवादिनी-
मनुसहचरीः स्मेराः पृच्छन् प्रवृत्तिमनुक्षणम् ।
कतिपयनिशा नीत्वा मध्येध्वमुद्धविनीं द्विधा
कनककलशै रम्भास्तम्भैर्विवेश पुरीमसौ ।।१०९।

तत्र नववधूप्रवेशमङ्गलमिलदनेकसीमन्तिनीगीतगह्वरमृदङ्गनादमेदुरे तोरणपरिसरे मणिप्रदीपपाणिना जननीजनेन नीतः कलितकुलदेवतानतिः प्रीतिपुलकभाजो वासुदेव-बलदेवयुयुधानोद्धवप्रमुखान् गुरून् स प्रणम्य पित्रोः पादपद्ममभिववन्दे ।

स्मेरासु जामिषु सलीलमपत्रपिष्णुं
शिञ्जानमञ्जुमणिनूपुरचारुकाञ्चीम् ।

---

१. मणीमासां रमणि-
२. मागधसूतंदिशिखिनो ।

अङ्के [1]निवेश्य नवपल्लवकोमलाङ्गीं

श्वश्रूः [2]स्नुषां सपदि गर्भगृहं निनाय ।।११०।

सा ननाम जरतीर्यदुस्त्रियो

देवकीं तदनु रुक्मिणीमपि ।

बोधिता समयविद्वधूजनै-

रालिलिङ्ग लघुनन्दिनी पुनः ।।१११।

पटमुदसीसरच्च वदनस्य कुरङ्गदृशो

रुचिमवलोकितुं किमपि जामिजनो निभृतम् ।

द्रुतमपतच्च चञ्चलितचञ्चुचलद्रसन-

श्चकितविलोचनो गृहचकोरचयश्चटुलः ।।११२।

पाणिगृहीतीसहितः सुदिनाहे पादचारेण ।

स्मेरो वरो [3]वधूभिर्देवायतनानि बभ्राम ।।११३।

मुक्त्वाऽपि तौ कङ्कणबन्धमद्धा

परस्परस्य प्रणयेन बद्धौ ।

निशाशशाङ्काविव देहभाजा-

माजानरम्यौ रतिमावहेताम् ।।११४।

श्वश्रूणामविषमसेवया गुरूणा-

मस्तम्भात् सरलतया सदा सखीनाम् ।

भृत्यानामकृपणभावतो जनी सा

सर्वेषां समजनि शीलतोऽतिहृद्या ।।११५।

अथ कदाचित् सासूयमिव प्रणयरोषरुषितया दृशा निभालयन्तीं कथञ्चिदालीजनो रतिमन्दिरमानीय नलिननयनां सव्याजमपासरदुद्वेलतामगमत् प्रियतमामुखपूर्णचन्द्रोदयदर्शनाद् दयितस्य रागसागरः । किमधिकमुच्यतामसमशरस्य निष्ठुरत्वमबलाजनेऽपि यः शिरीषकुसुमकोमलेष्वङ्गेषु स्वात्मन्यपि युगपदनात्मनीनो नाराचनिचयं निचखान । क्षणमभूदकलितपरस्पराकूतमनुपलभ्यमानसंकथावसरमयोजितान्योन्यनयनमनवधारितक्रियमकृत्रिमक्षोभशिथिलसङ्कल्पमनल्पलज्जाभिलाषस्मयसाध्वसस्तम्भगम्भीरमवस्थान्तरमथामन्दमन्दाक्षतुन्दिलाशायामिन्दुमुखीमनुकूलयितुकामः प्रियतमो विदग्धभङ्गिमधुरमनयत्[4] । अतीन्द्रियमाभीलमात्मजनस्य

१. निवेश्म, २. स्तुषां, ३. वघूनि, ४. मलयत् ।

प्रतिकर्त्तुमव्यवस्यन् प्रभुजनो न वचनीयताया भाजनमिदं पुनरदेशरूपमत्यकरुणं यत्पुर एव परिभवेऽपि चिरमुपेक्षणमथवेदमपि मनस्वितैकप्राणस्य परिव्रढिमगुणस्य विस्फूर्जितमिति न पर्यनुयोगमर्हति किन्तु त्वत्पाणिपल्लवो यातस्वीकारदामदत्तवैयात्योऽयं जनः प्रगल्भते । पीडयतितरामिदमकाण्डमौनं मनस्विजनममुं मदनवेदनाविधुरम् । अपि तव वियोगानलप्लुष्टशिष्टस्य दासजनस्य प्रतिप्रतीकममृतोर्मिलामङ्कपालिमुपनय त्वदीयगुणजपजातकिणकठोराङ्गुलिरिदानीमपि करः करोतु कच्चिदुरोजस्पर्शपारणां चिरमधरमधुपिपासुवदनमिदमदयेन वञ्चय । किञ्च कोकिलाकाकलीकुकूलकदर्थितस्य किन्नरकण्ठिकर्णकुहरस्य कारुण्यं कुरु । अथवा समस्तमास्तामिदमेव तावदभ्यर्थयामहे महेशमौलिमण्डनमुखीम् ।

भूयतामचिरकालमुद्रया नीलनीरजवनेषु सर्वतः ।
पक्ष्मलाक्षिचपलेन चक्षुषा साचि सत्कुरु निजं जनं सकृत् ।।११६।
इति चाटुशतेन तेन तन्वी त्रपया किञ्चन हापितापि तावत् ।
विततार मनो मनोभवाय प्रतिजग्राह च लालसालसाक्षी ।।११७।

क्रमेण च व्रीडाभिभाविनि मदनमदप्रतिस्कशे विजृम्भमाणेऽनुरागसौराज्ये करभोरु किमिह पादपद्मद्युतिद्रोहिणि पद्मरागकुट्टिमे निषद्य ननु मदीयवक्षोवेदिनेदीयसीमेव भवतीमभिलषामीति पुलकदन्तुरेण पाणिना विलासवलितलोचनां वधूं मत्सङ्गमानिनाय प्रियतमः प्रावर्त्तत च भूयोभूयश्चुम्बिताधरबिम्बमतनुसीत्कारमुखरममन्दमणितमालिङ्गितकपोलकण्ठकुचकलशमाकुलधम्मिल्लमुल्लसितचाञ्चल्यमालुप्तचित्रपत्रकमुदीयमानस्वेदबिन्दुतारकितवदनमुत्त्रुटितहारमणिकीर्णपरिसरमामृदितमालतीदामश्लिष्टशय्यमनवसिताभिलाषमतिमात्रमननुसंहितस्मरसंहितानुरोधमनिर्वचनीयसुखास्वादमुकुलिताक्षं निधुवनम् ।

आसाद्य स्वयमसमेषुमायताक्षी
नेतारं हृदयचरं विलासिनीनाम् ।
चित्राणां सुरतविवर्तविभ्रमाणा-
मावृत्या सुखजलधिं चिरं जगाहे ।।११८।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनाम्ना
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते
प्रद्युम्नपरिणयो नाम सुखाङ्कः प्रथम उच्छ्वासः ।।

## अथ द्वितीय उच्छ्वासः

अथ गर्भमधत्त भामिनी
चिरमालीभिरभीप्सितोदयम् ।
शरकाण्डकडारकान्तिभि-
स्तनिमाधारितरां ततोऽङ्गकैः ।।१।

विदताप्यखिलं प्रियेण सा परिपृष्टा विकृतिं रहस्तनोः ।
अवहित्थपरा न लज्जयाऽभिदधे किञ्चनसाचिलोचना[1] ।।२।

परिपाण्डुवपुर्विलासिनी दधती धाम महन्मनोभुवः ।
उदयान्तरितेन्दुमण्डला दिगिवाखण्डलपालिता बभौ ।।३।

असितोपलनीलचूचुका समनाभिर्वलिवर्जितोदरी ।
शुशुभे न सातिशोभनं विकृतौ कामपि कान्तिमश्नुते ।।४।

अलसालसलोचनक्रमां तनुभारायितरत्नभूषणाम् ।
परिमन्दगतिं न्यरुन्द्ध तां प्रणिपातश्रमतोऽपि रुक्मिणीम् ।।५।

यदचीकमतेयमञ्जसा तदपश्यद् धुरि दोहदप्रियम् ।
मणिहेममये पुरे परं मृदुमानीयत यत्नतो जनैः ।।६।

सुचिरादुदितेषु वस्तुषु प्रचुरं चारु रुचेररोचकम् ।
अहसन्नवगत्य याचिकाः क्वचनाक्षुण्णरसे चलां रुचिम् ।।७।

अतिविस्तृतवीध्रलोचना दधती दोहदरक्षकान् मणीन् ।
अलकैरुपभूमिगैरभून्नयना सेचनिका प्रियस्य सा ।।८।

न विशेषघनौ स्तनौ तदा न मधूकद्युतिगण्डमण्डलम् ।
न निजागमने कृताकृतां सुदृशो व्यस्मरदुत्थितं प्रियः ।।९।

दयितस्य हसाय सुभ्रुवो भिदुरा नीविरभूद् यदृच्छया ।
अतिकाञ्चनकाञ्चि किञ्च तज्जघनं कौतुकमावहद् दृशोः।।१०।

---

१. -नोचना ।

अथ पुंसवनेन संस्कृता कृतसीमन्तविधिर्वराङ्गना ।
पतिमुत्सुकमाततान सा रचितक्षेत्रमखेव रत्नभूः ।।११।

आलीजनो मुखरुचेरवगच्छति स्म
विप्रश्निकाः परिजनः परिपृच्छति स्म ।
प्रज्ञाः पुरन्ध्रय उपेत्य निमित्तभेदै-
र्निश्चिन्वते स्म तदपत्यविशेषसूतिम् ।।१२।

कुलाङ्गनोक्तैः समयैः सुशीला सा देवमासंगमयाम्बभूव ।
सङ्कुचायमानैर्दिवसैः सखीभिरौत्सुक्यतो वै जननं प्रपेदे ।।१३।

सानुक्रोशैः सस्पृहैर्बन्धुवर्गैरद्यश्वीना सेव्यमाना समन्तात् ।
जीवञ्जीवैरुन्मुखैरीक्ष्यमाणां राका सन्ध्यां सा वधूरन्वकार्षीत् ।।१४।

कदाचिदुच्चस्थग्रहगणगुरूकृतायां वेलायामितस्ततः प्रसर्पन्तीषु प्रेष्यासु लग्नग्रहणसावधानेषु गृहीतनानासमयसाधनेषु परस्परं परामृशत्सु मौहूर्तिकेषु सविधवर्त्तिषु बालतन्त्रवैज्ञानिकेष्वगदङ्कारेषु गौरसर्षपक्षेपभूतिगुण्ठनैररिष्टमावृण्वत्सु रक्षोघ्नरक्षादक्षेषु द्विजेषु, सलिलमभिमन्त्रयत्सु मान्त्रिकेष्वन्तर्वंशिकैरन्तःप्रवेश्यमानासु जननकर्मठासु जरतीषु, नीयमानेषु सुखप्रसूतिहेतुषु मणिषु, प्रणीयमाने सोष्यन्तीहोमकर्मणि, सोत्कण्ठेषु बन्धुविप्रपरिजनेषु वह्निपयःप्रदीपशस्त्रमुसलसिद्धार्थैरशून्ये गर्भसद्मन्यरणिहिरण्यरेत-समत्रिदृष्टिरिव चन्द्रमसमदितिरिव दिवाकरमपर्णेव सिद्धसेनं नीतिरिव महोदयं विद्येव विवेकं सङ्गतिरिव स्नेहं शान्तिरिव सुखमध्यात्मचिन्तेव प्रबोधं सा सुतमसूत ।

नृत्यन्तीनाममरसुदृशा शिञ्जितेनानुविद्धो
मध्ये व्योमध्वनिरनुपमः शुश्रुवे दुन्दुभीनाम् ।
देवर्षीणां नभसि ववृते वर्द्धनैः साधुवादै-
र्दिव्यैः सूनैरतनुपतितैरङ्गनं तत् पुपूरे ।।१५।

अपि च–

बभौ विमलमम्बरं ग्रहगणैरमन्दप्रभै-
र्ववौ सुरभिशीतलः सुखयिता समीरः शनैः ।
चुकूजुरमृतस्वराः शकुनयः शिवाः सर्वतो
जगन्नयनमङ्गलं नवमिवाभवद् भूतये ।।१६।

अनन्तरं च–

बध्यन्तां मणितोरणान्यनुगृहं सौवर्णकुम्भैर्बहि-
वेंदिः संस्क्रियतां पतन्तु परितः पाटीरनीरच्छटाः ।
रम्भास्तम्भयुगैर्दिशन्तु सकला [१]द्वारे दृशोर्मङ्गलं
प्रासादेषु परिस्फुरन्तु रुचिरास्तुङ्गाः पताकाः शतम् ।।१७।
रथ्याः सन्तु चतुष्कपूरधवला देवालयालम्बितै-
र्घण्टा दामभिरुल्लसन्त्वभिनवैरालोहितैः केतुभिः ।
लाजैर्मौक्तिकमिश्रितैरविरला यान्तु श्रियं श्रीर्यथा[२]
प्रत्यग्रोत्सवसम्भ्रमादिति पुरे कोलाहलः प्रासरत् ।।१८।

युग्मम्

अथानन्दगद्गदं गायन्तीषु कुलकामिनीषु नृत्यन्तीषु वारविलासिनीषु विविध-हासचेष्टामारभमाणेषु वैहासिकेषु पूर्णपात्रग्रहणसंरम्भमुक्तमर्यादेषु परिजनेषु बलवदाहन्यमानेषु दुन्दुभिषु वाद्यमानासु [३]भेरिषु कपिशीर्षमान्दोलयत्सु दुर्गयन्त्रध्वनिषु तारतरं पठत्सु सूतमागधवन्दिषु चिरं कारागारसेविनां वैरिनरपतीनां रणरणायमानासु छिद्यमानशृङ्खलासु हर्षौत्सुक्यपरापतत्प्रकृतिसम्बन्धिबान्धवदिष्टिवर्धनध्वनिप्रतिनादिनीषु नगरनारीनिकुरम्बनिचितासु निखिलासु कक्षासु दुर्वारजनसहस्रसम्मर्ददुःस्थेषु द्वाःस्थेषु [४]क्वचिदुभयतः सन्दंशवशेनोत्थितेषु चिरमवनिमस्पृशत्सु परस्परकेयूरकोटिकृष्य-माणोत्तरासङ्गेषु चलत्परिकरेषूपहारपाणिषु पार्थिवेषु कथं कथमपि सङ्कुलान्निर्गत्य नवं जनुर्मन्यमानेषु कुब्जवामनकिरातकञ्चुकिषु पर्वणि विजृम्भमाणो [५]जलधिरिव रत्नराशिमुदस्यन् सामान्यसुहृत्पुरोहितः स्वयमुपेत्य वासुदेवो मान्यानभिवन्द्य वन्दिताङ्घ्रि ह्रियानिच्छन्तमपि प्रद्युम्नं पौत्रस्य जातकर्माचीकरत् ।।

आप्लुतः स च सचैलमुन्मनाः कर्मकाश्यकथितेन वर्त्मना ।
श्रद्धया चरदुदारदक्षिणं साङ्गमभ्युदयदायिदक्षिणः ।।१९।
नारीणां सञ्चरन्तीनां मञ्जुमञ्जीरशिञ्जितैः ।
तद् गृहं शब्दभूयिष्ठं शब्दशास्त्रमिवाभवत् ।।२०।
बालेन्दोरुदये तप्तनिशायां परिपन्थिनाम् ।
रेजुर्ग्रहा इव जनाः पूर्णानकमणीभृतः ।।२१।
महामणिधरा मुक्तक्ष्वेडाः कञ्चुकिनो मुदा ।
अहो कुण्डलिनस्तस्थुराराद् गरुडकेतनात् ।।२२।

१. द्वारोदृशोर्मंगल; २. श्रीयथाः, ३. इदं मातृकायां नास्ति । ४. 'क्व' इति नास्ति ।
५. जलभिरिव ।

जातकर्मणि कृते यदुनागो
नप्तुरुल्लसितदानमहौघः ।
दैन्यशालदलनेऽर्थिजनानां
श्रान्तिशून्यमकरोत् करमुच्चैः ।।२३।
पुरायं वारयामास जिष्णोर्वृष्टिमविस्मितः ।
विस्मितः स परं तस्थौ स्वर्णवर्षेऽस्य भूयसि ।।२४।
दारिद्र्यगोत्रं दलयन्नुपेन्द्रः
कस्यापि वज्रं विससर्ज दीप्रम् ।
श्रियं बृहद्दुर्गतये परस्मै
प्रभूतमुक्तां नरकान्तकोऽदात् ।।२५।
स्वयं ददाने नवमौक्तिकाञ्जलिं
जनार्दने पाणितनुप्रभाप्लुतम् ।
वयं किमर्हा मनुकृष्णकृष्णला
इति ब्रुवन् कोऽपि चुकोप वैदिकः ।।२६।

दामोदरेण प्रतिपादितमदृष्टपूर्वं द्रविणराशिमात्मसात्कुर्वतः कस्यचिद् दुर्विद्यस्य चिरप्रणयिन्याः [1]कालकर्ण्या वियोगदुःखादिव नयनोदबिन्दुरपतत् ।।

आनन्दास्रमुदञ्चतः प्रतिजनं देहीत्यलं जल्पतः
पात्रापात्रविचारणां विजहतो रोमाञ्चमुद्बिभ्रतः ।
अश्रद्धाप्रतिगृहणतां परमभूत् प्राभूतिकानां धनै-
र्दातुस्तस्य तु दानवीरजलधेरुद्वेलतैवाभवत् ।।२७।
कृष्टार्थित्राकृतहयखुरैर्दत्तनागेन्द्रदानैः
सिक्ता त्यक्ताभिरतिभरकैः स्थूलमुक्ताभिरुग्रा[2] ।
क्षोणी कीर्तिव्रततिमसृजत् तस्य तां हन्त यस्या
धत्ते पौष्पीं श्रियमुडुपतिर्मौकुलीमृक्षवर्गः ।।२८।
प्रबुध्य प्रोन्मीलन्निजगजघटाशृङ्खलरवैः
समन्तात् सैमन्तैर्मणिभिरवलोक्यातपमिव ।

१. कालकरार्या । २. रुमा ।

निशीथे सम्भ्रान्तान् विबुधवनितावत्प्रियतमा-
नवारुन्धन् स्मेरा वितरणमहोऽयं यदुपते ।।२९।

शशिमण्डलचुम्बिचन्द्रशालाः
सततं शीलयति स्म वीतचिन्तः ।
बहुदातरि देवकीतनूजे
कविलोकोऽस्य यशांसि वर्णयिष्यन् ।।३०।

चूडारत्नमरीचिमञ्जुमुकुटानुत्कर्णभूषाद्युती-
नश्वीयेन तदर्पितेन परितः सञ्चारिसेनान्वितान् ।
दिश्यान् वन्दिजनानवाप्य गजतां तस्मात् परावर्तिनः
प्रत्येकं परिपृच्छति स्म जनता कौतस्कुतोऽयं नृपः ।।३१।

अनिवृत्तदुन्दुभिध्वनिरविश्रान्तनटनर्त्तकविदूषककेलिरमन्दपावकजयशब्दः समाकृष्यमाणनानादिगन्तगुणिगणः परापतदनेकदेशपार्थिवातिथ्यजातजागरजृम्भमाणाधिकारिजनश्रेणिरायव्ययप्रतिसन्धानव्यामोहव्याकुलोऽभवद् गणकलेखनिकायः स महोत्सवो दिनं दिनमुल्ललास । क्रमेण च समागतायामुचितनिशि बहिःस्थितेषूत्खातखड्गपाणिषु पुरुषेषु सर्वतः प्रसरति नानानिवेदनीयान्नसौरभे सान्द्रीभवति विविधरक्षाधूपधूमे पूजयितुमुपाहृतेषु हलमुसलमन्थानवेणुयष्टिशङ्खशस्त्रेषु निहितेष्वलभल्लातकप्रमुखवस्तुषु विहितेष्वखिलयोगिनीवल्लभेषु बलिषु लिखिते जातमातृकापटे कृताकृतमवेक्षमाणे कुलाचारचतुरे जरतीजने सम्भ्रान्तपरिचारिकाशतसमाकुलः कुलकामिनीगीतिगतनिद्रगृहकुरङ्गकौतुकमदः षष्ठीमहोत्सवः प्रावर्त्तत ।

सिन्दूररागकृतहस्तकशोभमाना-
मातर्पणेन रुचिरां रचयाञ्चकार ।
सस्वस्तिकां सपरिवारगणां च षष्ठीं
स्कन्दं शिखण्डिसहितं च पुरन्ध्रिवर्गः ।।३२।

इष्टगन्धकुसुमैर्वरधूपैःषट्शिखैरमलिनैर्मणिदीपैः ।
सप्तधान्यसहितैरुपहारैर्जागरेण किल तौ ततृपाते ।।३३।

निधाय पुरतः षष्ठ्या बालं चित्रपटार्पितम् ।
जग्राह धात्री दीपौघं म्लापयन्तं तनुश्रिया ।।३४।

वेतण्डवक्त्रमभिपूज्य महीसुरेभ्यो
वासोहिरण्यसुरभीर्वितरन् यथेच्छम् ।
मौहूर्तिकैरभिहितेऽहनि चक्रपाणि-
श्चक्रे शिशोर्गुरुजनैः सह नामकर्म ।।३५।
प्रविशन् रणाङ्गनमसौ रिपुवर्गै-
र्न निरोत्स्यते निजमहोभिरधृष्य
इति बाहुजानुगुणमूर्जितमर्था-
दनिरुद्ध इत्यधृत नाम स नप्तुः ।।३६।
गुणगृह्यैर्मुकुन्दस्य स्वयं गृह्यप्रणेतृभिः ।
अनुमेने मुनिगणैररागैरागतैश्च तत् ।।३७।
संवर्त्तिकामधुरपाणिपदं विभक्त-
भ्रूलेखमुन्नतललाटमुदग्रनासम् ।
[1]दीर्घं निमेषनयनं नयनाभिरामं
बालं विलोक्य मुमुदे सकलोऽपि लोकः ।।३८।

हृदयमिव पद्मरागपर्वतस्य सारमिव विद्रुमद्रुमस्य गर्भमिव प्रभात भानुमण्डलस्य पिण्डमिव दरदगण्डशैलस्य नभश्च्युतमुदीयमानेन्दुबिम्बमिव मणिमिव महोरगोद्गीर्ण-महादेवमह इव शरवणविनिःक्षिप्तं निधानं सौकुमार्यस्य निखिलमनोनयनबन्धस्य निवासं लावण्यस्य लीलागृहं महापुरुषतलक्षणानां किसलयं यदुकुलकल्पवृक्षस्य कुसुमं दिव्यदोहदानां फलं बन्धुता मनोरथमहीरुहस्य ललितं लुलितनीलालक-वल्लरीभिर्भूषितं नखमणिकणिकाभिः परीतं परिस्फुरन्तीभिरङ्गप्रत्यङ्गप्रभाभिः प्रीति-विस्फारिताभ्यां विलोचनाभ्यामात्मजमापिबन् प्रद्युम्नोऽपि सुधाह्रदावगाहनादिव सर्वाङ्गीणमानन्दमविन्दत् ।

क्रमेण वर्द्धिष्णुरयं दिने दिने जनस्य तेने नयनोत्सवं शिशुः ।
शशीव दीप्त्या निजया निवारयन् वलक्षपक्षे विततास्तमस्ततीः ।।३९।
शिरःसमारोपितगौरसर्षपो ललाटभागेऽञ्जनबिन्दुलाञ्छितः ।
अकारणस्मेरमुखः सुखं दृशोःपितुः स मुष्टिन्धय उत्पदो दधौ ।।४०।
महापुरानन्द इति प्रजल्पिते विशिष्य धात्रीभिरुदङ्गुलिध्वनि ।
उपेतजृम्भं मुखकं शिशोः शुभं चिरादुषः कोकनदाभमाबभौ ।।४१।

---

१. दीर्घा- ।

कुतोऽपि बिम्बोष्ठपदे विसारिणो दृगन्तयोरप्रतिसंहताश्रुणः ।
स्मितस्य तस्मिन् रुदितस्य च क्षणं बभूव पित्रोः प्रमदाय सङ्करः ।।४२।
विशेषगौरी शिशुनाङ्कशायिना गृहीतनासाभरणा नताननाम् ।
विलोक्य हारिद्रनिवासिनीं प्रियं प्रियः परां कोटिमवाप शर्मणः ।।४३।
विराविणि क्रीडनके करार्पिते सुवर्णपुष्पस्तवके विलम्बिनि ।
निवेश्य वक्त्रं नयने मुदं ददौ शिशुः सदोलामधिरोपितः पितुः ।।४४।
प्रगृह्य मातुर्मणिकर्णिकां रयान्निवेशयामास मुखे यदर्भकः ।
तुतोष तेनैव पयोधरं त्यजन्नहो ! शिशूनामनिरूप्यमीप्सितम् ।।४५।
कृतार्चनो नूनमगस्त्यकोरकैर्बभौ स वैयाघ्रनखैर्विभूषितः ।
मधुव्रतालीव मुखाब्जलम्पटा रराज कण्ठेऽस्य च कण्ठमालिका ।।४६।
विसर्पिणं जानुकरेण कुट्टिमे धृतासिताश्मन्यतसीसुमद्युतिम् ।
तमर्भकं घर्घरिकारवैरवैदितस्ततोऽन्विष्य चिराय धात्रिका ।।४७।
दिगम्बरो मौक्तिकधूलिधूसरो ललाटलोलन्नवहीरचन्द्रकः ।
जटीभवन्मूर्द्धजमण्डितो बभौ शिशुः कपर्दीव स मातृमण्डले ।।४८।
कथञ्चिदालम्ब्य स हेमदण्डिकां चचाल चञ्चन् खलु पञ्चषाणि पत् ।
पदानि शिञ्जानसुवर्णनूपुरो न पश्यतां तेन चचाल चेतसः ।।४९।
असौ रहोलालनजातसंस्तवः समारुरुक्षन् पितुरङ्कमोजसा ।
अलज्जयन्तं वदति स्मितानने मुहुर्गृहाणेति गिरं जनार्दने ।।५०।
सलीलमुत्सङ्गमुपागतो हरेश्चिराय चिक्रीड स कौस्तुभं स्पृशन् ।
प्रगृह्य दामाप्रपदीनमस्य च स्वकण्ठमानीय ननन्द लालितः ।।५१।
गृहीतशक्तेर्नवमेव केषुचित् पदेषु लौल्याल्लयतोऽस्फुटाक्षरम् ।
जनाय नारोचिषताऽस्य शृण्वते चटूनि नानाशुकसारिकागिरः ।।५२।
अभूत् सभायाः स चरिष्णुभूषणं प्रियंवदं क्रीडनकं रमापतेः ।
क्षणान्तरालेऽप्यवरोधयोषितां विषीदतीनामसवो बहिश्चराः ।।५३।

सेवासन्निहितदिगन्तरालधरणिधवधूपमानधूलिलवः सात्वतयतिस्नेह-समायातदेवर्षिवरवध्यमानमूर्द्धजस्तत्तद्द्वीपपतिप्रहीयमाणविविधोपलपुत्रिकावलो-कनोल्लसितलोचनो मुकुन्दसंलापलीलैकताननारदपरिवादिनीगुणान्दोलनोदीयमा-ननानास्वर श्रवणसञ्जातकौतुकः कदाचिदुदीयमानसितासितकपोतक्रीडितमनुभवन्

कदाचिदाधारणोपनीतकलभकराग्रेषु मोदकमर्पयन् कदाचिदचिरप्रसूतांस्तर्णकान् वर्णकम्बलशय्यासु स्वापयन् कदाचिद् गृहसारङ्गशृङ्गेषु कनककाञ्चीराबन्धयन् कदाचित् स्थविरदौवारिकदीर्घतरकूर्चपल्लवप्रान्तेषु मौक्तिकानि ग्रथयन् कदाचिदितरेतर-प्रहारसम्भररणत्किङ्किणीमेषयुगलयुद्धलीलामवलोकयन्नयं बालकेलिभिः कमपि कालं निनाय ।

मद्राकृतोऽथ मणिकुण्डलशोभिगण्डो
मूर्ध्ना लसन्नवशिखण्डकमण्डितेन ।
मन्दीभवत्सकलकेलिरसो वयस्यै-
र्युक्तो लिपिं गणितमेष गुरोः शिशिक्षे ।।५४।

कलवागपि बालोऽसावानुपूर्वीमयत्नतः ।
अन्ववादीद् यदम्लिष्टामुपदेष्टा तुतोष तत् ।।५५।

अथोपनीतः समये कुमारो नवोपदिष्टैर्विनयैर्विनम्रः ।
यथोक्तसंस्कारविवृद्धतेजा अभ्युद्धृतो वह्निरिवाबभासे ।।५६।

अचञ्चलं चञ्चलकाकपक्षकं नैसर्गिकप्रश्रयशोभिताकृतिम् ।
हरेर्निवेशात् समये सुमेधसं छन्दांसि सान्दीपनिरध्यजीगपत् ।।५७।

अस्पृष्टो विषयरसेन शैशवेन प्रोत्सृष्टो गुणगृहयालुः शुद्धचेताः ।
आपूर्णां नृपतिसुतैः स पाठशालामाचार्यैरपि विविधैर्युतां सिषेवे ।।५८।

तत्र सत्कृत्य धनुर्वेदविदः सम्पूज्य पिनाकपाणिं संनियम्येन्द्रियग्रामं समाहृत्य सर्वोपकरणानि विरचय्य योग्यायोग्या भुवोऽवगणय्य विरुद्धानि कुतूहलानि विधाय विततमक्षवाटं समवयस्कैः समव्यवसायैः समप्रयोजनैः समबलैः समस्वभावै राजन्यकुमारकैः सममसमं श्रममन्वतिष्ठत् ।

यथाकालं यथाबलं यथाबुद्धि यथोपदेशमखिलासु च विद्यासु व्यवस्य निसर्गगम्भीरप्रकृतिरसौ न मनागपि [१]म्लानिमापद्यत । उपासनानुरक्तस्य दिने दिने रेवतीरमणः सात्यकिश्च समागम्य स्थानेषु सन्धानेषु मुष्टिषु [२]व्यामेषु विशेषमशिशिक्षतां सकृदुक्तग्रहणपटोर्वटोश्चास्य चिबुकमचुम्बताम् । अचिरादेव चास्य साङ्गाः सरहस्याः सकलाः सकलाः समपद्यन्त विद्याः । स्वयमुद्बुभूषवो हि महनीयजन्मनां [३]गुणनिमित्त-मात्रमासङ्गमाश्रयन्ते ।

---

१. म्लाग्नि । २. व्यायेषु । ३. गुणानिमित- ।

तथा हि । चतुर्षु वेदेषु षट्सु वेदाङ्गेषु पुराणन्यायमीमांसाधर्मशास्त्रसाङ्ख्यपातञ्जलेष्वायुर्वेदे धनुर्वेदे गान्धर्वेऽर्थशास्त्रे वार्त्तायां भरते कोशेषु काव्येषु रूपकेष्वाख्यानाख्यायिकेतिहासेषु कथासु पञ्चवक्त्रीकरणशार्दूलीकरणप्रमुखकौतुकेषु शाकुनेषु मुष्टिचिन्तासु सामुद्रिकेषु स्वरेषु शालिहोत्रे हस्तितन्त्रे रत्नशास्त्रे पाकशास्त्रे गारुडे द्यूतकलासु चौरपरीक्षासु मल्लविद्यासु मायेन्द्रजालेषु स्मरसूत्रेषु दामग्रथनेषु चित्रकर्मसु विचित्रवेणिबन्धेषु पत्रलेखासु विश्वकर्मप्रणीतेषु सकलशिल्पेष्वष्टादशभाषास्वष्टादशलिपिषु करसंज्ञास्वङ्कसंज्ञास्वन्येषु च कलाभेदेष्वद्वितीयो बभूव ।

अष्टसु स्थानेषु पञ्चसु मुष्टिषु पञ्चसु [१]व्यामेषु त्रिषु सन्धानेषु चतुर्षु लक्ष्येषु शीघ्रसन्धाने दूरयातित्वे दृढचतुष्के बाणभङ्गे वराटिकावर्त्ते बिन्दुके गोलकयुगे शब्दवेधित्वे च स सिद्धहस्तोऽभवत् । ब्राह्मनारायणशैवपौरुहूतवायव्यवारुणप्रमुखेषु सप्रयोगेषु सोपसंहारेष्वस्त्रेषु च सिद्धिमलभत । चक्रकुन्तकृपाणासिधेनुगदामुद्गरमुष्टियुद्धेषु नियुद्धेषु धावनेषु प्रतरणेषु निमज्जनेषु प्लुतिषु च प्रजगल्भे । [२]वलयविभागेऽङ्कुशकर्मणि सारथ्ये चाप्रतिरथोऽभवत् । निरन्तरव्यायामविपुलवज्रसारवक्षसः शार्दूलप्रकोष्ठस्य कालायसपिण्डनिष्ठुरप्रगण्डस्य तस्य पुरतो महाबला अपि मल्लमतल्लिका नववल्गुस्तेन शिथिलमिव दन्तयोर्गृहीतं मत्तमातङ्गयुगलं न चचाल । स च कन्दुकक्रीडितकेन तरुणकण्ठीरवानपोथयत् । किमथवा बहुवर्णितेन ।

अलौकिकं तस्य बलं विलोक्य बलोऽपि विस्मेरमतिर्बभूव ।
धानुष्कतां बाढमदृष्टपूर्वां दृष्ट्वाऽर्जुनोऽपि प्रसभं ननन्द ।।५९।
इति सकलकलेऽपि वृष्णिचन्द्रे नयनवतामुद्गिरत्युदाराम् ।
अभवदनुमतिः [३]स्फुटं गुरूणामहह चिराय यथासुखं विहर्तुम् ।।६०।

अत्रान्तरे च मनस्विनीमानद्रविणलुण्ठाकेन शिशुताशर्वरीप्रभातेन मदनमहीपमङ्गलाभिषेकेण नवनितम्बिनीनयननलिनदिनकरोदयेन तनुवनीवसन्तवैभवेन शृङ्गारसुहृदा सङ्गीतबन्धुना लावण्यजीवितेन संसारसारेण भगवतः कालस्य स्मितेन वसनाभरणेन प्रसाधनेनानुपदेहेन वर्णकरेणाकापिशायनेन मदेनाधनेन सम्मदसाधनेनाप्रभुत्वेन स्वातन्त्र्येणानिन्द्रियजयेन नैरपेक्ष्येणायोगेन सर्वेन्द्रियपाटवप्रदेन नृपतिनेव विविधविषयभोगाभिलाषिणा सौमित्रिणेव रामानुरागकरेण भरतेनेव शत्रुघ्नोत्साहप्रदेन दुर्योधनेनेव कर्णप्रहितलोचनेन [४]श्रीकृष्णेनेव [५]जनितकामेन वामनेनेव बद्धबलिना नेपालवनेनेव सञ्चलन्नेत्रेण विष्णुनेव सश्रीवत्सेन वयसा समालिङ्ग्यत ।

---

१. व्यायेषु । २. वलग । ३. स्फुटिं । ४. कृष्णेनेनेव, ५. जनित्त- ।

प्रकृतिसुन्दर एव विदिद्युते स नितरां नवयौवनभूषितः ।
सुरतरुः स्वयमेव मनोहरः कुसुमसञ्चयसंवलितः किमु ।।६१।

कुन्दमारोप्येव यौवनशिल्पिना जनितयोग्यारोहावरोहाणि सुविभक्तानि तदङ्गान्यहमहमिकया नितम्बिनीनां नयनानि जगृहुः ।

न चमरीचिकुरैरुपमेयतामसहतास्य मनागपि कैशिकम् ।
दधति ते परिकर्मजुषः श्रियं ननु च मञ्जुलतात्र[1]निसर्गतः ।।६२।
[2]अलिकमुज्ज्वलमुन्नतमाबभौ स्मरसुतस्य समाश्रितमूर्णया ।
जनयति स्म विरोधिषु यत् स्फुटं प्रकटितभ्रुकुटीविकटं भयम् ।।६३।
अरुचतामतिनीलतमायते सुपृथगस्य कृशे कुटिले भ्रुवौ ।
[3]सुतनुमानतरोः परिकर्त्तनं विषमबाणकृपाणयुगं किमु ।।६४।
अविरलकुटिलाग्रतीक्ष्णपक्ष्मद्वितयममुष्य दृशोः सरोजशोभाम् ।
अहसदरुणकोणमङ्गनानां स्मरशरशल्यधुरां दधानमन्तः ।।६५।
परमसौरभसम्भृतिनाडिका श्रियममुष्य दधे [4]न च नासिका ।
अधरबिम्बफले कृतलालसा प्रणयिनी शुकचञ्चुरिव स्थिरा ।।६६।

कोजागरे श्रियमवाप्य समेधितेन
कोजागरेऽपि सहसा सुकविः सचेताः ।
अश्मश्रुलाञ्छनममुष्य मुखं कलङ्क-
श्यामापि तेन शशिना सदृशं ब्रवीतु ।।६७।

मदकलवनकुम्भिकुम्भलीलामलभत तस्य मनोज्ञमंसयुग्मम् ।
अदधत सुषमापयोधिपूरे श्रियमपि कम्बुवरस्य किन्न कण्ठः ।।६८।

वसुन्धराधारणधुरीणसारशीकरयोर्मणिबन्धबन्धुरयोरस्य बाह्वोश्चिरपरिश्रान्तस्यानन्तस्य विश्रमायेव युगलमधस्तादलमलम्बत ।

बलभिदुपलशैलाधित्यकाकान्तिवक्षो
नियतविजयलक्ष्मीविश्रमक्षोणिरस्य ।
अनधिगतरसाय क्रीडितायानुवेलं
तरलयतु कुतो वा नागरीणां न चेतः ।।६९।

---

१. –लतात्रसर्गतः । २. अलिकंसुज्जल- । ३. सुतनुमानपरुः ।
४. न नासिका । अत्र चकारो नास्ति ।

कनकदण्डममुष्य करौ सदा किमु रुषारुणतां च कठोरताम् ।
अबिभृतां निजमङ्घ्रिमचोरयोः कमलविद्रुमयोः प्रजिहीर्षया ।।७०।
अङ्गेषु राज्ये सति शैशवस्य लब्धाधिकारः कृशिमा समन्तात् ।
बलीयसागत्य तु विग्रहेऽस्य मध्ये निबद्धो नवयौवनेन ।।७१।
मृगरिपुरयतां कृशोदरस्य स्मरतनयस्य विलग्नकान्तिलेशम् ।
अभिलषति पराक्रमेऽपि साम्यं यदि पशुतां स तदा निजां व्यनक्ति ।।७२।
सङ्ग्रामप्रसृमरसप्ततन्तुयूपावालाने विजयमहामतङ्गतस्य ।
सुस्तम्भौ विततयशोवितानधृत्यै रेजाते रणरसिकस्य तस्य जङ्घे ।।७३।
रेखातपत्रकुलिशध्वजमत्स्यचिह्नौ
शोणोन्नमन्नखमयूखहृतान्धकारौ ।
पादौ मृदू यदुवरस्य निसर्गरक्तौ
भूपालमौलिशतशेखरतां दधाते ।।७४।

अभिनवमुदिरमन्द्रस्तनितमधुरस्वरस्य तस्य स्मितस्नपिता विनयभूषिताः प्रणयपेशला गिरः कस्य न कर्णयोः पीयूषवर्षमाचरन् कस्य न शुश्रूषया तरलतामरचयन् कस्य न हृदयमात्मसादकुर्वन्, कस्य न चिरपरिचितस्येवानुगमनमनीषामुदपादयन्, कस्य न परमभाग्यभाजनतामात्मनः समभावयन् ।

स च खर्व इव विनयेन प्रांशुरिव प्रतापेन स्मित इव विवेकेन मृदुरिव सौजन्येन जड इव गाम्भीर्येणोन्मत्त इवौदार्येणार्त्त इव वात्सल्येनाक्रान्त इव धैर्येणागृहीतः परकलत्राभिलाषेणास्पृष्टो मोहेनादृष्टो लोभेनाश्रुतः क्षोभेण विस्मृतोऽहङ्कारेण हीनो हठेन वर्जितो निष्कारणक्रोधेन सेवितो धर्मेण सङ्गतः सत्येन संपृक्तः सद्भावेन संस्पृष्ट उत्साहेन सम्मतो यथोचिताचारेण पूर्वाचल इवोन्नमितमित्रो मित्र इव द्विजराजार्पितवसुर्वसुरिव श्रितमुकुन्दो मुकुन्द इव स्वीकृतविनतानन्दन इव यक्षविधूननोत्सारितपरप्रवरः प्रवर इव सदासेवितसुनासीरः सुनासीर इव दुष्टभूभृद्भङ्गगृहीतशतकोटिरखण्डवीरव्रतोऽप्यसुरहितहन्ता समरसोल्लासोऽप्यसमरसोल्लासः प्रवृत्तदानवारणसक्तोऽप्यवारितदानः परप्रियाभिलाषोऽप्यपारदारिको दर्पकोपकर्त्ताप्यदर्पकोपकर्त्ता कृष्णवर्त्मगन्ताऽप्यकृशानुगो रतिदारकोऽप्यरतिदारकः कृष्णकर्मासक्तोऽप्यकृष्णाकर्मा पावकोऽपि नानिलानुरक्तः सर्वज्ञोऽपि न क्रतुध्वंसी धनदोऽपि किन्नरेशः प्रचेता अपि न जडनायको भास्वानपि नान्धकारातिद्रोही कलानिधिरपि न कलङ्कितो दक्षोऽपि न सत्योज्झितः सुग्रीवोऽपि न तारातिकृतकरुणस्तारानन्दनोऽपि न बालिशोचितो

मेघनादोऽप्यक्षविनोदकरो लक्ष्मणोऽपि शत्रुघ्नः सानुचरोऽपि नागरः ।

तस्य केशेष्वेव मालिन्यं न चरितेषु भ्रुवोरेव कौटिल्यं न मनसि रङ्ग एवातङ्को नाङ्गे मध्य एव तनुता न यशसि मतङ्गजेष्वेवावग्रहो न देशेषु। भिद्यमानमत्तमातङ्गकुम्भस्थलस्खलस्थूलमुक्ताफलसलिलबिन्दुसन्दोहतुन्दिलासु नरतुरगशिरोधरासहस्रनिःसरद्रुधिरधारारुणायमानकृपाणशतह्रदोद्द्योतहृतहरिहृदय-पट्टकाभासु[1] परिभ्रमद्भूरिनाराचनिचयनिचुलितकालायसवारबाणधरधीरधौरेयकालिकासु कृतप्रतिकृताटोपकोपव्याजृम्भमाणगर्जदूर्जस्वलभटघटासिंहनादबधिरितदिग्देवतासु रोदसीरोधनोद्धुरोद्धूतधूलिजालतरुणतिमिरावगुण्ठितासु समरतमिस्रासु विजयलक्ष्मी-रभिसारिकाः कतिकृत्वः स न समगच्छत् कलिकृतश्च दनुजराजदृप्तगन्धगजघण्टा-घणत्कारश्रवणशुष्यन्मदोदभारभीरुमल्लनागनिष्ठपाकशासनप्रणीतशितशराहुतिद्विगुण-दीप्यमानदैत्यदावानलनिर्वापणेन तारतरमलघुविरुदावलीरुदीरयताममरवन्दिनां न स्वरभयमन्वतिष्ठत् ।

तितिक्षया तस्य बलं बलेन वपुर्विशालं वपुषा प्रयत्नः ।
उत्साह एनेन परैरलभ्या सिद्धिः फलानाममुना रराज ।।७५।

सुकलताविभवं विभवो नतिर्नतिरतीव गुणौघममुष्य च ।
गुणगणो गुरुराकृतिमुत्तमामचचकासदियं विपुलं वपुः ।।७६।

उद्धृत्य सारं हरिकान्तिकूटान् मुहुर्नवीकृत्य निरीक्षमाणः ।
जाता पराकोटिरिहेति शिल्पे तुष्टो गुरुः कारुकुलस्य धाता ।।७७।

अलौकिकीं तस्य विलोक्य लीलामयोग्यतां स्वेष्वपि मन्यमानाः ।
अमुष्य का स्याल्ललनानुरूपेत्यचिन्तयन्नप्सरसोऽनुवेलम् ।।७८।

निसर्गरम्यप्रतिपद्य तस्य वपुः स्मरो मल्ल इवाक्षवाटम् ।
व्यायामभङ्गीर्विविधा वितन्वन् दिने दिने प्राप बलस्य वृद्धिम् ।।७९।

अपर्युषितयौवनोच्छ्वाससुभगम्भविष्णुमखण्डरोहिणीरमणरमणीयवदनमव-लोक्य तरुणहरिणीदृशश्चन्द्रकान्तोपलपुत्रिका इवाऽऽस्विद्यन्नालेख्यलिखिता इव मूलकर्मनिर्मितप्रलया इवातिष्ठन्[2]। अग्राम्यवसनाभरणेन सिंहसंहननेन सततशराभ्यास-पिशुनकृष्णिकालङ्कृतप्रकोष्ठेन सम्मुखीनवारणकृपाणव्रणचिह्नभूषितेनप्रस्ताव-सदृशाभिधानपटुप्रतिभेन रागवैज्ञानिकेन नायिकाभेदविदुरेण हयहृदयको-विदेन खड्गजातिकृतिना क्षयस्थानवृद्धिकारणविदा राजकुलनिरन्तरनिवासवर्द्धितप्रागल्भ्येन

१. हरिहृदयहकाभासु । २. इवातिष्ठम् ।

दुष्पथप्रवृत्तेरर्गलेन धर्मधुरीणेनाक्रूरप्रकृतिना परोपकारपरेण पैशुन्यशून्येन परस्परमबद्धवैरेण सर्वरात्रजागरक्षमेण सर्वाहणस्थितिसहेनाऽऽशयज्ञेन सकलसंज्ञाप्रवीणेन कुहकजनेङ्गितज्ञानकुशलेनानहंयुना वाङ्मनःकर्मभिः स्वामिशुभासक्तेन प्रभुमनोऽनुरञ्जनरीतिचतुरेण सरलहृदयेन स्मेरवदनेन वाग्मिना कृतानेकरणेन श्रुतानेकपूर्वराजचरितेन विलोकितानेकदेशेन संगृहीतानेककविसुभाषितरत्नेन मानधनेन महाकुलेन मौलेन क्षत्रियप्रायेण परिवारेण परिवृतः ।

स कदाचिदास्थानस्थितस्य कमलाबद्धस्थितेः सत्यलोकप्रियस्य हंसकुलकलितस्य त्रैलोक्यचिन्तापरस्य महर्षिमण्डलोपेतस्य पितामहस्य दर्शन सुखमन्वभूत् । कदाचिद् भीष्मतामापन्नो जितकाशिराजसुतानुगतः, करपीडने विचित्रवीर्यं परमनुजग्राह । कदाचित् कुन्त्यनुगतो भीमसेनः सर्वदा बकमसुरमेकचक्राधिष्ठितं द्विजत्राणायातृणेट् । कदाचिदारामदर्शनात् पादुकान्यस्तराजकार्यो नन्दिग्रामगतो भरतस्तपस्योपचितरागेषु तरुषु प्रीतिमन्वविन्दत् । कदाचिदुच्चैःश्रवसमश्वमारूढो [1]नन्दनोद्यानभ्रमणमनुतिष्ठन्निर्जरैः परिवृतो जिष्णुः स्मरोदयकृतारम्भया [2]मञ्जुघोषायासेन कयापि सुकेश्या सविभ्रमेण विदग्धालापेन चिरमरमत । कदाचित् कविभिः कोविदैः सहृदयैः सह गोष्ठीमधिष्ठाय रसभावालङ्कारध्वनिगुणीभूतव्यङ्ग्यरीतिवृत्तिगुणदोषशय्याः पाकचित्राद्भुतचूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रहेलिका प्रतिमालासमस्यादिविनोदमविन्दत् । कदाचिद् वैणिकेष्वालपत्सु स्वरग्रामश्रुतिमूर्च्छनातानरागलयतालकलाकाकुगमकविवेकेन गीतरसमस्वदत । कदाचिन्मन्त्रिमण्डलमध्यतः सान्धिविग्रहिकनिवेद्यमानचिरावस्थितीनां दिगन्तागतानां नृपतीनां दर्शनावसरमन्वमन्यत । कदाचिद् विविधदेशपालोपढौकितानां करितुरगरत्नानां लक्षणेषु बलाबलं विवेचयतस्तद्विद्यैः समं समवदत् । कदाचिदश्वोरसमारूढ उद्घूर्णकशैस्तेजिताश्वैरश्ववारैरनुसृतो नगरमवजगाहे । कदाचिदवतारितसारथिः स्वयमुपात्तप्रग्रहः किङ्किणीक्वणत्कारभाजा रथेन विविधमण्डलान्यतनोत् । कदाचिद् गम्भीरवेदिनं मत्तमातङ्गमारूढः श्लाघमानेष्वश्वाधोरणेषु चरणाङ्गुष्ठसंज्ञया सलीलमेनमयापयत् ।

अगणितगुणरत्नवारिधिः सुजनसभाशरदिन्दुरित्यसौ ।
तरुणिमपरिणाहभूषितः समयमजीगमदार्यकेलिभिः ॥८०॥

एकदा तु शुचिशयनमधिशयितः प्रभातकल्पायां रजन्यामचिन्तितोपनतं स्वप्नमयमपश्यत् । तत्र निमन्त्रितैर्द्रुहिणवाहनविहङ्गमज्ञातिभिरिव सत्यलोकमुत्पतद्भिरुदग्रसौधशिखरैः संबाधमनन्तकरितुरगनरनिनदमेदुरमदृष्टश्रुतसन्निवेशमद्भुतं नगरमवलोकयामास मध्येनगरं च स्वप्नप्रभावपराहतप्रतीपजनप्रवेशनतेजोमयेन महता नगरकेतनेनावतंसित-

१. -नन्दनोद्यानभ्रमणीमनु- । २. मञ्जुघोषायासमेन ।

द्वारत्रैलोक्यनायकनिवासक्षमं राजभवनमलक्षयत् । दैवगत्या च तदन्तः प्रविष्टः कतिपयकक्षाः समतिक्रम्य चकितचकितं सञ्चरता मारुतेनापि दुरधिगमं गगनगाहिभिः शकुन्तैरपि झटिति मीलिताक्षमुल्लङ्घ्यमानं सङ्कुचत्पादेन भगवता भानुनाऽप्यपरामृष्टं महर्द्धि कन्यान्तःपुरमुदैक्षत ।

तत्र च मथ्यमानदुग्धसिन्धुकल्लोलमध्यवर्त्तिनीं कमलामनुकुर्वतीं सर्वश्वेतं शयनमधिशयानां त्यक्तवताऽपि शैशवेन चिरप्रणयादिवात्यन्तमनुज्झितामागतेनापि तारुण्येनापरिचयादिवातिवेलमनारूढां महानुभावामुदारकुलप्रसूतिसहजशीलवृत्त-विभूषितामनवधिलावण्यपूरप्लुतामतिमात्रमृद्वीमाकर्णलोचनां काञ्चन राजकन्यकां लोचनगोचरीचकार ।

सा तु चिरपरिचितेव बहुदिवसोपचितानुरागेव वासकसज्जेव तदागमनका-ङ्क्षिणी मुदमुदारामविन्दत् । तस्यामयमकस्मादुदञ्चितचित्तवृत्तिर्विलासवेल्लितैः कटाक्षैः परवानिव क्रियमाणस्तदा त्वायतिविवेकमूढेन मनसा बलवदाकृष्णमाण इव समसजत् । किं बहुना,

चुम्बित्वा चिरमाननं मधुरसस्फीतं [१]प्रपीयाधरं
शिलष्यन् कण्ठतटीं पयोधरपरीरम्भेण रोमाञ्चितः ।
कूजन्त्या ननेति कातरदृशो लज्जाभिलाषोत्तरं
मुग्धायाः सुरतोत्सवं नवमसौ स्मेराननः सस्वदे ।।८१।

अनन्तरं च, अहो अनार्यस्येव मे परदारपरिग्रहः कथमिव धैर्यं तृणाय मन्यमानः प्राकृत इव स्मरेणोच्छृङ्खलीकृतोऽस्मि । हन्त भगवतः सुधानिधेर्मत्सम्बन्धात् कलङ्कपौनरुक्त्यं धिगकाण्डे महाजनपथाद् भ्रेषः स सर्वथा दुर्दान्ततुरङ्ग इव मनसि न मनाक्[२] कामदिव्यमित्यादिस्वप्न एव चिन्तयन् निद्रया वियुयुजे । विनिद्रश्च तामेव तरलायताक्षीं पुनर्दिदृक्षुः क्षणं नयने निमीलयामास । विस्फारितविलोचनः क्षणमित इतोऽपश्यत् ।

भगवति निद्रे पुनरनुगृहाण निष्कारणवल्लभं जनमुपनमय । प्रिये ! प्रणयरोषेण पारुष्यस्यातिभूमिमधिष्ठितासि 'तत् प्रसीद शिशिरय चक्षुषी' इत्यादि प्रालपच्च । कथमपि धैर्यमालम्ब्य चिन्तयाञ्चकार—प्रायो दृष्टश्रुतानर्थान् संस्कारसहकृतं मनः स्वप्नेष्वालिखति न खल्वियमम्बुजमुखी मया दृष्टा श्रुता वा विधुरपरिभावितकामिनी । साक्षात्कारस्त्विह दूरपराहतः । पूर्वमनुरागादेवमपि यदियमक्षिलक्ष्यतामभजत् तत्केनचिद् बलवता कारणान्तरेणावश्यभाव्यम् । उक्तं च—

---

१. पीयाधरं । २. मनाकाम ।

असम्भवं तमप्यर्थं तनोति भवितव्यता ।
कर्पूरवत् तिरयते करेकृतमपि क्वचित् ।।८२।

अपि च,

दृगङ्गस्फुरणं स्वप्नः शकुनं चित्तवृत्तयः ।
भाविनोऽर्थस्य विदुषां पूर्वं कुर्वन्ति पैशुनम् ।।८३।

नमोऽस्त्वकुड्यचित्रकर्मकर्मठाय कुसुमधन्वने दुर्घटघटनापटीयसे विधात्रे च मादृशेष्वपि यदित्थं मकरकेतनः क्रमते तत्सत्यं त्रैलोक्यमात्मसात्कृतममुना सर्वथा मुषितमानसोऽस्मि । नात्मानमपि धारयितुमुत्सहे । किमत्र प्रतिविधेयमिति ।

एवमस्य परिभावयतोऽभून्नातिथिर्नयनयोः कृतरागा ।
मोहयन्त्यखिलमिन्द्रियवर्गं सा वधूरिव मनागपि निद्रा ।।८४।

अत्रान्तरे च दम्पतीनां चरमसुरतस्वेदोदबिन्दुमुषिनलिनवनस्य प्रथम-सौरभोद्गारग्रहणबद्धव्रते कुन्दमकरन्दबिन्दुसन्दोहस्रोतःप्रातःस्नायिनिवृत्ते विश्लेषोन्मुख-मालतीकुसुमकामुके खण्डिताङ्गनोच्छ्वाससङ्क्रमितमूष्माणमपनेतुमिव कृतकमल-सरोवगाहने सामि संकुचत्कुमुदकाननपणपिञ्जराङ्गरागरञ्जिते गन्धवहे वहति विरसतां व्रजति विलासिनीवदनताम्बूले शिशिरिमाणमञ्चति मुक्तामणिसरे शिशिर- परिवाहासु चन्द्रकान्तोपलदीर्घिकासु [1]सुममप्युपनिहितं स्ववसुनिचयं ग्रहीष्यतीति चण्डरश्मेः पुनरावृत्तिमनुसन्धायेव विवर्णतां व्रजति दीपगणे मङ्गलनीराजनोपयुक्तघनसारशिशिर-सौरभसनाथगुग्गुलुगन्धबन्धुरेषु शङ्खदुन्दुभिनिनादमेदुरेषु देवतायतनेषु कुलायनिष्कलित-काककुलकपटेन कान्दिशीकेऽन्धकारपटले विनिद्रकरिनिगडनिर्घोषजागरितनिषादि-विधीयमानविधानासु वारीषु वरतुरगकषणमुखरासु मन्दुरासु करकिसलयमृज्यमान-नयनेष्वनुजननि जाग्रत्सु शिशुषु हरिबलिकर्णयुधिष्ठिरादिसुगृहीतनाम्नां नामानि स्मरत्सु प्रचलन्निशाविलासिनीचरणनूपुरानुकारिषु रणत्सु प्रतिसदनकपाटशृङ्खलेषु भैरवालापरक्तस्वरासु सङ्गीतसङ्गतासु वारवनितास्वासन्नपार्थिवावबोधसावधानेषु प्रणिपिपतिषत्स्वनीकस्थेषु बद्धपरिकरेषु पान्थेषु तैः शून्येषु परापचत्वरेषु शकुनि-विशेषवाशितेन निशावसानमवबुध्य हलकर्मणि त्वरमाणेषु हालिकेषु निधुवनविनोदेन विटैरविसर्ज्यमानाः स्वैरिणीरनुराराध्यमानासु[2] कुट्टिनीषु शाखाग्रनीडनिलयकलविङ्क-कलकलकैतवेन प्रातस्तनानि मङ्गलानि पठत्सु महीरुहेषु—

प्रकृतिसरसभाषिणः प्रगल्भाः पटुमतयो मणिमञ्जुपट्टबन्धाः ।
ललितभणितिभिः प्रबोधयन्तस्तमुपजगुर्मृदुवन्दिनां कुमाराः ।।८५।

---

१. दीर्घिकासुमप्युयनिहितं । २. स्वैरिणीरनुरारद्यमानासु ।

उदयतु नितरां मयूखमाली विकसतु तेन च षण्डमम्बुजानाम् ।
जननयनसरोरुहां तु शश्वद् भवदवलोकनमेव दोहदोऽस्ति ।।८६।
तव गुरुगुरुणा गरिष्ठधाम्ना तव जनकेन तरस्विना त्वया च ।
त्रिभिरिति महसातिजागरूकैः स्वपिति सुखं परिपालिता त्रिलोकी ।।८७।
अधिधरणि भवेत वीतनिद्रा यदि यदुवंशविभूषणा न यूयम् ।
अहह सुरपतेर्दृशां सहस्तं सपदि तदा गुरुजागरारुणीस्यात् ।।८८।
अहमहमिकया ध्रुवं दृशोस्ते विचिकसिषन्ति पुरः सरोरुहाणि ।
शशधरमपहाय ते मुखाब्जं श्रियमथवोपपतिमभिप्रयन्ति ।।८९।
सकलजनदृशो विहाय वेगात् प्रविशति[१] कैरवकाननानि निद्रा ।
जगदखिलमुदस्य किञ्च चक्षुस्तिमिरमुरीकुरुते निशाटनानाम् ।।९०।
अरुणकिरणपतिभिः प्रयत्नात् प्रतिगृहमेत्य विवासिता वराकी ।
कथमपि लभते क्षणं द्वयस्य स्थितिमिह यामिकलोचनेषु निद्रा ।।९१।
मदयति मदशेषपाटलाभं विलुलितकज्जलमीषदात्तघूर्णम् ।
विविधसुरतनिःसहं प्रियाया नयनमपत्रपया विनम्रतारम् ।।९२।
प्रियतमहृदयोपपीडमुद्यत्कुचकलशं सुखसीमनि स्थितानाम् ।
दहनमिव मुहुः किरन्ति कर्णे कमलदृशां कृकवाकुकूजितानि ।।९३।
इतरयुवतियावकारुणाभं निजदयितस्य विलोक्य कापि वक्षः ।
अपि परुषशतेन यन्न शक्यं कलयति तन्नयनाम्बुजारुणिम्ना ।।९४।
निवसनपरिवर्त्तमेत्य यूनोः सुरतविरामसमुत्थसम्भ्रमेण ।
अहह भवति याचतोर्विनोदः सनयनतर्जनहासशून्यरोषैः ।।९५।
विलुलितकबरीनिषक्तलोलप्रशिथिलगर्भकपातिभिः प्रसूनैः ।
सुतनुषु निवसन् प्रसूनबाणो निजमिषुधिं विजयी ध्रुवं रिणक्ति ।।९६।
विषमितकबरीतमालपत्रनखदशनक्षतभूषिता मृगाक्ष्यः ।
चलदलसदृशः प्रयान्ति पत्युः कथमपि मोहनमन्दिरान्नचितात् ।।९७।
कवयितृषु कुतोऽपि बुद्धिपूरः कतकरजोभिरिव प्रसादमेति ।
गहनमपि पदार्थजातमस्मिन् स्फुरति गभीरतेरविनैव यत्नम् ।।९८।

---

१. वेगात्मविशति ।

ग्रहगण उपयाति दन्तशारिद्युतिमिह गन्धफली रुचं च दीपाः ।
विधुरनुविदधाति चाभ्रकस्य व्यजनमपाकृतदण्डमुज्झितश्रीः ।।९९।
सकलनिपीय कामिनीभिः सह शशिरश्मिपरिस्रुतं चकोराः ।
अलसचरणचञ्चवः क्षमं तेन चलितुमप्यतिघूर्णितारुणाक्षाः ।।१००।
प्रतनतिमिरकम्बलेऽपनीते वियदवधूतवरस्य कोऽप्यकस्मात् ।
क्षिपति वपुषि किं कषायरक्तं वसनमुदित्वररागकैतवेन ।।१०१।
पतति चरमवारिधौ सुधांशुर्गतमदहूणवधूमुखोपमानः ।
भगणगुरुपवारिलाजकीर्णां दिवमचिनोद् द्रुतमेव कालरङ्कः ।।१०२।
ग्रहगणविधुरा व्यपेतचन्द्रा कतिपयऋक्षयुता च सम्प्रति द्यौः ।
मणिविपणिवितर्दिकेव शून्या निपतितपञ्चषमौक्तिका चकास्ति ।।१०३।
अयमुदयति पूर्वसिन्धुपूरोत्प्लुत इव विद्रुमकन्द उन्मयूखः ।
उदयगिरिविदीर्णसान्द्रगुञ्जास्तवकरुचिर्भगवान् मरीचिमाली ।।१०४।
कलयति परिमृद्य कोऽपि हेलेरुपधिवशान्नवहिङ्गुलस्य पिण्डम् ।
स्नपयति च तदम्बुपूरपातैः कुतुकपरो हरितं हरेः समग्रम् ।।१०५।
उदयगिरितपोधनाश्रमेषु स्फुटति जपोपवनं नु विश्वगेतत् ।
उत दिनकरदारितस्य युद्धे प्रवहति सन्तमसस्य रक्तधारा ।।१०६।
सकलशिखरिषु भ्रमः सुमेरोर्भवति नदेष्वखिलेषु शोणबुद्धिः ।
प्रभवति कुशलोऽपि नो विवेक्तुं द्रुतमिह मौक्तिकपद्मरागमालाः।। १०७।
निनदति पुरि झल्लरी समन्तात् प्रहरचतुष्कविरामबोधनाय ।
सकलनिशि जगद् विजित्य यातः कुसुमशरस्य ननु द्विपेन्द्रघण्टा ।।१०८।
सह पतदलिमञ्जुगुञ्जितेन स्फुटमिह भानुभृतः कराः कुमाराः ।
वयमिव कमलालयं भवन्तं कमलवनं प्रतिबोधयन्त्यरुद्धाः ।।१०९।
अनुपठति मठोऽप्ययं बटूनां पटुकठकौथुमकण्डिकाः क्रमेण ।
कलयति कमलाकरोऽपि भानोः स्तुतिमतुलां कलहंसकाकलीभिः ।।११०।
सुमधुरमुपवीणयन्ति भृङ्गाः सरसिजराजसुतां निषेवमाणाः ।
समुपचितनवश्रियस्त [1]एवापिदधति दुर्ललिता दृशः परागैः ।।१११।

---

१. एषापि ।

घटयति रविरेकचक्रयानो ध्रुवमपरं खलु चक्रमाग्रहेण ।
नियतमयमनूरुसारथित्वात् कलयति पादसहस्रसंग्रहं च ।।११२।
नमति समुपतिष्ठते यदर्घं वितरति [१]चाप्युदं सदैव लोकः ।
अशिशिरकिरणस्य हन्त नेन्दोरमृदुरुचेर्महसो विजृम्भितं[२] तत् ।।११३।
उदितहवनशीलिनामुदं च दहनवितीर्णपयोक्षताहुतीनाम् ।
शरणगतमवेत्य दीक्षितानां न हरति धूरति धूमवपुस्तमो विवस्वान् ।।११४।
तिमिरबहलकालकूटकूटं शिव इव यत् पिबति स्म सप्तसप्तिः ।
दिनमखिलमतीव तेन तप्तः पयसि पतिष्यति सायमम्बुराशेः ।।११५।
क्षरितविततचन्द्रिकासु गावः शिव शिव चन्द्रगवीषु निर्गतासु ।
उपचरितशतेन पात्रपूरं क्वचन पयोमिषचन्द्रिकां क्षरन्ति ।।११६।
तिमिररिपुरपाकृतोऽतिवेलं कमलसुहृद् गमितः परां श्रियं च ।
कटुरटनपरास्तु वल्गुला ये प्रसभमधोमुखमाशु लम्बितास्ते ।।११७।
द्विजगण उपगायति प्रसन्नः प्रणमति विश्वजनः कृताञ्जलिश्च ।
उदयमधिगतेन यद्धि कार्यं दिवसकृता कृतमेव तत् समस्तम् ।।११८।
युग्मम्
तमसि विदलिते गुरोः प्रसादाद् दृशि सकले गतवत्यपि प्रपञ्चे ।
प्रसरति यदकृत्रिमं महस्तज्झटिति गताः पशवोऽपि बन्धमोक्षम् ।।११९।
रुचिरकनकपङ्कलेपलक्ष्मीं विदधति सौधवरेषु येयं ततः ।
मसृणघुसृणवर्णकं मृगाक्षी कुचकलशेषु किरन्ति ते मयूखाः ।।१२०।
अमृतकिरणकायकल्पपिण्डं जगदुपभुज्य तमस्त्वचं विमुच्य ।
अपरमिव भवत्यपेततारावलि तमुदित्वरघर्मगौरकान्ति ।।१२१।
उडुगणवरमौक्तिकानि चन्द्रो निधिकलशो विपुलश्रियाभिपूर्णः ।
हृदयविनिहिता निशा च योषा सकलमिदं रविणा विलुठितं यत् ।।१२२।
कुररविरुतकैतवादरोदीदिति गगनं हि तदश्रुबिन्दवोऽमी ।
धरणिनिपतिता दलाग्रलक्ष्या हिमसलिलस्य तु विप्रुषो मृषोद्याः ।।१२३।

---

१. चाप्युदे । २. विजृम्भित ।

युग्मम्

हरिहरिति हरिर्निकामरागी प्रथममथो पृथुतापमीयमानः ।
कथयति वितथेव न प्रपञ्चे क्षणमपि रागमतीव तापहेतुम् ।।१२४।
सुहृदि दिनकृताहते तमिस्रे नियतमशौचमिवागतं विषण्णः ।
क्षपयति तरुकोटरे निषण्णः करटरिपुः क्वचिदुज्झिताखिलार्थः ।।१२५।
कमलसरसि सर्वतः प्रसृप्तैर्भ्रमरकुलैर्भ्रममेति हा ! निशायाः ।
कथमपि परिसोढसर्वरात्रप्रियविरहा चकितेव चक्रवाकी ।।१२६।
शशिनमिव भृशोन्मुखाश्चकोराद् दिनमणिमण्डलमूष्मपाः पिबन्ति ।
अनुविकसति तच्च बन्धुजीवः कलयति तस्य सुवर्चलाभिमुख्यम् ।।१२७।
ज्वलयति मिहिरोपलोल्यतेजा न तु मिहिरो महसां महानिधानम् ।
सपदि विकुरुते लघुः प्रभुत्वं किमपि गतो न महांस्तु तन्महीपः ।।१२८।
वदनविवरदारिदीर्घजृम्भानधिदरि जागरयन्ति भानुभासः ।
चटचटनिनदैः कृताङ्गभङ्गान् भ्रुकुटिभयङ्करचक्षुषो मृगेन्द्रान् ।।१२९।
उदयसमयसम्भृतां स्वलक्ष्मीं विदलितकोकनदेषु संविभज्य ।
प्रवसति रविरेष वीतरागः क्वचिदपि विष्णुपदं परं प्रपन्नः ।।१३०।
अनुवदति शुके निशीथजातं सुरतविशृङ्खलजल्पितं सलीलम् ।
गुरुजनसविधे विलक्षवक्त्रा हरिणदृशो नितरामपत्रपन्ते ।।१३१।
मणिमुकुरमृदङ्गपाणयोऽमी चमरधराः कनकालुकाकराश्च ।
सुभगपरिजनाः प्रतीक्षमाणा भवदवबोधमहोत्सवं श्रयन्ते ।।१३२।
सुनयननवनिष्कुटप्रसूता मृदुपवनेन [1]विकम्पिता न कस्य ।
हृदयमिह हरन्ति लोलभृङ्गाः सुललितजातिलता हि पुष्पिताग्राः ।।१३३।

प्रसरति करे भानोरालूनसन्तमसोच्चये
क्षितिरुहतले लीनं नूनं निजग्रहशङ्कया ।
तिमिरमसहं वेगाच्छायाछलेन पलायते
चरममचलं बुद्धौ कृत्वा ध्रुवं तदगोचरम् ।।१३४।

---

१. विकपिता ।

तिमिरशितिसरोजव्रातमत्तद्विपेन्द्रो
वितततगगनलक्ष्मीभामिनीभाललामम्[1] ।
रजनिपृथुपिशाची मान्त्रिको वेदमूर्तिः
सुखयतु तव नेत्रे भास्करः पुष्कराक्षः ।।१३५।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनामकेन पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते स्वप्नदर्शनं नाम द्वितीय उच्छ्वासः ।।



१. भालालम् ।

## अथ तृतीय उच्छ्वासः

अथोत्थितस्तल्पतलात् कुमारो
विजृम्भमाणोऽरुणनेत्रपद्मः ।
नतो जनैः पर्युषिताङ्गरागः
सचिन्त एवोचितमाचचार ।।१।

ततो विविधव्यायामोपकरणसनाथां व्यायामशालामासाद्य प्रियवयस्यैः सममकर्कशव्यायामश्रममशीलयत् क्षणं च कठोरकोदण्डकर्षणक्रियाम् । तदनु मौक्तकश्रेणिशोभिनीं महानीलस्थलीं विडम्बयता स्वेदसलिललवलाञ्छितेन तत्क्षणोपचितद्विगुणपरिणाहेनोरसा रुचिरः किञ्चिदिव विश्रम्य पुरः प्रस्थितेन कनकवेत्रपाणिना प्रतीहारजनेनोपवर्ण्यमानमार्गः सरभसमुत्थितेन धरणितल-विलम्बिमौलिना महामात्रकुमारकदम्बकेन प्रणम्यमानः स्नानभूमिमभजत् ।

तत्र वित्रस्तहरिणशावनयनाभिः पूजिते वयसि वर्तमानाभिर्वधूभिरा-मलकतिलकल्ककलुषेण पाणिना प्रक्षालितशिखण्डः स्निग्धसुगन्धिनाऽनुलेपेनो-द्वर्त्तितवपुर्मल्लनाग इव नलिनीसुरभिकदुष्णवारिपूर्णां स्वर्णद्रोणीमवततार । मञ्जुमुरजलयेन गायत्सु गायनेषु पुण्यकीर्तीन् नृपतीनधीयानेषु मागधेषु दिव्यभौमान्तरिक्षाणि तीर्थान्युदाहरत्सु द्विजेषु गङ्गावतरणगाथाभिरनुरञ्जयत्सु सूतेषु तमुदस्तकनककलशा निबिडनिबद्धाञ्चलोन्नद्धकुचकलिकास्तरुण्यो वासिताभिरद्भिरधिषिषिचुः ।

अनन्तरं च शुचिश्लक्ष्णेन वाससा निनीरिताङ्गो गाङ्गेयपादुकोपहितपादः कमलकिञ्जल्कपिशङ्गकौशेयद्वितयं दधानो विततविनीलालकनिचुलितपृष्ठभागः[१] प्रत्यासन्ननीरदच्छेदमेदुरः कनकमेखलो नीलमणिमयः कूट इव नयननन्दनो नन्दनोद्यान-मध्यवेदिकामिव विविधसुरसनाथामनेकदिव्यकुसुमसमूहसौरभ्यलुभ्यदलिपटल-पक्षपुटपाटितस्वेदसलिलां च प्रभातवेलामिव विरचितरक्तचन्दनारुणतरणिमण्डलां द्विजसहस्रकृतोद्घोषं च धरणिमिव धृतानेकपार्थिवां विविधगन्धबन्धुरां मलय-शैलाधित्यकामिव घृष्टपाटीरपरिमलवाहिनीं कुण्डलिकुमारशतसेवितां च पार्वतीमिवा-वर्त्तितरुद्राक्षमालां कृतहरस्तुतिं च महाटवीमिव ध्रियमाणतिलकामनेकासनां च नागशुण्डामिव क्रियमाणभूतिरचनां च रचनां स्त्रियमिवाकर्ण्यमानपुरुष-सूक्तामनन्तकथामिवोदीर्यमाणचण्डीचरितां संज्ञामिव प्रवर्त्तितादित्यहृदयां सङ्गीत-शालामिवारब्धगीतां फणिपतिफणश्रेणिमिवोच्चरितविष्णुसहस्रनामां प्रजापति-

१. ०मिचुलित० इति पाठः । अयं तु लिपिकरप्रमादाज्ज्ञेयः । निचुलक-निचोल-निचोलकशब्दाः खलु प्रच्छदपटवाचका इति वागीशशास्त्री ।

चतुर्मुखीमिव पठ्यमानचतुर्वेदां जरतीमिव प्रस्तुतपुराणकथां राजसभामिव मन्त्रिचिन्त्यमानमन्त्रां सृष्टिप्रक्रियामिव प्रपञ्चितभूतशुद्धिं काशिकामिव प्रवर्त्तितन्यासां वाटिकामिव विततजपां क्वचिदगुरुधूपधूमनिबद्धान्धतमसां क्वचिज्जपापुष्पपुञ्जसञ्जनितसन्ध्याश्रियं क्वचिदमन्दकुन्दसन्दोहसन्दर्शितचन्द्रातपवितानां क्वचिदकुण्ठकिरणकरालमणिकुट्टिमोद्गीर्णमध्यन्दिनतरणितेजसं क्वचिदमलशालग्रामश्यामलां क्वचिद् यन्त्रोपरि परिक्षिप्तरक्ताक्षतारुणां क्वचिदनेकशङ्खधवलां पञ्चामृतसंग्रहेण दिवमेकामृतामुपहसन्तीं निरन्तराम्लानचन्द्ररोचिषा च तां दिनमलिनचन्द्रामभिभवन्ती देवशालामाजगाम, तस्यां च रत्नवितर्दिकाविन्यस्तां बृसीमधिष्ठितः कुशलपाणिभिः कृतानुलेपनो भगवते भानुमते सलिलाञ्जलिमुत्सृज्य कृतोचितजपक्रियः स्मृताभिमतदैवतो गां गर्मुतं च द्विजेभ्यो विससर्ज ।

अथ सवयोभिः सुहृद्भिरनुगतः परिवर्त्तितान्तरीयः प्रक्षालितपद्मरागविततवेदिकाविनिहितस्फुटिकपीठशतशोभितामदूरवर्त्तिकार्त्तस्वरपञ्जरनिकेतशुकसारिकाभृङ्गराजक्रौञ्चकोकिलकलनादनिबद्धकोलाहलां लवङ्गहिङ्गुहैयङ्गवीनजरणजातिपत्रिकागुणत्वगेलामरिचकर्पूरकाश्मीरवासपेशलां गिरिदुहितृनलभीममतचतुरपुरुषोपदिश्यमानवल्लवां क्वचिच्छूलाक्रियमाणमांसां क्वचिच्छिशिरीक्रियमाणसलिलां क्वचिद् वितन्यमानरसालां क्वचिद् भृज्ज्यमानपर्पटां क्वचिदमत्रनिधीयमानसान्द्रदधिशरां [1]पौरोगवमुद्राङ्कितसकलपात्रमुखवेधनां सुवर्णपात्रीशतसनाथां वैश्वदेवबलिलोलकलहंसशावकामग्रासनजिघत्सुवटुवेष्टितां षड्भी रसैरुपेतां रसवतीमभिगम्य समं सात्वतकुमारैर्विनोदवार्त्तासु स्मयमानो द्विधा गुणैरुपवर्ण्यमानस्निग्धमधुरमशनमभ्यवजहार ।

अथाचम्य चन्दनरेणुरूषितकरकिसलयः [2]प्रियविप्रयुक्तकेरलीकपोलपाण्डुरास्ताम्बूलवीटिकाः परिशीलयन् विश्रम्य सर्वाङ्गीणाभरणधारणाधिकरोचिष्णुर्युगपदवनमन्नृपतिसहस्रमुकुटकोटिमणिमरीचिमञ्जरीपुञ्जरञ्जितचरणनखशिखो मुहूर्तमास्थानमण्डपमशिश्रियत् । अवहितस्तिमितेषु सर्वेषु सभास्तारेषु तत्रैनमुदासीनमिवाकलयन्तः कुशलबुद्धयः परिवारसुहृदश्चतुरङ्गलीलया पाशप्रस्तावेन प्रहेलिकाभिः प्रश्नोत्तरजातिभिरितिहासकथाभिश्च बहुधा विनोदयितुमुपाक्रमन्त । मनसः शून्यतया तत्र तत्र विश्रान्तिमलभमानो[3] विसर्जिताखिललोको विविक्तां वलभीमभिजगाम । अचिन्तयच्च तस्याम्—

मदनदहनज्वाला [4]सिद्धौषधैरमृतप्लुतै-
श्चकितचकितं प्रत्याश्लेषक्रियासु विकस्वरैः ।

---

१. गौरोगव, २. प्रियविप्रयुक्ते । ३. तिमपमलभमानो । ४. सिद्धौषवैर- ।

प्रमदजलधेः पूरैरुद्यन्मृणालमनोहरै-
व्यतिकरसुखं दिष्ट्या भूयो लभेय तदङ्गकैः ।।२।

कलयानि किं क्व सहसा व्रजानि वा
कथमाप्यते कमललोचना नु सा ।
विषयो दृशोः सविषयो न मे मनाङ्
न च नामतश्च कुलतश्च वेद्मि ताम् ।।३।

अद्यापि सा नयनयोस्तरलायताक्षी
कामं पुरः स्फुरति चम्पकचारुगात्री ।
आलिङ्गिता किमपि शैशवशेषभीरु-
र्या न व्यहन् परिचितेव मनोरथं मे ।।४।

कान्तश्रियः कति न सन्ति कुरङ्गनेत्रा-
स्तारुण्यविभ्रमभृतो जगतीतलेऽस्मिन् ।
अन्यैव सा भगवतश्चतुराननस्य
प्राचीनशिल्पपरिशीलनशिल्पसीमा ।।५।

विनयं वदनाकृतिर्वदन्ती नयने शीलसुधारसेन सिक्ते ।
चरितानि महाकुलप्रसूतेः पिशुनानीति न किं महार्घमस्याः ।।६।

इत्यादि रहसि परामृशन्नधिदेवतामिव मनसि निवसन्तीं तामेव विधुमुखी-मनुस्मरन् दिने दिने वर्द्धमानया विरहवेदनया विश्वकेतुरतितरामतप्यत । तमेव च समयमाकलयन् शिखण्डिनमिव तामन्तरा विधाय सव्यसाचीव पञ्चशरः शान्तनवमिव धैर्यधनमेनमिषुभिरपातयत् । ततः प्रभृति-

जालेषु शीतलसुगन्धिसमीरणेषु
व्याकोशपद्मपिहितासु च दीर्घिकासु ।
सौधेषु चन्द्रकिरणैः शिशिरीकृतेषु
प्रायो वसन्नपि न किञ्चिदसौ चचन्द ।।७।

उपचारशतेन संगताया निशि सुमे[1] सहसैव विप्रयोगे ।
दयिते द्रुतमर्पयाङ्कपालीमिति साशंसमसौ मुहुः शशंस ।।८।

---

१. सुमे = चन्द्रे—इति वागीशशास्त्री ।

[१]प्रमदवनविनोदे गुञ्जतश्चञ्चरीकान्
प्रतिलतमयमञ्चन् प्रार्थयामास नम्रः ।
अभिदधतु भवन्तस्तन्मुखामोदविज्ञाः
क्व नु कमलमुखी मे वर्त्तते संप्रतीति ।।९।

[२]आहार्यं नवमददुर्बलः करीव
क्षामत्वं दधदपि लोचनाभिरामः ।
प्रालेयग्लपिततमालतान्तकान्तिः
पाण्डुत्वं स विविधकैतवैर्जग्रहे ।।१०।

इन्दीवरेषु सरसेषु चिरं शयानः
स्रस्तैः श्रमादवयवैर्मनसा जडेन ।
शीतोपचाररचनास्वयमन्तरङ्गै-
रालक्षितः परिजनैः श्वसितानुसारात् ।।११।

अनीता या मनसि सुतनाः सन्ततं भावनाभि-
र्मग्नः शोभासरसि शिशिरे तप्यमानः स्मरेण ।
निन्ये नूनं कथमपि कृती वासरान् दीर्घदीर्घा-
नत्यायामं बत गतवती वीतनिद्रा निशाश्च ।।१२।

एवमहर्दिवमुदीयमानेन मदनविकारेण विदूयमानो हृदयदयितेष्वपि विविध-विनोदेषु विश्रान्तिमविदन् कुमारसचिवैर्मुहुर्मुहुरुत्साहितः कथञ्चिदाखेटयात्रामय-मन्वमन्यत ।

ततः कार्दमिकवाससो दण्डखण्डपाणयः काण्डकोदण्डधराधराधर-द्रोणीदरीदुर्गसञ्चारचुञ्चवो धरित्रीरुहारोहणप्रवीणाः कठोरकुठारधारिणः श्वपदा इव गहनगाहनतातङ्काः [३]कङ्ककेकिपतत्रकृतोत्तंसाः सकलमपि काननं करतलामल-कमिवाकलयन्तः किरातपृतनापतयः पुरुषाः पुरः प्रतस्थिरे ।।

ययुः श्वागणिकाः क्षामैर्दीर्घतुण्डैररोमशैः ।
विश्वकद्रुभिराकृष्टरज्जुभिर्यूथशो युताः ।।१३।

शकुनिकूजितान्याकर्ण्याहितदृशोऽपि पक्षमुत्क्षिपतः पत्रिणः कृत्तिकवचितेषु करेषु दधानाः श्येनपालाः समचलन् ।

---

१. प्रमदवदनविनोदे । २. आहर्यं । ३. कङ्ककेकियत्रकृतोत्तंसाः ।

इङ्गालकालवपुषः पुरुषाः पाशपाणयः ।
जग्मुर्मृगाणां निधने यमेनेव नियोजिताः ।।१४।

शिशिरवारिवाहिनो वैवधिका विविधकूटयन्त्रधारिणः कौटिलिका जीवन्मृगग्राहिणो वैणिकाश्च विवेणुः ।।

अनाधृष्टिसुतस्याज्ञां प्राप्य सेनापतेस्ततः ।
समनह्यन् कतिपये प्रसिद्धाः सादिनां गणाः ।।१५।

अथ चपलतरतुरङ्गमारूढो हरितवेषेण विभूषितः सुरतरुरिव नवपलाशपरिवृत्तस्तादृशैरश्ववारैरनुगम्यमानो मुकुलिताञ्जलीनां नगरजनानां नयननीरजराजीरुन्निद्रयन् पुरमतिक्रम्य समन्तादारामकदलीदलच्छन्नतया तामपि स्वानुसारिणीं मन्यमानो मन्दमारुतान्दोलिताभिर्लताभिः किसलयकरैराकारित इव तत्क्षणोपजातकौतुकः सर्वोपवनसार्वभौमं वसन्तवल्लभं नाम वासुदेवस्य प्रेष्ठमुद्यानमवलोकयितुमनिरुद्धःप्राविशत् । यदारोपितैःक्रमुकखर्जूरनालिकेरतरुभिः समीरसञ्चलितशिरस्तिरस्कारेण नन्दनवनविटपितुल्यतां न मृष्याम इति प्रगद्यन्त इव कवयः ।

परिणमज्जम्बीरनारङ्गमातुलुङ्गफलभरकिर्मीरिता [१]उच्चित्राश्चीनाम्बरावृता इव यस्य केदारभूमयः । यत्र जलयन्त्रनिर्गलन्नीरधाराशीकरशीतलाङ्ग्यो नगराङ्गना न विन्दन्ति स्म तपर्तुतरुणतरणिकिरणसम्पर्कसुलभान् स्वेदबिन्दून् । यस्य परस्पराविरोधिनो वनपालका इव मुकुन्दमारिराधयिषवः सर्वेऽपि ऋतवः फलकुसुमकिसलयसमृद्धिमभ्यवर्द्धयन् । यत्र चित्रकरणविदां वनपालकानामुपायैः कदलीदाडिमं बदरीमाकन्दं लवलीद्राक्षामेरण्डकारवेल्लमनस्थीनि भिन्नवर्णानि भिन्नरसानि च तरवः फलानि सुवते स्म ।

चारुचामीकरप्राकारपरिवृतेऽखर्वदूर्वानिर्विशेषनीलमणिवेदिके पद्मरागकुट्टिमक्लृप्तमार्गे गोमेदमेदुरे परिसरे चन्द्रकान्तनिबद्धालवालस्नुतसलिल-सिक्तपादपे सकलदिङ्मिलिन्दमण्डलीपतत्रपवनोड्डीननानानोकहनिकायनिस्सरत्परागपुञ्जपिञ्जरीकृतवियदङ्गते [२]सर्वपथीनपरिमलामन्त्रितद्विरेफकुलस्थूलङ्करणमकरन्दसन्दोहतुन्दिलकुन्दकलितलक्ष्मीके परिणामदलितदाडिमदृश्यमानबीजव्याजेन दरद्दिगम्बरीभवद्दशनकुड्मलमलकापुरप्रमदवनमुपहसति विनिद्रचन्द्रवालाधिवासविभवैर्नन्दननिन्दनवितन्द्रे चन्दनचूतचम्पकचाम्पेयकाञ्चनारकर्णिकारहयमारकरुणकदम्बकेतकबन्धूकतिलकपुलिकिते प्रियङ्गुलवङ्गमरिचमागधीमधुरसामाधवीभिरुपगते मत्तकाशिनीचरणतामरसाघातविकसदशोके नवनितम्बिनीपरिरम्भणोन्निद्रकुरबककोरके मदिरेक्षणामुखामोदमेदुरमदिरागण्डूषोत्फुल्लबकुले विरहिणीविरहवेदनादयमान-

१. उच्चित्रा चीनाम्बर । २. सर्वयथानपरिमला- ।

सखीजनलूननवपल्लवे पुष्पावचयसञ्चरन्नगराङ्गनाचरणमञ्जीरशिञ्जितश्रवणकौतुकोद्ग्रीवकलहंसकुले कोमलसहकारमञ्जरीकवलनवाचालकोकिले विविधदोहदधूपधूमस्तोममुदितनृत्यन्मयूरे लीलावतीललितदोलान्दोलनस्खलितसप्तपर्णधूलिधवलितपरिसरेऽतिमुक्तमण्डपाध्युषितविलासिनीजनगानपुनरुक्तपाल्लविकवल्लकीरणिते परिणीतलवलीलतावलोकनोल्लासचकितचकोरे नानादिग्देशानीतविविधद्रुमवल्लिविभूषिते कृतगणिकासङ्गेऽपि जातिशालिनि महाशारदेऽपि धृतबाणेऽतिसरलेऽपि महाधूर्ते मन्मथाकुलेऽप्यच्युतजपे सशिवेऽपि सारिष्टे शैलूषैः सङ्गतेऽपि वानप्रस्थैर्निषेवितेऽगस्त्यनित्येऽपि[१] गालवालये तत्र नवरक्तपल्लवाः पुष्पवत्योऽपि महीरुहालिङ्गिन्यो विविधवीरुधो रागिणां मकरकेतनाज्ञानुल्लङ्घयतामद्रढयन्[२]। अद्रढयंश्चाकाण्डताण्डवशौण्डचण्डीपतिहासवैशद्यदस्यवो विकचकुन्दकाननपरम्पराभुवनजयजनितभूममदनयशोविसृत्वरं जगति । उदनीयन्त सन्ततं रजसि कुसुमेषु व्यापारादविरमन्तो बहिरिवाभ्यन्तरेऽपि मलीमसा मधुरमधुरसास्वादलोलुपा मधुपा गुणिने पात्राय जीवनं वितरन्तं सुधासाधुसाधितमुखमण्डलमखण्डक्षीरधारापरिपोषितरुवर्गं गभीराशयं नहि प्रहिं नीचममन्यन्त सन्तः ।

निपुणवनपालविहितवक्त्रविषमच्छदच्छेदमेदुरमुदिरमण्डलीमेचकच्छायच्छुरितमरकतप्राकारधोरिणीविडम्बनोद्धुरतरुश्रेणीसनाथकुट्टिमोदरपरिस्फुरत्सारणी[३]-सरत्सलिलसिच्यमानालवालवलयाः प्रतिकुललग्नमधुपावलीकलितकेलिकाकलीकर्णप्रियकरपल्लवाः कतिकतिजनैरवालोक्यन्त कुसुमभारभङ्गुरास्तरवः ।

क्वचिन्नगरनीरजाक्षीजनोरुनिर्जितास्तपसि कृतारम्भा इव रम्भास्तम्भावलीः क्वचित् प्रियतमापयोधरोत्सेधशालीनि शैलूषफलानि, क्वचिद् दयितोत्तुङ्गस्तनायमानफलभरनालिकेरनिकरं क्वचिदुल्लसद्वारुणीवासपेशलामोदमानमधुकरकुलान् वकुलान् क्वचिद्, विकचपुण्डरीकषण्डमण्डितां हंसकारण्डवचक्रवाकदात्यूहसारससेवितां विलासवाणीमवलोकयन्नितरत्र विचित्रे शालभञ्जिकाभाजस्तुङ्गतरस्तम्भशतशोभितान् निरवलम्बलम्बिनीं कादम्बिनीं विश्रमयतः, क्वचित् कामिनीवशंवदममहोत्तालकलरवारावकूजितान् क्वचिच्चटुलचाटकैरचाटुचूङ्कृतिचमत्कृतान् क्वचित् कर्णपथपाथीभवत्कीरकाकलीकान् वलीकायमानबर्हिबर्हावलीकान् व्यलीकानिलोल्लासितवैजयन्तीकानाक्रीडसुषमासरिद्ब्रहानट्टानुदीक्ष्य तरन्मौलिमण्डनायमानासु वलभीषु [४]वनपालोपनीतफलकुसुमानि क्षणमवलोकनेन सफलयन् सपरिवारो ब्रह्मसूर्विशश्राम ।

---

१. -ऽगस्त्यनियेऽपि । २. मद्रदयन्, ३. -परिस्फुरुत्सारणी- ।
४. वनपालोपनीफल ।

निशम्य स्मेराणामुपवनलतानामभिख्या-
मविन्दन्नाश्वासं किमपि मनसः सोऽनुवेलम् ।
स्मरोन्मेषाद् भूयो मलयपवनैस्तप्यमानः
[1]स्मरन्नम्भोजाक्ष्याःप्रवरललितं निर्जगाम ।।१६।

मृगयाविनोदरसलालसचेताः
शिथिलीचकार तुरगस्य सवल्गाम् ।
वरवाजिनस्तमनुदुद्रुवुरैक्यं
गमितानुसादिकरकौशलभूमौ[2] ।।१७।

न विदाञ्चकार किमिदं व्रजतीति
प्रथमं जनः सजवमुज्झितमार्गः ।
अथ फेनचन्द्रकचितामवलोक्य
क्षितिमश्वपङ्क्तिरिति निश्चिनुते स्म ।।१८।

स्थाणवो न परिखाननकूपा
वारणा न वरणा न हरीणाम् ।
वारणाय विबभूवुरुदारां
[3]पञ्चमीं कलयतां किल धाराम् ।।१९।

तत्क्षणं वरतुरङ्गमवेगा-
दन्यदन्यदिव विश्वमुदीक्ष्य ।
सादिनःक्षणिकवादिमतेषु
श्रद्दधुर्नयनगोचरितेषु ।।२०।

परिवेष्ट्य दिवं वधूमिव स्वां
हृदये शालविशालबाहुबन्धात् ।
कलयन्तमुदारमालुलोके
स लतावेष्ट इति प्रसिद्धमद्रिम् ।।२१।

तरलीकरोति रशनाविसारिणी-
रशनायतां तरणिवाजिनां मुहुः ।

१. स्मरन्नभोजाक्ष्याः । २. भूम्नौ । ३. पञ्चमी ।

दिनयौवने हरितरत्नरश्मिभि-
हरिता लताङ्कुरसमैः सदैव यः ।।२२।
भ्रमणीविलासरसिकेऽप्यवेधसो
गगनाङ्गने महति मानसौकसः ।
शिथिलान् श्रमेण विकलानुदन्यया
छदयाञ्चकार कमलाकरेण यः ।।२३।
अशनायिता निशि मृगाशनार्भकां
शिखरेषु यस्य दरनैद्रसम्भ्रमात् ।
मृगलाञ्छनस्य मृगमुज्जिघृक्षवः
समुदप्लवन्त नितरां तरस्विनः ।।२४।
मणिकन्दरासु रुरुचे रतिर्यथा
रुचिरासु यस्य नितरां निसर्गतः ।
प्रमदाजनाय न तथा सुपर्वणां
वलभीषु कृत्रिमसमग्रकान्तिषु ।।२५।
अनुरक्तकिन्नरकलत्रभीतिभि-
र्हृतचेतसः स्थिरतरा दिवानिशम् ।
हरिणा अपि प्रसभसोढतृट्क्षुधो
नियमेन यत्र चकृशुर्द्विजा इव ।।२६।
गुरुधातुरेणुपरमाणुरूषितः
शिखरोषितस्थिरकपोतमण्डलः ।
अरुणांशुको विधृतभस्मपुण्ड्रकः
शुशुभे समाधिनिभृतो यतीव यः ।।२७।
कलधौतकाञ्चनमये महोन्नते
विरराज यश्च शिखरे वहन् बहु ।
उपचर्यमाण इव कृष्णसौहृदाद्
रजताद्रिणा कनकभूधरेण च ।।२८।
सरितो विधृत्य सरितो व मौक्तिकीः
परितो भुजङ्गगणसङ्गतश्च यः ।

विललास [१]षिङ्ग इव दन्तमन्तरा
फणिवल्लिपूगखदिरसुधां दधत् ।।२९।।
बहुलीबभूवुरुटजेषु यज्वनां
परिपिङ्गयावकशिखेन यस्य च ।
मखधूमवल्लिवलयेन विद्युता
शिखरेषु संनिदधतः सदा घनाः ।।३०।
[२]अनिमेषमब्जनयनैर्विलोकय-
न्नमरावतीमनुपमां [३]वधूमिव ।
श्रुतिनिर्झरश्रमजलःसकण्टकः
फणिफूत्कृतैरनिशमश्वसच्च यः ।।३१।
पतयालुदेवतटिनीजलामलै-
र्मुचुकुन्दपुष्पनिवहैर्विभूषितः ।
नखरानुकारिशिखरोपलो हरे-
र्बलिनिग्रहेऽङ्घ्रिरिव यो विदिद्युते ।।३२।
स्तनयित्नुभिःपरिचितैःसमुक्षिताः
सततं मसारमणयो नवाङ्कुराः ।
यवसीयतो हरिणशावकान् मुहु-
र्यदधित्यकासु नितरामविभ्रमन् ।।३३।
वृषकेतनं वरविभूषितभूषितं
कलितार्द्धचन्द्रमनिशं शिवाश्रयम् ।
यमनादिमध्यपरिणामवेदिनो
बहुनीललोहितमशिश्रियन् सुराः ।।३४।
स्फटिकोपलस्फुटतटे निषेदुषो
न च कृष्णसारसमजो हरीनवेत् ।
धुरि बालवायजमणिस्थलीस्थितं
हरयोऽपि यत्र विविदुर्न तं क्वचित् ।।३५।

---

१. खिंग । २. 'मज्व' अत्र वर्णविपर्ययः ।-'मब्ज' इति भाव्यम् । ३. वभूमिव ।

क्षणदात्ययेऽपि नववज्रविभ्रमाः
शिखरेषु योऽदधत तारकाततीः ।
न तमालकाननरुचा तमिस्रया
दिवसेष्वपि क्वचन यो व्ययुज्यत ।।३६।
चमरीचमूरुचयचित्रकैश्चित-
श्चटुलैश्चकोरचटकैश्च चुम्बितः ।
चलचञ्चरीकचपलोच्चचम्पक-
श्चतुरोच्चयेन चकमेऽचिरेण यः ।।३७।
मदनाग्निनेव सुरवारयोषितः
कलयाञ्चकार सुरवारयोषितः ।
मदयाम्बभूव न वनेषु किन्नरान्
य उरुस्वकान्तिनवनेषु किन्नरान् ।।३८।
मृगयारसेन परिधावतो हरे-
स्तपनीयरेणुषु शिरस्थितेषु यः ।
ध्वजपद्मचक्रसृणिशङ्खलाञ्छनां
बिभराम्बभूव ललितां पदावलीम् ।।३९।
परिषेवितस्य सुरसिद्धकिन्नरैः
कमलापतेरिव सनातनश्रियः ।
उपवर्णितोऽपि बहुधा कवीश्वरै-
र्महिमानमस्य परिचिच्छिदे महान् ।।४०।
वनितावियोगविधुरोऽपि वीक्ष्य तं
सुमनायते स्म स नितान्तमद्भुतम् ।
अतिथीभवन्ति हि दृशोः सुदर्शना-
स्तिरयन्ति किन्तु पुरुमानसीं व्यथाम् ।।४१।

कुलकम्

ततस्तस्योपत्यकामुपेत्य हरितकञ्चुकीमिव वसुन्धरावारवध्वाःपिधान-पृथुप्रतिसीरामिव मृगाङ्गनानां मारकतशिखरशोभासमष्टिमिव लतावेष्टस्य चक्षुष्यां वाटिकामिव विश्वचित्रैकतानस्य विश्वसृजो लङ्कामिव कपिकुलाकुलितपलाशां वर्द्धमाननिकुम्भां च समितिमिव पतदच्छभल्लां स्फुरत्खड्गां च कात्यायनीमिव

सिंहवाहिनीं महिषभीषणां च सुग्रीवचमूमिव सशरभां सगवयां च रावणसभामिव [1]निर्गतैकाकिविभीषणामगणितरामां च भारताजिमिव सशल्यां सोलूकां चामरावतीमिवैरावतारूढकौशिकामिन्द्राणीसहितां च युद्धोन्मुखीमिवारूढस्यन्दनां धृतबाणासनां राजबलोपेतां च विष्णुमायामिव विश्वमोहिनीं राजवधूमिवासूर्यदर्शनां प्रलयवेलामिव नष्टदिग्विभागां जरामिव वर्द्धिततिमिरां खलसेवामिवोत्तरोत्तरगहनां मूर्खतपस्यामिव सन्निहितमार्गभ्रंशां कलियुगसद्यःसिद्धिमिवापेक्षितशाबरोपदेशां राजप्रक्रियामिव परस्परामिषलोभलभ्यमानमरणाहारलतामिव चोरःस्थितियोग्यां प्रौढनितम्बिनीमिव करजक्षतदायिनीं मृगयोत्थितमृगतनुमिव निपतितश्वदंष्ट्रां कुपितामिव सङ्गृहीतविषां गान्धारीमिव वर्द्धितबहुसुतां दन्तालिकामिव संसक्तवाजिदन्तां भीमसेनमूर्तिमिव बहुनागबलां श्रीकृष्णाकीर्तिमिव दृष्टबहुसमुद्रां तां भक्तिमिवातिविष्वक्सेनप्रियां गृहमधिकुटुम्बिनीमिव कुम्भोलूखलकसंग्राहिणीं चतुरङ्गुलोपेतामपि पञ्चाङ्गुलोपेतां सव्याधिं सारिष्टामपि ससर्वतोभद्रां सालतालतमालहिन्तालनिचुलपिचुलकरहाटपाटलवटकुरजशाखोटशाल्मलिभल्लातकनिम्बजम्बूकदम्बजम्बीरसर्जार्जुनकुन्दमुकुन्दमुचुकुन्दमाकन्दचन्दनमन्दारसिन्दुवारबहुवारकोविदारबिल्वचिरबिल्वखदिरखर्जूरबीजपूरवानीरकेसरतगरनारङ्गकिंशुकाशोककेतकतिलककरमर्दककरुणवरुणवृतां प्रत्यग्रदीर्णकरिकुम्भकेसरिकराग्रगलितरक्तारुणमुक्ताकलापलुण्ठनलोलशबरशतसंबाधां चपलप्लवङ्गमपातितनालिकेरफलमसृणितशिलातलां वनवराहशार्दूलतुमुलसंमर्दमृदितचारुचन्द्रबालाप्रसवपरिमलोपगूढां वेतण्डगण्डकण्डूयनकषणविषमितवल्कलगन्धसारसन्धिबन्धुरामोदमुदितमुनिमानसां नवमरिचकटुशलाटुकबलेन कलितकण्ठशुद्धिविविधविकिरव्याहारमुखरमधुरस्कन्धशाखामविदूरपरिणतद्राक्षासरससस्यसम्पन्नतपस्विगर्भिणीगणदोहदां परिपक्वपिप्पलीमण्डलमध्यबद्धमधुकोशक्रियमाणकिरातप्रसूतिकोपचारामतर्कितस्रस्तशाण्डिल्यफलपलायमानलवङ्गमण्डलीविलोकनस्मेरमुनिजनां विस्रब्धशाखामृगमृग्यमाणवृद्धतापसजटाजूटयूकां कस्तूरीगन्धलुब्धमधुपमण्डलानुगम्यमानपुष्कलककुलां मनःशिलाशिलाजतुवंशलोचनां मोचरसजिघृक्षुभिल्लबालविगाढां परिपाकदलितदाडिमरसास्वादसुखनिषण्णशुकशतवितन्यमानवन्दमालाश्रियं [2]वानरधूर्तनिभृतदुह्यमान-सुखसुप्तमहिषीगणां निरन्तरश्रवणसंवर्द्धितसंस्कारतापसाश्रमशुकसारिकाकीर्त्यमान-दर्शपूर्णमासमन्त्रजातां गुञ्जागजमौक्तिकहारधारिणीभिः सङ्केतकेतकीकुञ्जगताभिः पुलिन्दसुन्दरीभिरुपेतां कुसुमितलताशतालिङ्गनलोलपवनप्रेङ्खोलितमौलितरुपरागपटलविततवितानवलयिताम्बरां कीचकरणितैकतालचञ्चरीकगीतिसहकृताभिर्वनदेवतां विनोदयन्तीभिरिवानिलान्दोलिताभिर्लताभिरारब्ध-नृत्तामरण्यानीमवलोकयन्ननिरुद्धः परं प्रससाद निदिदेश च समन्ततो मृगव्याकुलीकरणाय मृगयन् स्वयं च पञ्चास्यप्रमाथरसिकः शरासनं [3]सज्जमकरोत् ।

---

१. मिर्गतै- । २. वानरधूर्तनिभूत - । ३. सज्य- ।

ततश्च सर्वतः सञ्चरता पापर्द्धिकानां कोलाहलेन बलवदाकृष्टानां शरासनानां विस्फारेण प्रसभमभिपततां पतत्रिणां सनसनायितेन विमुक्तकनकशृङ्खलानां कौलेयकानां स्यदसनत्कारेण तत्क्षणोन्मुद्रितदृशां शशादनानां पक्षिनिस्वनेन सरभससमुड्डीयमानानां सारसानां काकुकूजितेन शैलशिलातलेषु [1]प्रचलतां टङ्कनानां खुराघातरवेण वनमहिष-शृङ्गेषु प्रपततां कौक्षेयकाणां झणझणायितेन सकलमेव तदरण्यमाकस्मिकोत्पातचकित-वनदेवतावलोकितमतितरामक्षुभ्यत् ।

क्षणेन च मथ्यमाना इवाम्भोधिर्यादोभिःसर्वतो व्यग्रैः ।
आसीदसौ वनोद्देशः करालः श्वापदैर्दृप्तैः ।।४२।

अश्रूयन्त च मृगयारसावेशविसृत्वराणां बद्धपरिकराणां भटानामुद्भटा गिरः । तथाहि वितनुवागुराविपिनपरिसरेषु बघ्नीत मञ्चान् द्वीपिविनिर्गममार्गेषु रुन्द्ध रोधांसि गिरिणदीनां छिन्त शशानां शरणभूतं भूरिकण्टकजालकलिलममुं निकुञ्जमभितः । श्रयन्तु श्वसनतरस्विनः सारमेयाः । उत्पतति कुलिङ्गकुलङ्गमिह महापत्रिणः प्रहिणुत वैणिकैरलमलमिमे वयमेवाव्रणितानेव कुरङ्गान् करग्राहं गृह्णीमः ।

एवं च श्रमविकसदास्यस्खलितफेनलवस्तवकितपथःकृतप्राणसङ्कल्प इव दर्भं त्यजन् पश्य मृगो धावति दूरत एव [2]कृन्तद्गवलमर्द्धचन्द्रेण शेषभीषण-मभिद्रवतोऽस्य लुलायकुलस्य ।

अयमपक्रामति पृष्ठतस्तरलतरलं विलोक्य स्तब्धकर्णो गोकर्णनिकरः । अपसरन्ति चैतद्बन्धूककुसुमानीव व्रणेभ्यः क्षतजबिन्दून् विक्षिपन्तो जीवितरिरक्षिषवस्त-रक्षवः सदयं दूरवर्त्तिनीभिर्यूथमृगीभिरवलोक्यमानो दक्षिणेर्माणि मृगयूनगणयन्नदीनम-यमग्रेसरः सरति कृष्णसारः । अस्माभिरुपेक्षिताश्चेमे न बिभ्यति चञ्चरीकचाटुकारैरुप-चर्यमाणा गिरिकुमारा इव करिणः । इयं च पल्वलादुपसर्पति घुर्घुरारावरौद्रा कवलितार्द्रभद्रमुस्तारसामोदमेदुरीदारिणीदन्तुरतया चर्व्यमाणचन्द्रकलातमिस्त्रश्रेणिरिव घोणिमण्डली । इयमियं नवजलदनीलेषु तमालवनेषु पुरुहूतहेतिद्युतिं दधाना निलीयते मुक्तकाकुकेकाकेकिसंहतिः । धृतोऽयं मया सरभससमासन्नेन सपदि मुद्रिताक्षः समाधिस्थ इव शराः । बहिर्द्वारविप्रकीर्णसारङ्गशृङ्गा विसृमरसृमरनलकथंजराप-रिलुलितलोहितार्द्रमुक्ताततिः पतितकरङ्ककरोटिकोटिविकटा नूनमियं मृगेन्द्रस्य [3]निवासकन्दरा कन्दरादपक्रान्तं मृगमयमनुगतो यतो नेह लक्ष्यते ।

अन्ते वृष्टः फेरवाणां रवाणां
पद्यां प्राप्तो यो नदीनां न दीनाम् ।
दृष्टिं कृत्वा रूक्षतारां क्षतारां
द्वीपी दृप्तो मारयेतं दयेतम् ।।४३।

---

१. प्रचलां । २. कृंतठ- । ३. निवासकदरा ।

एवमादिकलकलाकुले विपिनोदरीद्वारनिःसारिताद्धकन्धरेषु शार्दूलशावकेषु[१] वनं विहाय पक्कणं प्रविशत्सु हरिणपोतेषु सशङ्कशिशुश्लिष्टोदरासु प्रतिशाखमटन्तीषु[२] शाखामृगीषु यतस्ततः सङ्घशः प्रसरत्सु जम्बुकेषु[३] तरुशिखरमारुह्य विधिमाह्वयत्स्विव गोलाङ्गूलेषु विधुबिम्बमध्यवर्त्तिस्वबन्धुजिगमिषयेवोच्छलत्सु कुरङ्गकुलेषु सद्यो विलुलितमधुच्छत्रगलदविरलबिन्दुकैतवेन वनवैशसं विलोक्य विलपन्तीषु वनदेवतासु–

रक्षिष्यन्त इव त्रस्तान् मृगराजतया मृगान् ।
चपेटैः क्रूरनखरैः पारीन्द्राः पर्यधर्षयन् ।।४४।

ख्यातं लोके स्वस्य खड्गायुधत्वं
व्याडौघेऽपि ख्यापयिष्यन्निवैतत् ।
खड्गेनैवावेल्लितःकिञ्चिदश्वान्
मध्ये द्वेधा तान्यधत्तानिरुद्धः ।।४५।

आचिस्कंत्सूनेष लब्धावकाशं
नम्रीभूतानेव सिंहानभिन्त ।
विश्वासो हि व्यंसकानां नतौ यः
सोऽनर्थौघं क्षिप्रमेव प्रसूते ।।४६।

जन्मक्षितिर्गिरिदरीशिखरं च सौधो
दन्तावलोन्नमटवी च विलासवाटी ।
नामापि भूरिभयदं भुवनेषु येषां
कालस्य तेऽपि कवले न्यपतन्मृगेन्द्राः ।।४७।

शिक्षाभ्यासादुन्नखाग्रौ प्रकोष्ठौ
शार्दूलस्यागच्छतः क्रोधवेगात् ।
लूनौ तेनोत्कोरके भुव्यभातां
क्षिप्ते नूनं वङ्गसेनस्य शाखे ।।४८।

हत्वा व्याघ्रान् दुर्विनीतान् नितान्तं
तेषां बालान्[४] क्रन्दतः कन्दराभ्यः ।
आनाय्यायं पोषयिष्यन् दयालु-
र्दृक्पातेनानुल्बणेनाभ्यषिञ्चत् ।।४९।

---

१. शावकषु । २. मटतीषु । ३. जंकुकेषु । ४. बाला ।

ज्ञात्वा ज्ञातिद्वेषमेष स्वभावात्
सर्वस्याहो नीतिमार्गप्रवीणः ।
खड्गे खड्गं योजयामास योग्यं
भल्ले भल्लं भेदमेव प्रयुञ्जन् ।।५०।
वनवासरता यतो वहन्ते
ललनालोचनविभ्रमाभिलाषम् ।
हरिणा इदमीयमन्वभूव-
न्निति दण्डं कियदप्यपेतमार्गाः ।।५१।
अमुना विनिपातितानि बाणै-
श्चमरीभ्यो भुवि चामराणि रेजुः ।
मृगराजवियोगमूर्च्छिताना-
मटवीनामलका इवावकीर्णाः ।।५२।
ऋश्यकेतुरभवत् पुनरुक्तो[1]
भूरिकाननमृगान् स विनिघ्नन् ।
मारयन् सपरिवारमुदीर्णं
शम्बरं जनकमन्वकरोच्च ।।५३।
आयान्तं हयमभिदीर्घदन्तपोत्रं
निष्पत्राकृतममुना बृहद्वराहम् ।
पश्यन्तश्चिरमपरे परं च[2] रेजु-[3]
र्नाराचो न बत विभिद्य निर्गतो यः ।।५४।
भोजं भोजं किरातीनां पाकान् पाकानिवैधिताः ।
हताहता वने स्थातुमीहामीहामृगा जहुः ।।५५।
अरुचदुपहितः सुवर्णपुङ्खः
शिरसि शरः किल कासरस्य तेन ।
उषसि दिनकृता तमिस्रकूटे
किरण इवैक उदित्वरो निखातः ।।५६।
प्रपूरितेषु[4] मारेण बाणैर्व्यात्तास्यवर्त्मसु ।

---

१. पुनरुक्ता । २. मातृकायां 'च' इति नास्ति । ३. ररजु; ४. पूरितेषु ।

जरन्तो जगरास्तत्र तूणीरा इव रेजिरे ।।५७।
पङ्केष्विव प्रविष्टेषु[१] पार्श्वेषु नवखड्गिनाम् ।
खड्गेष्वासीदकुण्ठेषु परीक्षा नवखड्गिनाम् ।।५८।
तस्य क्रूरैः पत्रिभिः पत्रिणां तत्
त्रस्तानां नाभूदरण्यं शरण्यम् ।
[२]श्यैनम्पाताप्रस्फुरन्मण्डलानां
तेषामेवापातभीत्याम्बरं च ।।५९।
उच्चैर्बभूव विजगीषुरिवैक एव
पत्री बधान उरुमण्डलमात्मबुद्ध्या ।
भूमिस्थितेषु नृपतिष्विव नीडजेषु
मूर्द्धानमुन्नमयति स्म मनाङ् न कश्चित् ।।६०।
शशादनानां नखरा निखाताः शशमूर्द्धसु ।
यत्नैर्निर्गमितास्तत्र श्येनपालैः कथञ्चन ।।६१।
क्षतजोक्षितक्षितिरनुक्षणोच्छ्रित-
ध्वनिधुक्षितःक्षततरक्षुऋक्षकः ।
छिदुरक्षुपःक्षपितवृक्षकक्षको
मृगया क्षणोऽस्य ववृधे[३] विलक्षणः ।।६२।
नवमौक्तिकद्युतिभृतो ललाटजा
यदुकुञ्जरस्य घनघर्मविप्रुषः ।
मकरन्दबिन्दुनिकरेण तत्क्षणं
वनमारुतोऽन्यमपयाति[४] पेशलः ।।६३।

ततः श्येननखक्षतच्छुरितचक्रवाकस्तनीमतिनिपीताधरमधुरमधुमुपमृदितपल्लवावयवां विलुलिततमालनीलालकामपगमितमृगमदशोभामुत्त्रुटितसारसश्रेणिमेखलामलसनेत्रामतिमात्रविप्रकीर्णकेकिचन्द्रकाभरणां स्फुटपरिदृश्यमानकरजघनपृथुलकुचनितम्बामवलोकितनिम्नोन्नतस्थलीतरुणेन मृगयारसेनोपभुक्तामटवीमपजिहापयिषुरनाधृष्टिनन्दनः कुमारमिदमगदत् ।

अयि महाभाग चिरमरीरराम[५] मृगान् । निदाघनमितैरनोकहानां मृदुमौलिभिः

---

१. प्रविष्ठेषु । २. श्यैनंयाता । ३. ववृध । ४. -मयताति; ५. चिरमरीरजाम ।

प्रणमन्त्यो वनदेवताः प्रार्थयन्ते । भगवान् सहस्रदीधितिः[१] स्वकर्कशैः करैःप्रतिषेधति मृगयारसातिप्रसङ्गम् । सम्प्रति हि-

कुर्वन्तीव दिशो दृशामविरतं सम्मीलनोन्मीलने
गुल्मिन्यो मकरन्दबिन्दुकपटात् स्वेदस्रुतिं बिभ्रति ।
तारं क्रन्दति चिल्लवाशितशतैस्तप्तोष्मणा रोदसी
बन्धूकास्तरणिं प्रसूननयनैः पश्यन्ति रोषारुणैः ।।६४।

अपि च–

शार्दूलाः परितः पतन्ति सरितां कच्छे श्वसन्तः परं
मज्जन्ति द्विरदा ह्रदेषु नियतं बद्धोदवासव्रताः ।
आलिङ्गन्ति विशिष्य चन्दनतरूंस्तांस्ता भुजङ्गाङ्गनाः
पक्षैश्च स्थगयन्ति [२]निष्कुहकुटीनीडे शिशूनण्डजाः ।।६५।

तदत्र मन्दाकिनीविदलितारविन्दमकरन्दतुन्दिलचन्दनामोदमन्थरपवनपारिप्लवलताकृतकुसुमसंस्तरे विकसितकिंशुकाशोकप्रतिषिद्धतरणिकिरणप्रवेशे विशालचन्द्रकान्तोपलशिलातले श्रवणसुखमिलिन्दमञ्जुलापलालिते लतावेष्टस्य सुगमशिखरे[३] निषद्य निखिलवनविलोकनानन्दमनुभवाम यदि हृद्यमाभाति भवतः ।

एवमवसितवाचि तस्मिन् यदभिमतं वयस्यवर्गस्येति मधुरमभिदधानोऽनिरुद्धस्तमुद्देशमाविश्वगवलोक्य जातकौतुकश्चेदमवदत्–अहो रमणीयमदुरारोहोन्नतं सकलसरिदरण्यगिरिनगरखेटखर्वटपल्लीपक्कणावलोकनसाधनं साधीयः समाधिलब्धं चक्षुरिव शिखरमिदं सुखयति ।

इयं च जलकेलिलोलनागरी गरीयस्तनकलशकस्तूरिकाजम्बालमलिनतया कलिन्दकन्यामनुकुर्वती मत्तदन्तावलकपोलगलितदानबिन्दुबद्धचन्द्रकद्युतिः फुल्लहल्लकपरागरञ्जितरसा रसालसहंसमिथुनकेलिविदलितकमलदलदन्तुरा भाविविरहवेदनानुसन्धानद्विगुणितानुरागशृङ्खलितचित्तवृत्तिचटुलचक्रवाकदम्पतिविलासविलुलितशैवलावली जलमानुषीनिकरकर्णपूरोपयुक्तकूलकेतकीदलसमृद्धिरुच्छलत्कठिनपाठीनपृष्ठपीठाघातघूर्णितफेनायमानपानीयदर्शनोद्ग्रीविकाशतस्नातवककुला[४] मन्दाकिनी नाम नदी न दीनतां न दलयति ।

अस्याः खलु–

---

१. सहस्रदीधितिश्वकर्कशैः करैः । २. निःकुह; । ३. शिखेर- । ४. श्नातवककुला ।

आस्तीर्णानि तटानि सान्द्रवकुलैरध्यास्य वैखानसा
व्याकोशाम्बुजवासितेन पयसा माध्याह्निकं कुर्वते ।
एताः सैकतशायिनीषु हरिणीष्वातर्पणैः स्वस्तिकं
विस्रब्धं मुनिकन्यका विदधते पञ्चाङ्गुलं च क्वचित् ।।६६।

अपि च–

पारावारविरूढकेतकरजोबद्धैरमी सेतुभि-
र्गाहन्ते चरणैरलग्नसलिलैः स्रोतो मुनीनां सुताः ।
एते वीरतरोर्निमील्य निभृतं शाखासु शाखामृगाः
पश्यन्ति प्लवमानभूरिशफरीराजीवराजी रुचिम् ।।६७।
स्रस्तैः स्वर्द्रुमकर्णपूरकुसुमैर्दिव्याङ्गरागारुणा
स्नानं सैकतभूरियं कथयते[1] गीर्वाणवामभ्रुवाम् ।
रोधोवञ्जुलकुञ्जगुञ्जितगुरुर्नो किन्नरीणामयं
गीतीनां चरमोऽचिरं विरमति ध्वानस्य गम्भीरिमा ।।६८।

अहो उन्नतत्वमस्य गिरेर्यदितः–

सूत्राणीव ततानि भान्ति सरितः खर्वा इवामी जनाः
सस्यानीव वनानि भल्लनिवहा [2]राजीवमाला इव ।
द्रष्टुं किञ्चिदवाञ्छितेऽपि शिरसि भ्रंशस्य भीत्या जनं
कम्पः कं परितो न गूहति न च प्राप्नोति रोमोद्गमः ।।६९।
दूरादपि क्रतुविसृत्वरधूमधूम्रै-
श्छत्राङ्कितैर्द्विजगृहैरुपलक्षितेयम् ।
अभ्रंलिहैर्धवलधामभिरुत्पताकैः
सौधैर्विभाति नगरी वनमालिनीव[3] ।।७०।।
विटपिशिखरशाखासन्धिसम्बद्धमेत-
न्मधुपटलमलोलैर्लिह्यमानं मिलिन्दैः ।

१. कथयतै । २. 'राजीव' इति हस्तिविशेष इति वागीशः । ३. वः ।

जनयति भयमुच्चैः सुप्तभल्लूकबाल-
भ्रमचकितमतीनां भिल्लमुग्धाङ्गनानाम् ।।७१।
श्रेण्योऽतिनिर्मलजलाः खलु निर्झराणा-
मुच्चैर्भृगुभ्य उरुधारमधः पतन्त्यः ।
आरोहणाय वनदेवतया निबद्धा
दुर्वर्णरज्जव इवालघवो लसन्ति ।।७२।
रता वृत्तिक्लमक्लान्ताःकामं फुल्लतनूरुहाः ।
चटकाः सह कान्ताभिःस्नान्ति[1] निर्झरशीकरैः ।।७३।

इयं मन्दाकिनी च-

फुल्लकोकनदा भाति तमालवनमन्तरा ।
वनश्रियः ससिन्दूरा नूनं सीमन्तपद्धतिः ।।७४।
दीर्घैःशिरोभिःसहसोद्धरन्तो
नूनं[2]नभश्छादनमश्वकर्णाः ।
शाखामृगाणां निनदैरदभ्रै-
रन्योन्यमुत्साहनमाचरन्ति ।।७५।
वटेऽस्मिन् सुखसुप्तेषु गोलाङ्गूलेषु सर्वतः ।
लाङ्गूलानि न लक्ष्यन्ते प्ररोहैः सह लम्बनात् ।।७६।
अर्द्धनिःसृतनिर्मोका वल्मीका वनभूमिषु ।
शिक्षमाणा इव सदा धौतकर्म लसन्त्यमी ।।७७।
शातितेषु मृगयाशरारुभिः
क्रूरकेसरिषु मुक्तसाध्वसाः ।
शल्लकीवनविनोदमुच्चकै-
राचरन्ति करिणः करेणुभिः ।।७८।
अविरलमदयोः कपोलयो-
रिह करटीपततो मधुव्रतान् ।
तिरयति सहकारशाखया
कुसुमितया द्विगुणं पतन्ति ते ।।७९।

---

१. स्नान्ति, २. नमः– ।

एते च-

नवदन्तिदन्तनिचिताः शुष्यच्छार्दूलचर्मचमरौघाः ।
कस्तूरिकासुरभयो घृतमधुकलशा लसन्ति शबरगृहाः ।।८०।

स्वाराज्यग्रहणभयेन जम्भभेत्रा नुन्नानां सुरवारवाणिनीनाम् ।
दृग्भङ्गीरगणयतामिममानन्दं[1] ददति न कस्य पर्णशालाः ।।८१।

अच्छिन्नं वनकन्दतिन्दुकफलैरभ्यागतोपासनं
नीवारक्षतकल्पितैश्च बलिभिस्तृप्तिःसुराणां परम् ।
आख्यानैर्मनसां सदौपनिषदैःकाले विनोदक्रिया
कायक्लेशशतैस्तपोऽर्जनमहो एषां महानुद्यमः ।।८२।

अहो तपसः प्रभावः—

सदेहान्नेष्यन्त्यो ननु मुनिगणान् नाकनिलयं
निषिद्धास्तैरद्धा पुनरपि नियुक्ता मघवता ।
क्वणत्काञ्चीजालैरिह नवविमानैरनुदिनं
गतायातैरभ्रं व्यवदधति गीर्वाणगणिकाः ।।८३।

अपि च

बालेयानजिरेषु रक्षति धृतान् रङ्कुः क्वचित् तन्दुला-
नागन्तोः क्वचिदाचरत्यपि कपिः प्रक्षालनं पादयोः ।
बालं वीजयते चिरेण चमरी सुप्तं स्वबालैः क्वचि-
च्छार्दूलःपलपैतृकाय नभते वार्द्धीनसं[2] च क्वचित् ।।८४।

कण्डूयनादध्वरदीक्षितानां
शृङ्गैर्निजैरत्र यथाभिलाषम् ।
सारङ्गशृङ्गग्रहणं मुनीनां
कुर्वन्त्यदृष्टैकफलं कुरङ्गाः ।।८५।

---

१. -तामिमानन्दं । २. 'वार्द्धीनसस्त्वेकचरो गणोत्साहश्च गण्डकः' । इह तु 'वार्धीनसं' इति पाठः । वस्तुतस्तु 'वार्द्धीणसं' इति पाठेन भाव्यम् 'पूर्वपदात् संज्ञायामगः' (८, ४,३) इति णत्वविधानादिति वागीशशास्त्री ।

अयं च कालःकिञ्चिदपूर्व इव मनोनयननन्दनः पञ्चापि भूतानि विशिनष्टि तथाहि-

प्रगल्भन्ते भानोः किमपि किरणव्योम च दिशः
प्रसीदन्ति स्तोकं जहति जडिमानं च सरितः ।
लभन्ते संवासं तरुशिखरगर्भेषु मुकुला
दिनानामन्यैव प्रभवति च लक्ष्मीरनुदिनम् ।।८६।

अपि च

इयं सन्ध्या रक्ता हरति हृदयं किंशुकवती
मिलिन्दाश्चुम्बन्ति प्रसभमिह माकन्दकलिकाः ।
रतश्रान्तान्मन्दं परिमृशति चायं परभृता-
नपथ्यः पन्थानं मलयपवनः प्रातिपथिकः ।।८७।
एवमुक्तवति कामनन्दने
कामपि स्फुटरसां सरस्वतीम् ।
पूजयन् परमुवाच [१]सूनृतां
वाचमस्य पृतनापतेः सुतः ।।८८।

अयि कुमार ! किमिह संशेते भवान् । नन्वयमायात एव सरसालाङ्कुरकवलन-कषायकण्ठकलकण्ठकामिनीकलनिनदमेदुरदिगन्तरालो मधुमदमुदितवाचालचञ्चरीक-कुलकलहमुखरनिखिलशाखिशिखरः परस्परप्रकीर्णपटवासरेणुरञ्जितभुजङ्ग-गणगीयमानाश्लीलशतसुखिततरुणललनाजनो मन्दमलयानिलान्दोलितस्मितलता-पतत्परागपरिपिञ्जरीकृतदशदिशामुखो विकसितकिंशुकावलीविलोकनज्वलित-विरहिनिवहो बहूकृतविरहवेदनाविदूनविधुरवनिताविलापबहुलो वसन्तः ।

तथाहि सम्प्रति–

स्नायं स्नायमनुष्णवारिषु सरित्पूरेषु पान्थश्रमं
क्षायं क्षायमनोकहालिनिबिडच्छायं क्षणं संश्रयन् ।
धारं धारमपि स्तनेषु सुदृशामामोदभारं गुरुं
मन्दं मन्दमुपैति चन्दनगिरेः श्रान्तः समीरोऽध्वगः ।।८९।

---

१. सुनृतां ।

पान्थानामुद्दहन्तः प्रथममकरुणा इन्द्रियग्राममुच्चै-
धैर्यं वैधुर्यभाजामतिकृपणतया दुर्विधानां हरन्तः ।
मानं वध्वा गुणैःस्वैः सपदि परवशा मानिनीर्दण्डयन्तो
लुण्टाका दाक्षिणात्याः स्मरनृपपृतनाग्रेसरा वान्ति वाताः।।९०।
लङ्कानिष्कुटनिर्गताः सरभसं वेलावनालीस्पृशो
[1]माद्यद्द्राविडकामिनीपरिचिताश्चोलाङ्गनालिङ्गिताः ।
कावेरीसुहृदोऽथ लाटलुटिताः कार्णाटकान्ता हि ता
गोदावीचिविचुम्बिता न मरुतो मोदाय कस्याधुना ।।९१।
कुसुमरेणुविभूतिविभूषितो
बलयितश्च मधुव्रतमालया ।
भ्रमति मुग्धवधूः परिलोभयन्
कितवतापसवन्मलयानिलः ।।९२।

मानविमातुरासु तरुणीषु मदनजाङ्गुलिकस्य मन्त्रफूत्कारो विरहिणीषु मलयगिरिभुजङ्गनिःश्वासः पान्थेषु व्याकोशकिंशुकाङ्गारगुरुशिखरोत्करः सुरतसङ्गरः श्रान्तासु नवनितम्बिनीषु पीयूषपूरः पटीरगिरिः समीरः परिसरति–

कालोऽयमाश्रवणवासितगन्धवाहः
शीतोष्णसन्धिमधुरो मधुमत्तभृङ्गः ।
कान्तापयोधरतटीष्वतिवाहनीयः
[2]कामं मुनेरपि मनो विकरोति वेगात् ।।९३।
माकन्दकोरककरालितदिङ्मुखेषु
वाचालकोकिलमिलिन्दकलप्रियेषु ।
[3]अङ्गारितेषु निपतन्ति वनेषु तान्ताः
कान्तावियोगविधुरा दिवसेष्वमीषु ।।९४।
अक्षैर्दीव्यति माधवे मनसिजो रत्या समं सम्मदा
ये सारास्तरुणा न तत्र मिथुनीभावं तया लम्भिताः ।

---

१. माघदान । २. काम । ३. अङ्गरितेषु ।

हन्यन्ते परिणायपेशलधिया ते हन्त चेतोभुवा
ये युग्मत्वजुषो न तेषु परितो लीलागती रुध्यते ।।९५।

करकिसलयभूम्ना माधवेनोपनीतान्
किरति कुसुमधन्वा सायकान् दीप्तदीप्तान् ।
कवचितहृदया ये कामिनीभिः पुमांसः
त इह मुदमुदारां बिभ्रतेऽन्ये[1] खिदन्ते ।।९६।

ऊर्ज्जितं जनयति स्म मनोजं
माधवो विधुरवर्गनिहन्ता ।
सोऽनिरुद्धमसृजच्च समग्रं
नागरं जिनमुदित्वरलीलम् ।।९७।

लोकोपकारपरतन्त्रतयाऽनुवेलं
भ्राम्यन् प्रियाविरहवर्द्धिततीव्रतापः ।
प्रालेयजालजटिलां शिशिरीकरिष्यन्
नात्मानमञ्चति रविर्भगवानुदीचीम् ।।९८।

काञ्चनारनयनैरुषारुणै-
स्तर्जयन् पिककलैश्च बोधयन् ।
मानिनीः सुरभिरेष कामिनां
किन्न नर्मसचिवायते गुणैः ।।९९।

रागिणी किल कुसुम्भवाटिकाः
कुट्टनीव घटयत्यनाकुलम् ।
कामिनीः कुसुमसंग्रहागता
[2]ग्रामषिङ्गतरुणैश्चिरोत्सुकैः ।।१००।

पादघातमनुभूय सुभ्रुवो
हृष्यति स्फुटमशोकपादपः ।

---

१. खिदंतेन्ये । २. खिंग-। लिपिकराः षकारस्य स्थाने खकारमुच्चारयन्ति तथैव च लिखन्त्यपि । पाषण्डस्य स्थाने पाखण्डलेखनाद् द्विविधोऽजनि पाठो ग्रन्थेषु लिपिकराणां प्रमादात्, मालविकाग्निमित्रे श्रीमद्भागवतपुराणादिषु च द्वित्रेषु ग्रन्थेष्वेव तस्य दर्शनाच्चेति वागीशशास्त्री ।

आपतन्ति तमथो शिलीमुखाः
कामकार्मुकविनिर्गता इव ।।१०१।
कामिनीवदनशीधुसौरभं संप्रपद्य वकुलो विलासिवत् ।
सात्त्विकान् किरति पुष्पकैतवात् स्वेदवारिपृषतान् स्थवीयसः ।।१०२।
उन्नतस्तनमनोरमं धृतो रामया कुरबकः प्रफुल्लति ।
वीक्षितः सरसमब्जनेत्रया सम्मदेन तिलको हसत्यसौ ।।१०३।
वीक्ष्य पान्थवनिता दृगम्भसां सारणीर्विजहतीः समन्ततः ।
रोदिति स्फुटमधूककैतवादश्रुभिः सततपातिभिर्वनी ।।१०४।
उल्लसन्नवमधूकसौरभो यामिनीचरमयाममारुतः ।
ग्रामपङ्कजदृशोऽभिसारयन् कामिनां वहति बन्धुताधुरम् ।।१०५।
चम्पकानि मनसो विलोकयन् कम्पकानि पथिको वने वने।
संस्मरन् कनकगौररोचिषः सुभ्रुवो विलपति क्षणे क्षणे ।।१०६।
आम्रताम्रदलकर्णभूषणाः केसरस्रगुपशोभितस्तनाः[1] ।
चिन्वतीः समनसो वराङ्गना वीक्ष्य तृप्यति न कामिनां गणः।।१०७।
कापि पुष्पनिचयं विचिन्वती श्वाससौरभरतैर्मधुव्रतैः ।
आकुला भयविकम्पितस्तनी तृप्यति प्रियतमं स्वयं ग्रहात् ।।१०८।
उज्झिताः सुमनसो मधुव्रतैराश्रिता सुतनुकुन्तलावली ।
देशरूपमिदमाहितादरो रज्यते हि मलिनो मलीमसे ।।१०९।
निष्पतत्युरुपरागपिञ्जरैः स्वेदबिन्दुनिचितैर्मुखाम्बुजैः ।
निःसहैरवयवैर्विलासिनो मोहयन्ति वनिताः समन्ततः ।।११०।
त्यक्तसर्वमणिहेमभूषणा बिभ्रतीः सुमनसामलङ्कृतीः ।
ध्येयतामुपगता विलोकयन् को नु मुह्यति मनस्विनीरिमाः ।।१११।
मञ्जुगीतमतिलोलदोलया[2] कम्पितः किल रसालपादपः ।
योषितो मनसिजास्त्रदेवताः पूजयन् किरति कोरकावलीः ।।११२।
चूतचम्पकसरोजकेसरैरर्चयन्ति मदनं मृगीदृशः ।
तैः शरैर्नियतमर्पितैः करे कामिनः सपदि विध्यति स्मरः ।।११३।

---

१. –शोभिस्तनाः । २. होलया ।

नयन्त्यशोककलिकाः सख्यः शोकस्य शान्तये ।
ताभिः पथिककान्तानां शोको भूमानमञ्चति ।।११४।
प्रियालमञ्जरीमञ्जुकपोला भिल्लवल्लभाः ।
प्रियालसदृशः कामं मोहयन्ति मृगानपि ।।११५।
चञ्चरीका न मुञ्चन्ति कालेऽस्मिन् किल माधवीम् ।
मनांसि यूनां सारङ्गनयनां न त्यजन्ति च ।।११६।
उपचितनवीनकमला भ्रमरानामन्त्रयन्ति कासाराः ।
गृहमेधिन इव भिक्षूनहमहमिकया समेधिते नगरे ।।११७।
एषा लवङ्गलतिका मदनमदादिव दलांशुकं त्यक्त्वा ।
नवपल्लवपटमचिरादङ्गीकुरुते ह्रियेव विनताङ्गी ।।११८।

[१]माकन्दबिन्दुवरमौक्तिकसम्परीतः
पुँस्कोकिलो निधुवनश्रमनिश्चलाङ्गः ।
आताम्रचूतनवपल्लवसंवृताया
धम्मिल्लजूट इव भाति वसन्तलक्ष्म्याः ।।११९।

न तद् वनं यत्र न पुष्पितो द्रुमो न स द्रुमो यत्र न मत्तकोकिलः ।
न कोकिलः सोद्गतपञ्चमो न यो न पञ्चमः सोऽपि हरेन्न यो मनः ।।१२०।

शेफालिकासुरभयः शनकैः सरन्तः
स्वान्तानि सन्दधति सम्प्रति दम्पतीनाम् ।
उन्निद्रतामरसरेणुलवान् हरन्तः
कासारशीकरकिरः कुशलाः समीराः ।।१२१।

उपवनवासन्तीनां दलितदलानामलब्धपर्णानाम् ।
प्रणयिन्यो हरिणाक्ष्यो द्वित्राणि दिनानि शोचन्ति ।।१२२।
किं वा ब्रूमः कौतुकं कामबन्धोर्येनोत्सृष्टां सम्पदं सम्प्रपद्य ।
किं वा विष्वक् सौरभोद्गारभाजो रोलम्बानां सेव्यतामाश्रयन्ते ।।१२३।
विकचस्थलपद्मगन्धगर्भाः परितः सिक्तलतां कपालिलोलाः ।
सुरतक्लमकर्शिता नवोढाः सुखयन्त्यौषसिकाः शनैः समीराः ।।१२४।

---

१. मारन्द-

अकृतचरणपङ्कजप्रणामानरचितचाटुपदानदीनदृष्टीन् ।
अगणितगुरुमन्तवो रमण्यः स्वयमदयं दयितान् परिष्वजन्ते ।।१२५।

स्मरनरपतेराज्ञामुद्घोषयत्सु पिकेष्वलं
वरतनुजनो बिभ्यन्मानं मनागपि नेहते ।
सरसिजदृशां पायं पायं मुखाम्बुजवारुणीं
निधुवनरणे सक्तः कामं न कस्तरुणास्त्विह ।।१२६।

[1]उद्यानोद्यतगन्धवाहशिशिराः प्रोन्निद्रचन्द्रातपाः
कान्तास्वादितशेषशीधुसरकक्षीबैर्विटैरादृताः ।
मुग्धा नूपुरशिञ्जितैः प्रतिगृहं प्रारब्धकोलाहला
नीयन्ते नु वियोगिभिः कथमहो हा हन्त चैत्रक्षपाः ।।१२७।

पर्याप्ता मदनोत्सवस्य महतो गाढाभिलाषोदया-
न्नैता वामनताजुषो मधुनिशाः सम्पूर्त्तये कामिनाम् ।
ता एव स्मरमुर्मुरे कलयतां हा [2]पौटपाकां गतिं
जायन्ते भृशदुस्तरा विरहिणां कल्पान्तकल्पाः किल ।।१२८।

मर्माविधो विरहिणामिति तस्य वाचः
स्फीता निशम्य स चिरेण वदावदस्य ।
उद्भूतमन्मथदवानलदूयमान-
श्चिन्ताविकम्पितमना न सुखं प्रपेदे ।।१२९।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशास्त्रीत्युपनाम्ना
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते
मृगयाविनोदो नाम तृतीय उच्छ्वासः ।



१. उद्यानेद्यत । २. ह्यापौटपार्का गतिम् ।

## अथ चतुर्थ उच्छ्वासः

स धीरतास्तम्भितविक्रियोऽपि प्रियानुरागेण समुद्धतेन ।
अनल्पविश्वासविकम्पितौष्ठः पुरे परावर्त्तितुमाचकाङ्क्ष ।।१।
स्वमभिघूर्णितपुष्पविलोचनाः समलयानिलदुर्ललिता लताः ।
असहमान इव स्मरजर्जरः प्रतिययौ विमना वनमालिनीम्।।२।

शिवशिवशूलकराणि कर्णयोः
पथि कोकिलकूजितानि सः ।
श्रवणपिधानपरो विलङ्घयन्
द्रुतमविशत् कुशलः कुशस्थलीम् ।।३।

अत्रान्तरे च विततगगनाङ्गणगाहनश्रमामर्षोपरक्त इव सहस्रदीधितिरलोहितायतसाटोपमुत्तिष्ठमानस्य तिमिरपरिपन्थिनोऽभयादिव भूमिमपहाय भानुभास्तुङ्गशृङ्गाण्यश्रयन्त । चरमभूधरशिरःसरसीस्फुरत्कोकनदकान्तिभाजि भगवति भास्वति तत्किञ्जल्करेणुभिरिवोड्डीनैः स्फीतः पीतिमा पदार्थेषु प्रासरत् ।

श्वपचादिव प्रपततो मदमूढात्
स्पृशतो बलादखिलमेव तमिस्रात् ।
अतिबिभ्यदाशु किमतीव पवित्रः
समचूकुचन्निजकरान् हरिदश्वः ।।४।

रागेण तेनैव युताय कश्चि-
न्मित्राय तस्मै न नतिं चकार ।
उपस्थितो योऽभ्युदये समस्तै-
रस्तङ्गतौ सम्मनुते न लोकः ।।५।

सकलवासरभ्रमणभूयिष्ठपिपासातुरैरिव सस्यन्दनै रवितुरगैररुणमतिक्रम्य पश्चिमपयोनिधौ निममज्जे ।

कथमन्यथयितुमीष्टां यत्नः पुरुषस्य हन्ति भवितव्यम् ।
चरमसमुद्रेऽमज्जत् सहस्ररश्मिर्यतस्तरणिः ।।६।

जुष्यं विष्णुपदं विहाय भजते रागेण यो वारुणीं
तेजस्वानपि वन्दितोऽपि सकलैर्लोकैः [१]कृतार्थोऽपि च।
द्रागेव प्रविहीयते स पतितस्तेजोभिराक्रम्यते
तूर्णं सन्तमसे न चेदुपदिशन्नस्तङ्गतो भानुमान्॥७॥

सदसद्विश्ववस्तुकरैः स्पृष्टमिति ग्लानिवशादिवापरपारावारं प्रविष्टे मयूखमालिनि तद्भवीभिः समं निलीयमानेषु गोसङ्घेषु तिमिरनासीरचरेष्विव सर्वतः सञ्चरत्सु गोरजस्सु प्रतिश्रयाभिमुखेषु पान्थेषु सान्धिवेलं विधिमुपक्रममाणेषु शिष्टेष्वन्तर्हितं नु संहृतं नूल्लिखितं [२]नूद्घाटितं नु कवलितं नु दिनमनिरूप्यतामभजत्। ततो वेलाविलासिनां रागसागरस्य व्यवच्छेदवेदिकाऽहोरात्रस्य रङ्गभूमिः पांसुलमनसामनध्यायतिथिर्मधुकराणां मणिमञ्जूषाविभावरीविलासिन्या जैत्रयात्रा कुसुमकार्मुकस्य भगवती सन्ध्या समध्यवर्त्तत। आतपे प्रतनपीतदुकूलच्छायमेत्य चलिते सममहाभूषितं कतिपयैरुडुरत्नैः फुल्लशाल्मलिसनाभि नभोऽभूत्।

लक्ष्मीं निचिक्षेप निजां प्रवत्स्यन् किं काश्यपिर्व्योम्नि निसर्गशुद्धे।
दिनश्रियस्तूर्णगतेरुताहो पतत्पदालक्तकलिप्तमेतत्॥८॥
न केवलमवन्दिष्ट लोकः सन्ध्यां कृताञ्जलिः।
मुकुलीभवदम्भोजाः पद्मिन्योऽपि समं तताः॥९॥
प्रणिपेतुरमूं प्रजाः परं नचिरादेव विनश्वरीमपि।
य उदेति तमेव [३]वन्दते नियतं रागविमोहितो जनः॥१०॥

अभ्युद्धृतेषु दहनेष्वनुगेहमग्र्यै-
[४]रग्न्याहितैर्विततधूमवितानवेषः।
भूयोऽपि भानुपरिवर्त्तनशङ्कयेव
प्रादुर्बभूव शनकैः क्वचिदन्धकारः॥११॥

प्रापय्य सङ्केतगृहेषु कान्तान्नूनं निसृष्टार्थतया चकार।
रक्ताम्बरा प्रव्रजितेव दूती सन्ध्या वधूनामभिसारशैघ्र्यम्॥१२॥
गवेषयिष्यन् दिवसोऽतिदूरं विप्रोषितं घर्मघृणिं जगाम।
उदन्तमप्राप्य [५]तयोः सरागा सन्ध्यापि नात्मानमधाच्चिरस्य॥१३॥

[६]दिनदिनकरविरहातुराणीव नलिनवनानि समकुचन्। अन्धकारकणानिव बहुलीभविष्यतो भ्रमरान् मित्रमित्राणि कमलानि कवलीचक्रुः। मत्तकाशिनीकेशपाश-

१. कृतार्द्योऽपि २. नूघाटित। ३. वन्देत। ४. रग्र्याहितै। ५. तयौः। ६. दिनदिनकरविरहोतुराणीव।

संस्क्रियोपयुक्तैरगुरुधूपधूमैरन्धकारस्कन्धावारस्यासारकृत्यमक्रियत । भक्ष्यमरवहनमन्थ-रानभिपततः पतत्रिणः कुलायकूलेषु सन्दर्शितपीतचलचञ्चवः शिशवश्चटुलचूङ्कृतैः समबीभवन् । आकस्मिकतरणितिरोभावसंशयालवः शकुनयः कलकलैः परस्परमपृच्छन् । बिलाद् बहिरर्द्धनिःसारितकन्धरेषु फेत्कारिषु फेरवेषु काङ्कारमुखरेषु काकेषु घूत्कारघोरेषु घूकेषु सकलकलेषु बलात्सुवल्गुलेषु वाचाटेषु टिट्टिभेषु [१]चीङ्कारिणीषु चीरीषु मौनमेव श्रेयस्करं मन्यमाना रथाङ्गाह्वराजहंसमधुव्रतास्तूष्णी-कामासत । वासरपरिक्षयक्षीणान्ध्याः कोटरकुटीरवर्त्तिनो [२]निशाटना बहिर्विहर्तुमु-द्ग्रीविकामरचयन्-

मीलितसरोजलोचनममुखरकादम्बरोलम्बम् ।
कलिततमःकृष्णाजिनमयुज्यताम्भोजिनो विपिनम् ।।१४।

अथ विषमेषु विजयप्रस्थानमङ्गलजल्पाक[३]मणिमेखलानिबन्धबन्धुरासु वासक-सज्जासु मुखरमञ्जीरविरसास्वभिसारिकासु[४]सङ्केतनिकेतसेविनां विटानां चित्तवृत्तिष्विव सर्वतःसञ्चरन्तीषु दूतीषु प्रसाधिताभिर्वारमुख्याभिरधिष्ठितेषु वेशपरिसरेषु दयितनवसङ्गमोत्सवस्मयसाध्वसोत्साहदोलायमानमनसो मुग्धवरवर्णिनीर्विभूषयन्तीषु सैरन्ध्रीषु रन्ध्ररागसिन्धुमध्यमज्जत्कामुककुलकरावलम्बकरीषु शम्भलीषु प्रकटितविविध-मालभारिषु मालाकारविपणिचत्वरेषु श्रूयमाणमृदुमृदङ्गध्वनिषु विलासिवेश्मसु कथां कथयितुं जरतीरतितरामाकुलयत्सु डिम्भेषु प्रतिधेनु धाराध्वनिमनोरमं पयोभिः पारीः पूरयत्सु वल्लवेषु गौरवमाकस्मिकं दधानेषु निद्रालुनयनपक्ष्मसु विटङ्कमध्य-मध्यासीनेषु प्रासादपारावतेषु वैषयिकसुखानुरवैकभूमिर्विभावरी बभूव वितस्तार च वेनराज्यमिव द्विजप्रचारहरं दुष्प्रभुप्रभुत्वमिवोच्चनीचविवेकविधुरकर्णीसुतचरितमिव चोरोपयुक्तं भार्गवमन्त्रबलमिवासुरसामर्थ्यप्रदं खलसेवनमिवाशानाशकमन्ध-ङ्करणमतितारकामसादकं मुष्टिग्राह्यमप्यपरिमेयं पांशुपटलमिव स्मरसैन्यस्य चक्रवाकवि-घटनजन्यमयश इव वेधसो नीलनिवसनमिव निशाभिसारिकाया निर्वाण-विभावसूनां काष्ठानामिङ्गालकूटमिव विरहवैश्वानरदग्धानां विरहितृणानां भस्मराशिरिव तरुणत-मालनीलतमं तमः ।

किं काकोलकुलैर्बलादविरलैराकाशमात्रं चितं
रोदस्योः किमु कोपि कज्जलजलैर्मध्यं समक्षालयत् ।
कालिन्दी ववृधे नु सञ्जिगमिषुर्वाटं वियद्गं मया
पातालात् सममुत्थितो नु फणिनां फूत्कारधूमोत्करः ।।१५।
रज्जुर्भुजङ्गमभयं विततार दूराद्

---

१. चीकारिणीषु । २. निशानटा, ३. जल्यांक । ४. विरसाखभिसारिकासु ।

भीरोर्जनस्य मनुजोऽपि च भूतभीतिम् ।
पाणिन्धमेऽध्वनि रसादभिसारिकाणां
स्थाणुः स्थितोऽपि पुरुषस्य चकार शङ्काम् ।।१६।
एकैकमुस्त्रं प्रति सद्म सूर्यो नूनं प्रवत्स्यन् व्यतरद् विभज्य ।
दीपाभिधेयैर्गृहमेधिनां न क्रियास्तमो लोपयितुं शशाक[१] ।।१७।
स्नेहेन सम्पूर्य परीक्ष्य पात्रं निनाय यत्नात् पदमुन्नतं यः ।
दशासु सर्वासु न तस्य किञ्चित् तेजः क्षयो न क्वचिदप्रकाशः ।।१८।
उद्दध्रे सपदि नु कालधातुवादी
सन्ध्याग्नेरभिनवक्लृप्तरूप्यखण्डान् ।
किं व्योम्नो रजनिमुदीक्ष्य पूर्वरागा-
दुद्भूताः श्रमजलबिन्दवः समन्तात् ।।१९।
आनाये तिमिरमये नभस्तडागे
प्रक्षिप्ते सुमहति कालधीवरेण ।
किं बद्धः शफरगणो महानुताहो
ज्योतींषि स्फुटतरभानुभाञ्ज्यराजन्[२] ।।२०।

युग्मम्

प्रादुर्बभूवुः सन्त्येव नक्षत्राणि समन्ततः ।
दर्दुराणां कुलानीव तमसा नववारिणा ।।२१।
उन्निद्रतारकं व्योम तमोजालमलीमसम् ।
अहसत् फुल्लकुमुदं शैवालशबलं सरः ।।२२।
विशालान्यपि नेत्राणि नृणामफलतामयुः ।
प्रतीपभागधेयानां पौरुषाणीव सर्वशः ।।२३।
समन्तात् सूर्यमणयो निष्ठीवन्ति स्मयं दिनम् ।
स एवागत्य जज्वाल जातवेदा वियोगिषु ।।२४।
सङ्केतकुञ्जभाजां चिरं प्रणयिनां प्रियतमासु ।
सन्देशमन्धकारो झिल्लीरुतकैतवादूचे ।।२५।
अतिकातरदृष्टिर्निर्निमेषं मिषतामेव रथाङ्गसञ्ज्ञकानाम् ।

---

१. शशाकः । २. -भानुभोज्यराजन् ।

मिथुनेषु बभूव वेपितानां सहसा हन्त वियोगवज्रपातः ।।२६।

आलोकेन ततः प्राची स्तोकेन समसृज्यत ।
काली कलिन्दकन्येव गङ्गा प्रथमपाथसा ।।२७।

कालकेसरिकराग्रदारितादन्धकारकरिकुम्भतश्च्युतम् ।
मौक्तिकं तदनु लोहितारुणं जन्म वैरिदिशि दृश्यतामगात् ।।२८।

अथोदयगिरिगुहागृहारब्धविद्याधरनितम्बिनीनिधुवनप्रदीपैरुद्दण्डचण्डकिरण-कदर्थीकृतचकोरनिकरजीवातुभिः कुमुदकाननप्रबोधविद्यावैतालिकैर्मुग्धमानिनीमनोभव[1]-रसोपदेशदेशिकैः कमलवनविशृङ्खलवितन्यमानकमलाविलासबद्धमत्सरैः करैर्मलिनमम्बरं प्रक्षालयन् प्रादुरासीत् सुनासीरदिक्कामिनीकपोलोपधानद्युतिं दधानः क्षीरोदसारसर्वस्वमत्रिनेत्रनिष्ठ्यूतनिरतिशयब्रह्मवर्चसपरीवाहः सुधांशुः—

यैः पाथोनिधिगर्भतः समुदितं वेलावनालीषु यैः
सुप्तं किञ्चन पूर्वपर्वतग्रहाक्रोडेषु यैः क्रीडितम् ।
[2]तैर्दुर्लङ्घनजाङ्घिलैर्विधुकरैस्तारुण्यलीलाधरै-
राश्लिष्टाः ककुभस्तमो विदलितं विश्वं श्रिया भूषितम् ।।२९।

कर्पूरच्छुरिता इवान्धकरिणो रङ्गानुषङ्गान्मिल-
द्भस्मोद्धूलनपाण्डुरा इव सुधापङ्केन लिप्ता इव ।
कल्लोलैः सममुक्षिता इव परं पीयूषपाथोनिधे-
र्नेत्रानन्ददुहः[3] सुखाय जगतो जाता समन्ताद् दिशि ।।३०।

नक्षत्राणि विलीय किंस्विदभितो व्योमाङ्गने प्रासरन्
कामं कामदुघा किमु स्वपयसा[4] पूरैर्नभोऽपूरयन् ।
आपूर्णं ननु राजहंसनिवहैर्द्यावापृथिव्यन्तरं
मुक्ता केतककुन्दकैरवरुचिः किं पप्रसे चन्द्रिका ।।३१।

यन्त्रे चेन्नवमौक्तिकानि कुशलो यत्नेन निष्पीडये-
देतस्माद् यदि बद्धधारमसृणः स्यन्देत सान्द्रो द्रवः ।
गाढं द्यौश्च दिशश्च कूर्चकशतैस्तेनैव लिप्ता यदि
ज्योत्स्नासम्बलनोदितां श्रियममूर्मन्ये तदा प्राप्नुयुः ।।३२।

१. मनोमवरसो- । २. तैद्युलंघन । ३. नेत्रानन्ददुहसुखाय । ४. रव- ।

हीरक्षोदमिवाकिरन् प्रतिदिशं पीयूषदिग्धैः करैः
रञ्जन् विश्वविलोचनानि जगतीसन्तापमुन्मूलयन् ।
देवो नोदयते स्म कैरवसुहृद् यावद्धि काण्डीं दिवं
जीवञ्जीवकुलस्य तावदभवच्चित्तेषु न प्रत्ययः ।।३३।

चूँचूँचञ्चलनाय गौरगरुतां क्षीरस्यतां याऽभव-
न्नेतव्या कलशैः किलाञ्जलिपुटैरास्वादनीया जनैः ।
आकण्ठं परिपीयतां शशिरुचं साण्डां चकोराश्चिरा-
दङ्गारा [1]न गिरं नु दीपनवटीराध्मानदोषातुराः ।।३४।

तारालेशान् व्योमपात्रे प्रकीर्णान्
पुञ्जीकृत्योद्यत्करोल्लासनेन ।
वेला गोपी कापि गोलं व्यधत्त[2]
ज्योत्स्नातक्रे चन्द्रहैयङ्गवीनम् ।।३५।

इन्दौ कन्दलितद्युतावुडुगणे लुप्ते च मन्दौजसि
ज्योत्स्नातुन्दिलतारकावलयिता द्यौर्दिद्युते निर्भरम् ।
सामन्तेषु समन्ततो निजनिजस्थानं गतेषु क्रमाद्
भूमीभर्तरि भूषिते कतिपयैर्गोष्ठीव नर्मप्रियैः ।।३६।

यमन्धकारावकरं समुह्यन्
पपात यद्दीधितिमार्जनीभिः ।
व्योमाङ्गनादिन्दुरसौ तरूणां
छायापदेन प्रथितस्तलेषु ।।३७।

[3]यदन्धकारप्रतिमल्लमुल्लसन्
बलावलेपादुरसाऽभ्यतीतडत् ।
नियुद्धरङ्गे विधुरस्य लक्षणं
किणं किमेणं गणयन्ति सूरयः ।।३८।

अङ्कं कश्चिदुदाजहार जलधेः पङ्कं चकारापरो
[4]मन्थानाचलघर्षणस्य च किणं यः कोऽप्यसिद्धान्तयत् ।

---

१. –नगिरन्नुदीयनवटी- २. व्यधत । ३. पदं धकार- ४. मन्थानाचलघर्षणकिणं ।

श्लेष्मश्लिष्टमुरस्तुषारवपुषां कस्तूरिकाकर्दमैः
शैत्यस्यायनपापलिप्तमिति तु प्रायो धियं धावति ।।३९।

न लाञ्छनं हिमकिरणस्य मण्डले
हलाहलो नियतमनेन सञ्चितः ।
वियोगिनो विशसितुमेतदाप्लुतै-
र्विसृत्वरैः शिवशिव सर्वतः करैः ।।४०।

श्रिया महत्या सम्पूर्णः स्फाटिकः कलशः शशी ।
कलङ्कः कृष्णसर्पोऽत्र कुण्डलीभूय रक्षति ।।४१।

कर्पूरपिण्डं शीतांशुर्ध्रुवं व्योमविलासिनः ।
[१]इन्दीवरकुलं शङ्के कलङ्कं तत्र सङ्गतम् ।।४२।

अवलम्ब्य शीतकिरणस्य करान्निबिरीसतामुपगता[२]वियतः ।
किमवातरन्नुडुगणाः सरसि स्फुटकैरवप्रकरकैतवतः ।।४३।

निजनन्दनमुदयमारूढमुदन्वानुदारगद्गदगभीरध्वनिरुन्नमय्योर्मिबाहुमालिङ्गितुमाजुहावेव । चन्द्रं चन्द्रकान्तश्च मिहिरमहातपग्लानिमलिनो दूरदुरवापजनसमागमानन्दसन्दोहसन्दर्शिताश्रुबिन्दुरिवेन्दुकरपरीरम्भादस्यन्दत । अनिरुद्धस्तु कथंकथमपि समाप्तसन्ध्याक्रियः सर्वतो विसृत्वरेण चन्द्रातपेन तप्यमानो मानवत्येव निद्रयानभिगतो मनोऽनुकूलाभिः कलावतीभिः प्रस्तूयमानेन सङ्गीतकौतुकेन निशीथिनीं नेतुकामो वासभवनमशिश्रियत् ।

अथ कैरविणीबन्धोः किरणैरात्मसात्कृते ।
[३]ओजयामास हृदये कामिनां मकरध्वजः ।।४४।

नवविचकिलमालाः स्निग्धपाटीरपङ्कः
परिणतिरमणीया पङ्कजाद्या परिस्रुत् ।
मृदुमलयसमीरो निःशलाकाश्च सौधा
मदनसमरशूरा नावहन्ति स्म यूनः ।।४५।

सैरन्ध्र्यस्तदनु विभूषयाम्बभूवुः
स्मेरास्याः स्मरसरसाः सरोरुहाक्षीः ।
अङ्गानामकृषत भूषणान्यभिख्या-
मङ्गैश्च [४]स्वयमलभन्त कान्तिमासाम् ।।४६।

१. इंदिंदिर- । २. निबिरीसतामित्यस्य निबिडतामित्यर्थः । ३. ओजायामास । ४. स्वयमलभंतं ।

यो हि धूपविधिषु प्रमदानां भूषणेषु वसनेषु विलम्बः ।
नासहिष्ट तमलङ्घ्यनिदेशो मन्मथः प्रियसमागमशंसी ।।४७।
अङ्गमङ्गमकरोदवगूढं यत्सखीमणिविभूषणदीप्त्या ।
भाविनि स्मरमृधे मदिराक्षीमुद्यतां न समवर्मयदेतत् ।।४८।
किङ्किणीकलरवैर्दयितानामाजुहाव दयिताननुवेलम् ।
कान्तिभिर्हृदि मनोरथविज्ञा [1]हारयष्टिरपि भूरि जहास ।।४९।
अस्तु बन्धनविधिर्बहुबुद्ध्या मुच्यतेऽनुपदमेव मया तु ।
किं विचिन्त्य कबरीति सुकेश्या मल्लिमाल्यमिषतो विजहास ।।५०।
[2]जातरूपरुचिकाञ्चनभूषां निष्फलामिव तनौ न ततान ।
नासिकाभरणमौक्तिकमेकं [3]किन्नु कान्तिमतुलां वितितार ।।५१।
सम्भ्रमेण यदभूदबलाया गण्डसीम्नि मकराङ्कुरशेषः ।
आगतस्य दयितस्य पुपूरे तेन रागजलधिर्विषमेण ।।५२।
प्रार्थनाःसमतिवृत्त्य सखीनां भूषणानि जगृहे न नवोढा ।
मानतः किमपि रूक्षदृशोऽस्याः शेष एव बहु भूषणमासीत् ।।५३।
वर्ण्यतां कथमहो तरुणानामुल्लसन्मनसि रागविवर्त्तः ।
योषितां चरणयावकयोगाद् रागिणो यदभवन् रतिसौधाः ।।५४।
अञ्जनं नयनयोरबलानां[4] रञ्जनं प्रियदृशोर्वितताान ।
गञ्जनं व्यधित भूरि सपत्न्याः खञ्जनं मलिनमावहदुच्चैः ।।५५।
निर्गता भवनतः कृतरागाः केलिकुञ्जमनवाप्य रमण्यः ।
अर्द्धवर्त्मनि विधोरुदयेन व्रीडभीतिविधुरेषु ममज्जुः ।।५६।
प्रौढतां गतवता हिमधाम्ना नाशितानि बत कुञ्जतमांसि ।
दीर्घमुष्णमबलापरितापादश्वसीदिति विचिन्त्य च काचित् ।।५७।
केलिकुञ्जमभिसृत्य कथञ्चित् पीवरस्तननितम्बभरार्ता ।
शून्यमेनमवलोक्य कृशाङ्गी श्वासमर्मरितमाल्यमताम्यत् ।।५८।
लक्ष्यतां कृशतया कुसुमेषोः पत्रिणामपि कथञ्चिदुप्यताम्[5] ।
जागरेण गणरात्रमपोढा नास्पृशद् विरहिणीं बत निद्रा ।।५९।

---

१. हारमष्टि- २. जातरूपरूचिकाचनभूषां । ३. किंतु । ४. खलानां । ५. कथञ्चिदुयताम् ।

मोहनोदवसिता नियतीषु प्रेयसीषु मदनोत्सवहेतोः ।
स्वस्तिवाचनमिव प्रतिसौधं नूपुरैः पटु रणद्भिरकारि ।।६०।
स्तनजघननितम्बगौरवार्त्ता मृदुचरणास्तनुमध्यमा मृगाक्षीः ।
अतिलघुगजगामिनीरनङ्गो[1] न्यधित कथं नु मनस्यणौ प्रियाणाम् ।।६१।
स्फारितैस्तरलतारमुपेतैः सङ्कुचद्भिरथ सस्मितमाशु ।
लोचनैर्मृगदृशामभिषिक्तः कामिषु प्रभुरभूत् कुसुमेषुः ।।६२।
उत्सुकाविव विलोकितुमद्धा कान्तमन्तरतिवेलमुदग्नौ ।
बन्धनं सपदि कञ्चुलिकायाः सुभ्रुवामुरसिजौ बिभिदाते ।।६३।
ग्राहिता सहचरीभिरनल्पं धाष्टर्यमागतवतो दयितस्य ।
यत्पुरःप्रकृतिमाप्य[2] नवोढा तेन भूरिमदनो विजहास ।।६४।
मानिनीमनुनयन् हृदयेशो रागमाप्य न परं स्वयमेव ।
पादयोर्निपततो नखकान्त्या किं नु[3] तस्य नवमौलिमणिश्च ।।६५।
स्वप्नचारुसुदिनं मम भद्रे वल्लभः [4]सहचरीमिदमूचे ।
लङ्घयन्त्यनुनयान् बहुरूपान् भीतभीतमिव भीरुरपश्यत् ।।६६।
शेषरूक्षनयनं मदिराक्ष्या वीक्षितोऽपि विहितासनशङ्कः[5] ।
[6]कश्चिदञ्चलमधोजमहेलं निर्धुतोऽपि निगदन् पटुचाटु ।।६७।
वक्रिमाणमितरेव न जाने रोचते खलु न मे बहुभूषा ।
एवमप्यसि कथं वशगो मे प्राणनाथमिति काचिदुवाच ।।६८।
पादयोरवनतो हृदयेशश्चाटुगर्भशपथानपि कुर्वन् ।
हा मया किमवमत्य विसृष्टः क्रूरयेति बहु काप्यनुशिश्ये ।।६९।
वारितः किमु सुहृद्भिरकाण्डे मोहितः प्रमदया नु कदाचित् ।
नागतः किमिति जीवितनाथश्चिन्तयेति विषसाद च काचित् ।।७०।
पृष्ठतः समुपगम्य सपत्न्या नायकेन पिदधेऽक्षियुगं[7] यत् ।
स्मेरमेनमपवर्जितशङ्कं प्रेयसी तदपरा परिरेभे ।।७१।

---

१. रतंगो । २. प्रकृतिमाय । ३. किंतु । ४. सहचारिमिदमूचे । ५. विहिसनातशङ्कः । ६. कश्चिदंचलमधजसहेलं । ७. ऽक्षिप्रगं ।

वारुणीतरलये तरुणानां किन्न [१]चित्तमधिकं मधुरिम्णा ।
यत्सुधांशुरपि साधुरुचिस्तां सस्वदे किरणनालविलम्बी ।।७२।
नीलपद्मपिहितेषु निलीनाः शातकुम्भचषकेषु मिलिन्दाः ।
कापिशायनरसादचलन्तो गुञ्जितैः कमपि भेदमवापुः ।।७३।
[२]स्वादुङ्कारं कमलमुखीनां वक्त्रासङ्गान्मधु मधुवारैः ।
निष्पीयन्ते मदनमृधे स्म प्रत्यासन्ने ननु युवयोधाः ।।७४।
मुग्धस्त्रीणां भयमपनिन्ये मन्युं प्राज्यं कुपितवतीनाम् ।
प्रीतिं चक्रे किल तरुणानां दूतीकृत्यं व्यतनुत हाला ।।७५।
आश्लिष्यन्ती स्तनभरनम्रा मत्ता काचिद् दयितमुपेतम् ।
इर्ष्यारोषारुणनयनाया मोहं चक्रे मनसि सपत्न्याः ।।७६।
वचनैः स्खलिताक्षरैर्मुहुर्नयनैः कोकनदानुकारिभिः ।
सुदृशो हसितैरकारणैस्तरुणानामहरन्मनः परम् ।।७७।
हृदये निहितान्यवीवदत् सुरहस्यानि मदो यदुच्चकैः ।
अवकाशमसौ [३]व्यधत्त तत् स्वनिवासाय चिराय कामिषु ।।७८।
अनहंममतावगाहिनी परमानन्दसमुद्रसम्प्लुता ।
अभवत् स्थितिरञ्जसैव सा सुरपा यां स्पृहयन्ति विद्यया ।।७९।
सस्मितैः प्रलपितैरतिवेलं घूर्णितैर्नयनकोकनदैश्च ।
उद्धटैः कुसुमबाणचरित्रैर्भूषिता मदिरया मृगनेत्राः ।।८०।
अम्बराणि मणयश्च सुगन्धा यौवनं चतुरता च मदश्च ।
उत्तरोत्तरमभूदबलानां प्रेयसां हृदयबन्धनविद्या ।।८१।
उन्नतस्तनभरेण निपीड्य व्रीडमानमपहाय कुतश्चित् ।
न स्वयं न जगृहुर्हृदयेशानाशु पीतमदिरा[५] मदिराक्ष्यः ।।८२।
शीधुगन्धसुरभीणि वधूनामाननानि परिचुम्ब्य युवानः ।
यं मदं द्रुतमुदारमवापुस्तं निपीय न मुहुर्मदनीयम् ।।८३।

---

१. चितमधिकं । २. स्वादुकारं । ३. व्यधत । ४. सुरयायां । ५. नाशुपीतमदिराक्ष्यः ।

आवयोरुचितमन्तरमेतत् किं हृदीति निगदन् हृदयेशः ।
व्रीडयादरधृतां नववध्वाः कञ्चुकीं कुचगतां विचकर्ष ।।८४।
अपहृतं कञ्चुलिकानां महिलानां मन्मथस्तूर्णम् ।
रोमाञ्चकञ्चुकालीमुदञ्चयामास[1] कुचसीम्नि ।।८५।
जातरूपकलशाविव कश्चित् सम्भ्रमादुरसिजौ दयितायाः ।
धारयन्नुरसि गाढमुदारौ शीधुसंमदनदीं[2] किं जगाहे ।।८६।
विदश्य बिम्बाधरमङ्गनायाः कपोलमाचुम्बितुमीहमानः ।
प्रियो विदष्टः प्रिययाधरे यत् स्मराय सा प्रौढिररोचतालम् ।।८७।
उन्नते स्तनपदे चिरमुच्चैर्यः स्थितः किल करो दयितस्य ।
भ्रंशमेत्य स ततःकिमु मग्नो ग्लानितः सुतनुनाभिसरस्याम् ।।८८।
पीवरस्तनसुहृत् प्रियपाणिर्नोदरे न सुदृशश्च विलग्ने ।
स्थैर्यमाप बत किन्तु नितम्बे भ्राम्यतो भवति कुत्रचिदिष्टम् ।।८९।
दर्शितभ्रुकुटिनर्त्तितनेत्रं हुँ किमेतदिति जल्पितमासाम् ।
नीविविश्लथनलोलकराणां प्रेयसामनुमतिर्न बभूव ।।९०।
किं किमेतदिति नेति न नेति प्रार्थनाश्च शपथाश्च सरोषाः ।
स्मेरतापि च करग्रहणं च प्रौढिमेव मदनस्य वितेनुः ।।९१।
अपहृतवसनं सरोरुहाक्ष्याः पुलिनमिवालघु कामिनो विनोदम् ।
जघनमदित दुर्गतस्य दैवाद् रहसि निधानमिवापिधानमाप्तम् ।।९२।
प्रौढमन्मथरसाभिनिवेशादाकुलत्वमतिमात्रमुपेतैः ।
नूपुरैश्चिरमकारि समन्तात् पञ्चबाणविजयस्तुतिघोषः ।।९३।
भग्नकङ्कणमपाकृतलोलन्मेखलागुणमुदञ्चितदाम ।
तारसीत्कृतमुदारविमर्दश्रान्तकामिसुरतं चिरमासीत् ।।९४।
प्रार्थिता सचरणप्रणिपातं प्रेयसी प्रियतमेन कथञ्चित् ।
लोलकुन्तलगलन्मणिकूजत्काञ्चिकापि विपरीतमरंस्त ।।९५।
[3]स्वेदबिन्दुनिचिताननपद्माः श्वाससन्ततिकिरो हरिणाक्ष्यः ।
ह्रीगृहीतवसनाः सविलासप्रेक्षितैर्मुदमदुर्दयितानाम् ।।९६।

---

१. कञ्चुकाली मुदं चया मास । २. साधुसंमदनदीं किजगाहे । ३. श्वेद-

मृदुभुजलतासङ्गादङ्गे किरन्नमृतच्छटा-
मुरसिजपरीरम्भ[1]-स्फूर्जत्तनूरुहसन्ततीन् ।
अतनुत परं कान्तानुद्वेलरागमहोदधीन्
सुरतविरतौ कण्ठाश्लेषः कुरङ्गदृशां पुनः ।।९७।

एवमनुगेहमुल्लसति मदनकेलिकौतुके सङ्कल्पसन्निहितप्रियतमासमागमैकशरणेषु विरहिजनेषु निद्राणपथिकासु पटुकपाटपिहितेषु गोपुरेषु तारहुङ्कारमुखरेषु प्रहरिकेषु कथ्यमानपृथुकथेषु पार्थिवभवनेषु लब्धावकाशेषु रात्रिमटेषु जाते निःसम्पातसमये समारूढप्रियानुरागोऽनिरुद्धः सङ्गीतमुपरराम विभावयाम्बभूव चेदम् ।

अस्या नाभिनिवेशिता क्व मनसः शिक्षा क्व तादृक् सतां
सा[2]निष्कारणवल्लभा सुनयना दोषैकदृग् दुर्जनः ।
सम्पद्येत मनोरथो विधिवशात् स्वप्ने कुतः सत्यता
क्षन्तव्यं भगवन् मनोजदयिते किन्नाम नालिङ्गसि ।।९८।

स्वाप्तः प्रपञ्चो नियतं जीवोपादनको यदि ।
अलं तापेन मे जीव किन्न [3]प्रादुष्करोति ताम् ।।९९।

अहो नु खलु भो जीव दाननियमेन पर्यटन्
प्राणिनां स तु विशेषदुर्लभः।
भामिनीमुपनयन् करोति यः
कोऽपि दासमनिरुद्धमञ्जसा ।।१००।

एवमयमाशंसमानो मनाङ् निद्रया निमीलिताक्ष इव निर्मुक्तानन्तभोगभासुरं शयनमशिश्रियत् । क्षणान्तरादुन्निद्रनयनस्त्वलौकिकेन परिच्छदेन विभ्राजमानामभिनव-यौवनारम्भरमणीयामनवराध्यर्गन्धेन माल्येनालङ्कृतामनुपमेयरूपऋद्धिमम्लानकर्णि-कारगौरीमुदारगम्भीराकृतितयैव स्वस्यसकलकलाकौशलं कथयन्ती नयनवदनविशेषे-णैव च परां प्रतिभामभिदधानामविदूरवर्त्तिनीमवलोकयामास ।

आकस्मिकाद्भुतविलोकनोल्लसितचित्तश्च[4] किं पुनरयं स्वप्न उताहो मोहविस्फूर्जितमुत मनोभवस्येन्द्रजालं विसंवादिनी किल रूपसम्पदिति न सा मम सरोरुहाक्षी । दुष्करो निशीथे विशेषदुर्गमानां कक्षाणामतिक्रम इति च नेतरस्याः सम्भवो नूनमेष दयालोर्देवताविशेषस्याविर्भावो भवतु तावदेनां निजाभिमतसिद्धिम-नुरुध्यानुकूलयामीति चिन्तयन् सप्रश्रयमवोचत् । स्वागतमपूर्वस्यातिथेःको नाम

---

१. परिरम्भ-स्फूर्जतनू- । २. निःकारण- । ३. प्रादुष्करो विताम् ।

देशो निर्गतिन्दिरस्य सिन्धोः साधर्म्यमध्यरोपि । सत्यपि सर्वसाधुसाधारणे परानुग्रहरूपे प्रयोजने विशेषतस्तज्जिज्ञासमानं मनःस्वचापलत्वमभिव्यनक्ति दर्शनान्निरतिशयमानन्दमाविन्दतोश्चक्षुषोरीर्ष्यया सूक्तिसुधापिपासुनी श्रवसी स्थाने चाञ्चल्यमारचयतः । एवमभिधाय जोषमासीने ऽनिरुद्धे स्मितमनोहरं सूनृताभिर्वाग्भिः सा वाग्मिनी व्याहर्तुमुपाक्रमत ।

आतिथेयोऽसि सुभगसौजन्यस्य परां कोटिमारूढः केन केन कुतः कुतो न समागन्तुमभिलष्यसे, [1]संबन्धं कुर्वन्त्यपूर्वमपि जनं सुधास्वादूनि तव वचांसि तद्विशेषेण पृच्छ्यसे । अपि सौम्य, सुखयन्ति भवन्तमेते सहकारशिखरमुखरकोकिलालापललिता मन्दमलयानिलोल्लाससुभगम्भविष्णवो दिवसाः । अपि नाम सुखाकुर्वन्ति विमलचन्द्रिकावदाता दलितमुग्धमानिनीमनोग्रन्थयो रजन्यः । अपि कच्चिन्मनोऽभिलषितस्यजनस्यवियोगेन विषयेषु प्रीतिमायान्ति करणानि । अप्यङ्ग सङ्गीतमेतत् सुन्दरीभिर्यथाशास्त्राचरितमायुष्मन्तमतृपत् । यदनुपयुक्तं जैवातृकेण तदिदानीं विजप्यमानमाभिमुख्येनानुगृहीतमस्तु । भद्रमुख, भवदवलोकनं त्रिलोकीगाहनश्रमस्य फलमिति संक्षेपतस्तावदवधेहि । अस्यैव तु प्रपञ्चमादितो वर्ण्यमानमाकर्णय ।

अस्ति समस्तवीरव्रतशालिनां मौलिमालाभिरर्च्यमानमखण्डितानुभावमाकरः पुरुषधौरेय मणीनां हिरण्यकशिपुप्रधानमसुराणां कुलम् ।

सिन्धून् क्षोभयितुं धरां चलयितुं निष्पेष्टुमुर्वीधरान्
[2]धर्तुं बिम्बमहर्पतेरपि करैराहर्तुमाशागजान् ।
संस्थानं जगतस्तथान्यथयितुं लोकत्रयं शासितुं
शक्यन्तः कति नाभवन्निह महातेजस्विनः क्षोणिपाः ।।१०१।

तस्मिन् निजभुजवीर्यविजितसुरसमृद्धिरुत [3]प्रतापतनुतापितप्रतीपहृत्सरोजस्त्रैलोक्यलङ्घनजङ्घालयशा निगमपथपान्थः स्थूललक्ष्यः स्थिरप्रकृतिदारधिषणस्त्राता शरणागतानां दाता मनोरथानां [4]कर्ता महामखानां हर्ता परव्यसनानां महाराजो बलिर्नाम बभूव ।

पलायितैर्यतो देवैर्निःश्वसद्भिः शनैः शनैः ।
रत्नसानोरसेव्यन्त पुलिन्दैरिव कन्दराः[5] ।।१०२।

अपि च

आरूढं पुरुहूतस्य पदे[6]पौरुषनिर्जिते ।

---

१. बन्ध कुर्वन्त्यपूर्वमपि । २. धर्तुंविवमर्ध्यतेः । ३. प्रतापतन-। ४. कतमिहामखानां । ५. कन्दशः । ६. पौरुप ।

गुणाकृष्टा भगवती श्रीः स्वयं यमशिश्रियत् ।।१०३।

विश्रुतैव चास्य वदान्यता जगत्सु यस्य लक्ष्मीपतिरपि लघिमानमवलम्ब्य वनीयकत्वमभजत् ।

व्यसनानि शशादनेषु तस्थुः यदविद्यासु च दीर्घसूत्रतासीत् ।
रमणीषु बभूव भीरुशब्दो न जगत्पालिनि तत्र दैत्यराजे ।।१०४।

अपि च

निगमपथमुचो मृगा बभूवुर्वृषविहतिं वृषदंशका वितेनुः ।
अवति वसुमतीं बलौ विजज्ञे हरिदृशामधरे क्षतं द्विजानाम् ।।१०५।

संवर्त्ताटोपकोपप्रखरकरमहाद्वादशदित्यतेजाः[१]
सर्वोर्वीपालमौलिस्फुरदमलमणिज्योतिरुद्योतिताङ्घ्रिः ।
बाहुव्यापारविष्वग्विषमशिलकुलग्रावगीर्वाणगीतो
बाणो नामास्य सूनुर्जयति दशदिशाहिण्डिकोदण्डशब्दः ।।१०६।

मुक्तेनापि यथाबलं बलविधा वज्रेण निर्वृण्वतो
वैरिश्रीचिकुरग्रहग्रहिलताभाजः सहस्रं भुजान् ।
भूमीभारभृतः सहस्रशिरसोऽनन्तस्य विश्रान्तये
यो धत्ते नियतं [२]निराविलबलं बाणः स किं वर्ण्यताम् ।।१०७।

स किल बाहुलेयस्य विभूतिमवलोक्य कथमिव कक्षामिमामहमपि गाहेयपुत्रीभूय शिवयोरिति स्पृहयालुर्बहुसहस्रं [३]समा दुस्तपं तपस्तेपे । अथ प्रसद्य वरं विश्राणयति करुणावरुणालये भगवति शूलपाणौ दितिजराजः स्वाभिलषितमवृणोत् ।

भूयासं भवतोः पुत्रः परं [४]वात्सल्यभाजनम् ।
न मे मुच्याश्च नगरं नगराजसुतासखः ।।१०८।

किं हि नाम महतामदेयं यतो भगवान् भूतपतिस्तथा प्रतिश्रुत्य सपरिवारो नगरमस्य निटिलतटमृगाङ्कचन्द्रिकाभिर्निरन्तरमभूषयत् । अस्ति च खण्डपरशोर्निदेशेन महासेनजन्मपूते प्रदेशे निजभुजावर्जितसुरसार्थसेवितस्य तस्य विश्वकर्मनिर्मितममरावती-प्रतीकाशं[५] शोणितपुरं नाम नगरम् । तत्र निवसतः सुरासुरकिरीटकोटिरत्न-रञ्जितप्रपदस्य वैश्रवणस्पृहणीयसम्पदो महेन्द्रमहनीयनिदेशस्य दनुजपतेर्बहुरभिलाषैरुषा नाम कन्यका समजायत ।

१. 'महा' इति मातृकायां नास्ति । २. निर्णलखलो । ३. समादुस्तयं तयस्तेये । ४. वात्सप्ल- । ५. प्रतीशयानं ।

तामनवद्यलक्षणामनिन्दिताङ्गीमुदारभागधेयां नवोदितामिन्दुलेखामिवात्मजां पश्यतोर्दम्पत्योः प्रीतिरतितरामजृम्भत । क्षणं मणिदोलासु क्षणं मातुरुत्सङ्गे क्षणं धात्रीस्तनसीमनि [१]क्षणमप्सरसामङ्कादङ्कं विलुण्ठती बालकल्पलतेव दिनन्दिनमेधमाना कामपि कान्तिमुद्वमन्ती पञ्चालिकादिकेलिभिः कमपि कालं बाल्यमियमनुबभूव । ततः प्रतिषिद्धपुंदर्शना राजकन्योचिताभिः शिक्षाभिर्विनीयमाना नातिचिरात् सकलकलाकौशलमलभत । अथ कलिकेव विकासोन्मुखी प्रतिक्षणोपचीयमानसुषमा शैशवशेषसुभगम्भविष्णुभिरासन्नतरुणिकटाक्षितैरवयवैर्गीतिरिव रागद्वयसङ्करेण मधुरिमविशेषमुद्गिरन्ती नवलब्धलज्जालेशमन्थरमचेष्टत । सेवेव सन्निहितफलोदया विद्येव समधिगम्यमानरहस्या पुरश्चर्येव नेदिष्ठमन्त्रसिद्धिः शरदिव पचेलिमगन्धशालिसम्पन्निरतिशयानन्दहेतुरतिमात्रमालीजनस्य लोचनोल्लासमसृजत् ।

बिसिनीपलाशगहनादुदित्वरी
कलिकेव काञ्चनसरोरुहः शुचिः ।
चललोचनालिरुदिताथ शैशवाद्
विरराज [२]सुतनुरनूनसौरभा ।।१०९।

स्मितसुभगमुखी सलीललोलन्नयनसरोरुहसम्पद्विलासा ।
विकसितशिशुकेलिलालसा सा समधिकशीलवती न कं धिनोति ।।११०।

कपोलयोः काचन गौरतासीद् दृशोरभूच्चञ्चलतावशेषः ।
अजायत श्रीरतुला मुखेन्दोर्वक्षोजयोरभ्युदियाय युग्मम् ।।१११।

मध्योऽदरिद्रादुदरेण सार्धं नितम्बबिम्बोऽपि च पर्यणह्यत् ।
आपूर्यतास्या जघनं समन्तादन्यैव साऽसृज्यत यौवनेन ।।११२।
युग्मम्

अस्ति कूलङ्कषः सौम्य तस्या लावण्यवारिधिः ।
अङ्गानि यत्र रत्नानि राघवो मीनकेतनः ।।११३।

नमन्नवाम्भोदरुचः कचास्ते कलिन्दकन्यालहरीसगोत्राः ।
तस्याः स्पृशन्तो धरणीं विमुक्ता नान्योन्यमन्तः कुटिलाः सजन्ति ।।११४।

बालाम्बुदार्द्धस्थगितं हिमांशुं प्रत्येमि तस्या ललितं ललाटम् ।
[३]बन्दीकृते वेद्मि सुधांशुबिम्बे[४] भ्रुवौ तदीये तिमिरस्य रेखे ।।११५।

नासां विलोक्यासुरराजपुत्र्यास्तिलप्रसूनस्य रुचिं वहन्तीम् ।
कर्णारविन्दद्युतिलुण्ठनाय प्रायो दृशौ कर्णपथं प्रयाते ।।११६।

---

१. क्षणमक्षरसायंकादक बिलु- । २. ततनु-। ३. वदीकृते । ४. विवे ।

अम्भोरुहे वा नवखञ्जनौ वा गर्भच्छदौ वा किमु केतकस्य।
अस्या दृशौ नेदमिदं तु तत्त्वं स्मरामि पुत्र्यौ जगतो जयाय ।।११७।
[1]कर्णौ तदीयौ धनुषोः स्मरस्य ध्रुवं गुणौ पद्मशरौ [2]वहन्तौ ।
न [3]तत्कपोलच्छलतो विधात्रा तस्यैव सृष्टौ मणिदर्पणौ किम् ।।११८।
[4]लोकत्रयं लोभयितुं मधूनि न्यस्तानि सूक्तेः कपटादिहेति ।
रेखात्रयाङ्कस्तपनीयकम्बोः सनाभिरस्या न न भाति कण्ठः ।।११९।
सरस्वती सन्ततवासलीलालब्धस्फुरद्रूपविभूषतो न ।
स्पर्द्धेत किन्नाम जडस्तपस्वी तस्याः प्रबालोऽधरपल्लवेन ।।१२०।
शशी सरोजे कलयन्ननङ्कस्तारावलीमन्तरपि प्रगृह्णन् ।
विद्योततेऽग्रेसरलोहिताङ्गः स्वर्भानुना स्वानुचरीकृतेन ।।१२१।
मृणाललालित्यनिराकरिष्णू तस्या भुजौ मार्दवसारसृष्टौ ।
करौ किशोर्याः कमलाकराणां कान्तिं घनीकृत्य कृतौ विधात्रा ।।१२२।
[5]हिरण्मयी सा स्मरराजधानी दधात्युरोजौ कलशौ किलोच्चैः।
प्रयस्यते तेन विलोकनोत्कैः [6]परःसहस्रैर्नयनाध्वनीनैः ।।१२३।
कण्ठीरवस्पर्द्धिविलग्नलक्ष्मी रोमावलीं सानुदरा बिभर्ति ।
गोपायितुं नाभिसुधोदपानं किं कृष्णसर्पस्य शिशुं शयानम् ।।१२४।
जम्बूनदीवीचिविलासलोलं बलित्रयं भाति सुमध्यमायाः ।
आभोगमस्या जघनस्य मन्ये सिंहासनं कामधराधवस्य ।।१२५।
ऊरुद्वयं राजति राजपुत्र्याः सुवर्णरम्भारमणीयकान्ति ।
[7]आवासमेतत्स्मरदेवतायाश्चैत्यद्रुमं[8] चेतसि[9] चेतयेऽहम् ।।१२६।
प्रतीहि तस्या विपुलं नितम्बं स्वर्णाचलस्यैव परं नितम्बम् ।
मृत्युञ्जयं जेतुमना मनीषी तपस्यति [10]स्मेरमहास्मरोऽत्र ।।१२७।
कन्दौ [11]तदङ्घ्री सुषमालताया द्युतिं द्विषन्तौ स्थलपङ्कजानाम् ।
[12]नखांशुभिर्नम्रशशाङ्कशोणैरुदङ्कुरौ सौम्य सदा विभातः ।।१२८।
अपत्रपिष्णुः [13]कलहं शशंस तस्या गतं वीक्ष्य विगाहते द्याम् ।
स्तम्बेरमास्तस्य मलिम्लुचाश्चेदालानबद्धाः फलमास्वदन्ते ।।१२९।

इन्दीवरस्य शशिनो बिससञ्चयस्य
स्वर्णाचलस्य करिराजकरस्य सारम् ।

---

१. कर्णो । २. वहनौ । ३. तत्कपौलछलतो । ४. लोकं त्रयं । ५. हिरण्मद्यौ । ६. परः सस्त्रैः । ७. आचास । ८. चैत्यपद्रुमं । ९. चेतसिंचेतयेहम् । १०. स्मेरमहाः । ११. तदंघ्री । १२. नखांव्युभिर्नन्त्र- । १३. कलहंससंस ।

निर्मथ्य निर्मितवता विधिना वधूं तां
विज्ञातृनायकशिरस्सु चिरं चुकूर्दे ।।१३०।
न मालती नापि सिरीषमाला लेखा न पीयूषतनोर्विशाला ।
हैयङ्गवीनं च परं नवीनं न लेशमप्यञ्चति तन्म्रदिम्नः ।।१३१।
हरत्यवयवैस्तमः कनककेतकीकान्तिभिः
किरत्यमृतदीधितेर्दशनचन्द्रिकाभिर्महः ।
स्मितैः क्षिपति सर्वतः सुभग सा सुधाधोरणी
मुखाम्बुरुहसौरभैः [१]सुरभयत्यगारोदरम् ।।१३२।
सा कापि [२]सीमन्तमणी त्रिलोक्याः सौन्दर्यसारस्य परं समष्टिः ।
आनन्दनिष्यन्दझरी क्षणानां मनोभुवः काञ्चनचापयष्टिः[३] ।।१३३।
समाधिसंरुद्धधियो विधातुस्तत्सत्यसङ्कल्पतया व्यलासि ।
जितत्रिलोकीरमणीविशेषा गुणैरुदारैरभवद् यदेषा ।।१३४।
अहो कथङ्कारमुदीरयो गुणान् मृगीदृशोऽस्या ननु वाङ्मयातिगान् ।
तनोति सा कौतुकमद्भुतं दृशोर्विलोकिता शम्बरवैरिशाम्बरी ।।१३५।

एवमियमभिनवयौवनजन्मना रामणीयकेन सकलसुन्दरीमौलिमधिरोपितापि[४] [५]विनयविनताङ्गी शैलराजदुहितरमुपचरितुमन्वहमुपजगाम। तस्याश्च शिशिरकिरणोदयविजृम्भमाणदुग्धसिन्धुकल्लोलशीतलानामतनुवात्सल्यविधेयीकृतानामवलोकितानां बभाज भाजनताम्। एकदा तु सकलनायकशिरोमणिर्भगवानर्द्धेन्दुशेखरः सविधशोभिनि स्वर्णसरोजराजिते सरसि सपरिवारः सलिललीलामनुबुभूषुरवततार।

पदे पदे हिङ्गुलरागरञ्जनं ततः सरोरोधसि कुर्वती ययौ ।
प्रियेण सार्द्धं विजिहीर्षया जलं समं सखीभिर्गिरिराजकन्यका ।।१३६।

गिरिराजकन्यकातः[६] समस्ताप्सरसः प्रमथप्रियतमाश्चाभवन्। शितिकण्ठतस्तु नन्दिभृङ्गिरिटिप्रमुखगणा इति द्वैपक्ष्येण व्यात्युक्षी प्रावर्त्तत। हरिणीदृशां गतिभिर्व्रीडितेव मरालमालापससार। स्तनयुगमवियोगि वीक्ष्येव चक्रवाकचक्रमपजगाम। मुखकमलकान्तिमोहितमिव सरः सञ्चचाल।

नतभ्रुवां नाभिनिपीतशेषं बम्भ्रम्यमाणं बलिसारणीषु ।
आरुह्य तोयं स्तनयोः कथञ्चित् तदन्तरे प्राप नहि[७]प्रवेशम् ।।१३७।
आलिङ्गितं बाहुलताभिरम्भश्चुचुम्ब वक्त्रं हरिणेक्षणानाम् ।
पयोधरैस्ताडनमाप नाभीं संस्पृश्य लोलं जघनं जगाहे ।।१३८।

१. सुरभपत्य-। २. सीषंत। ३. पष्टिः। ४. रोषितापि। ५. चिनय-। ६. कत्यकातः। ७. नहा।

दहनास्त्रभृतः पिनाकिनो निभृतः क्वापि भयेन भूयसा ।
जलदुर्गजुषां मृगीदृशां प्रजगल्भे किल संश्रयात् स्मरः ।।१३९।
कनकशृङ्गभृतः प्रमदास्ततः सरससम्भ्रमसञ्चलितेक्षणाः ।
सलिलसक्तघटप्रकटस्तना जलकिरः सहसाशिवमापतन् ।।१४०।
करक्वणत्कङ्कणरत्नरोचिश्चित्रीकृतं प्रीतिविशेषशोभि ।
पयः प्रयुक्तं प्रियया पिनाकी प्रतीक्षते स्म प्रणयेन पूर्णः ।।१४१।
तरङ्गमालाभिरनङ्गवैरिणं प्रसिञ्चती मूर्द्धनि बद्धविभ्रमा ।
स्वयं शिवाया ननु सौकुमार्यवित् सहायतामातनुते स्म जाह्नवी ।।१४२।
निर्यातयन्तीभिरिव स्मरस्य चिरन्तनं [1]वैरमथोदभारैः ।
शशाङ्कमौलेर्नयनं तृतीयं शिवा सखीभिः पिदधेतरां तत् ।।१४३।

अगणितमणिभूषणभ्रंशमकृतगुरुलघुविवेकमुपचीयमानप्रणयवैयात्यजनितरोषावेशवशंवदपरस्परव्यतिकरमुन्मूलशैवालहल्लककह्लारकैरवकमलदलकलिलमुड्डीनदात्यूहकङ्कलहंससारसमुच्छलच्छफरसङ्घट्टचकितकामिनीजनसद्वीचिविघूर्णमानघनरसप्रक्षेपजनितच्छर्छरध्वनिनिमीलितनयननलिनमाकुलजलदेवतानिभृतवीक्षितमवर्तत विहाररभसः ।

प्रणयिनीकरयन्त्रविनिर्गताः प्रियमुखे न्यपतन्नुदबिन्दवः ।
कमलसम्पुटकेन समर्पिताः शशिनि किं नवमौक्तिकपङ्क्तयः ।।१४४।
स्पर्द्धां दधानौ कलशैरुदारै राजन्मनः प्रत्युत वारिपूरे ।
स्तनौ तरन्तीं तरलायताक्षीममज्जयेतामतिभारभूम्ना ।।१४५।
निमज्जतीनामसरोरुहाक्षी काचित् सपत्न्याः पुरतो विशङ्कम् ।
तुङ्गस्तनालिङ्गनलम्पटस्य प्रियस्य कण्ठं जगृहे भुजाभ्याम् ।।१४६।
स्पृष्ट्वा करं कापि पलायमाना नितम्बतुङ्गस्तनभारगुर्वी ।
प्रतीर्य सद्यः स्पृशतः प्रियस्य ग्लहीकृतं चुम्बनमन्वमंस्त ।।१४७।
नितम्बिनीनां रणितं वितेनुः सन्दष्टसूत्राणि न नूपुराणि ।
निसर्गतो नीचसमुत्सुकेषु जडेषु किं मञ्जुगिरो वदन्ति ।।१४८।
समुक्षितोऽक्षैः फणिभिः [2]समन्तादुद्भाविकाकारिभिराकुलत्वात् ।
सिक्तो वधूभिः स जगत्त्रयस्य कल्पद्रुमः पल्लवितो बभूव ।।१४९।
अनिर्णयन् काञ्चनपङ्कजानां मध्ये मुखानि प्रमदाजनस्य ।
स पद्मिनीं काञ्चन सेक्तुकामो न पद्मिनीमेव सिषेच शम्भुः ।।१५०।
कथन्न जीयेत [3]शिवोऽप्सरोभिर्यतः पतन्तीषु जलच्छटासु ।

---

१. चैर । २. समंतावुद्धीवि- । ३. शिवोऽक्षरोभिर्यतः ।

पराङ्मुखत्वेऽपि न सम्मुखत्वं त्यजत्यसौ पञ्चमुखः कुतश्चित् ।।१५१।
जितोऽजितः शम्भुरिति प्रियायाः सखीभिरुक्तो विजहास देवः ।
पराजयो हि प्रमदाजनेभ्यो जयादपि प्रीतिमुरुङ्करोति ।।१५२।
क्वचिद् गणानां भसितेन भूषितं क्वचिद् वधूनां कुचकुङ्कुमं वहत् ।
पयस्तनुश्चन्द्रकलाशिरोमणेः किमर्द्धनारीश्वरतामदर्शयत् ।।१५३।
समुत्थितास्ताः सरसो मृगीदृशस्ततः करस्वस्तिकगोपितस्तनाः ।
ध्रुवं वपुःश्रीपरिवाहवाहिभिर्गलज्जलैः कुन्तलपल्लवैर्बभुः ।।१५४।
धौताञ्जनानि गतयावककुङ्कुमानि
सद्यः प्रतप्ततपनीयसमुज्ज्वलानि ।
निर्मृष्टलम्बिचिकुराभरणानि तासा-
मायासमन्थरपदानि वपूंषि रेजुः ।।१५५।
अरुणविपुलनेत्रा निस्सहाः पक्ष्मलाक्ष्यो
धृतवसनविभूषा नाविशन् कस्य चित्ते ।
भुवि मणिविमलायां स्वस्य मूर्तौ शिवोऽपि
[1]प्रतिफलकपटेनाधत्त यत् ताश्चिरेण ।।१५६।
उषा तु सरसस्तीरे मणिवेदीमधिष्ठिता[2] ।
दम्पत्योः प्रीतिजं सौख्यं हृदये बह्वमन्यत[3] ।।१५७।

अचिन्तयच्चेदम्–

इदं तत्त्वं त्रिवर्गस्य भूयसां तपसां फलम् ।
निखिलानन्दसन्दोहो दाम्पत्यं तामदेहिनाम् ।।१५८।
पुण्यानां कतिपयजन्मसम्भवानां
सम्भारो भवतितरां फलेग्रहिश्चेत् ।
अन्योन्यप्रगुणगुणं जनास्तदानीं
दाम्पत्यं प्रणयविभूषणं लभन्ते ।।१५९।

दिष्ट्याहमपि भगवतीप्रसादादीदृशीनां सुखसम्पदां कदा नु भाजनं भूयासम् ।
विचिन्तयन्त्या दनुजेन्द्रपुत्र्या मनोरथं दातुमुवाच गौरी ।
दैन्योष्मलामर्थिजनस्य वाचं न स्प्रष्टुमिच्छन्ति हि दानशौण्डाः ।।१६०।
अहमिव भवकेलिभाजनं सह पत्या कुलशीलशालिना ।

---

१. प्रतिफलकपटेनाधतयताश्चिरेण । २. मधिष्टिता । ३. वहमन्यत् ।

कलयतु तव तेन सङ्गतं सततं भूरिगुणैरजर्यतान्।।१६१।
माधवस्य च वलक्षपक्षगद्वादशीनिशि निशीथशायिनीम्।
स्वप्नसौरतसुखेन मोहितां त्वां करिष्यति वरो वरानने।।१६२।
मितामिमां वाचमुदीर्य देवी तिरोदधे सार्द्धमनङ्गजेत्रा।
[1]स्वात्यामनेकैःसगुणैरुपेतामम्भोदमालेव विधाय वृष्टिम्।।१६३।

ततो हरप्रणयिनीप्रसादफुल्ललोचनाभिरालीभिरभिनन्द्यमाना कन्दलीव जलदागमेन तेन वरेणोपजनितं रागमभिवहन्ती वैजयन्तनिर्विशेषे विमानरत्ने वसन्ती कमपि कालमियमत्यवाहयत्। देवलोकालङ्कारभूतासु सकलललनालावण्य-वर्णनोपमानतां गतासु रम्भोर्वशीप्रमुखास्वप्सरस्सु यदसौम्यचित्रलेखां नाम कन्यकामश्रौषीः। साहं षाड्गुण्यप्रयोगचतुरस्य चतसृषु विद्यासु नदीष्णस्य निसर्गसाधोर्बाणमन्त्रिणः कुम्भाण्डस्य कुतश्चित् कारणादपत्यभावं भजन्ती दनुजराजदुहितुरलिप्रीतिपात्रमभूवम्। सत्यपि सुरासुरगन्धर्वनागकन्याकदम्बके महति परिवारे गुणगौरवान्नु बुद्धिसौष्ठवान्नु दम्भविरहान्नु दैवनियोगान्नु मयि परमसौ [2]विश्वसिति सह [3]स्नाति [4]सहाश्नाति सह पिबति सह विहरति सह स्वपिति सहोत्तिष्ठति सह निषीदति सह कुप्यति सह प्रसीदति। किं बहुना मामन्तरेण किञ्चिदपूर्वं न पश्यति न शृणोति न जिघ्रति नास्वादयति न स्पृशत्यहमस्याः सा च मे मनः प्राणाजीवः सर्वस्वम्।

एकदा तु निःसम्पातसमये हंसतूलकोमलकशिपुशालिनि शरदम्बुदच्छेदकान्ति-विविधोपधानसुन्दरे जातरूपरज्जुसन्दानितचन्द्रकान्तचरणचतुष्टये सुरभिशिशिर-सुकुमारतलस्पर्शमात्रेण निद्रामाकारयति शयने शयाना समुन्मिषत्सु सुरत्नदीपेषु सहसोत्थाय रोदितुमारभत राजपुत्री। तस्याश्चोच्छ्वासनिस्वनेन लब्धजागरः किं किमिति समस्तोऽपि सखीनिवहो व्याकुलीबभूव। अहं तु तदवस्थामेनामवलोक्य जातसम्भ्रमा निदानमुपलिप्सुरवोचम्। कल्याणि! किमिति शीतकालशशधरबिम्बडम्बर-माननमानीयते। प्रबलवाष्पदुर्दिनेन नु जनयितुस्तव दम्भोलिदुःसहबाह्यसहस्र-सारभीरुर्मृत्युरपि न व्यलीकमाचरितुमध्यवस्यति, तपनोऽपि यथामनोरथं तपति, श्वसनोऽपि शनैः सञ्चरति, दहनोऽपि न कञ्चन नगरवासिनं जनं दुनोति, को नाम च निरन्तरमासन्ने शिवे शिवेतरस्यावसरः। बहुमतासि, पितुर्नयनचन्द्रिकासि च मातुर्हृदयमसि, सखीनां स्नेहभूमिरसि, शैलसुताया नतेन तेऽभिमुखीभवितुमीशते शारीरमानसास्तापाः। इमास्तव ताम्यन्ति गलदविरलवाष्पबिन्दुविलुप्यमानकपोलपत्र-लेखाः किंकर्तव्यतामोहमुषितावधानाः सख्यः।

[5]अयि कथय कारणमकाण्डरुदितस्य। हन्त यथाप्राणं प्रतिविधातुमभिनिविशमानः

---

१. खात्यामनकैः। २. विश्विति। ३. स्नाति। ४. सहाश्राति। ५. अपि।

स्नेहवतामवतरतु[१] गणनासु बन्धुवर्गः । सा तु मयैवं बहुधानुबध्यमाना[२] [३]पाटलोञ्छननयनोपान्तसंसक्ताश्रुधारा कथं कथमपि निःश्वासश्रेणीं संस्तभ्य वाष्पगद्गदमगदत् ।

कथमात्मनापि [४]जुगुप्स्यमानमर्थमितरश्रुतिमनुतिष्ठेयमथवा सदसतोरुपनिधानभूमिर्विश्रम्भणीयो जन इति न किञ्चिदनुद्यम् । अभिनवकादम्बिनीकान्तिराकर्णलोचनः शरदाकाशशशाङ्कसुन्दराननो भोगीन्द्रभोगविलम्बमानबाहुर्व्यूढवक्षाः पीतकौशेयवसनः शैशवाव्यवहिते वयसि वर्त्तमानः सुरभिरिव शृङ्गार इव स्मर इव ललनाजनमनस्सु तरलतामतिमात्रमादधानः सौन्दर्यराशिरिव मूर्त्तिमानलक्षितागतिः कोऽपि पुरुषो ममेह विस्रम्भसुप्तायाः कौमारमहरत् ।

किमयं जागरः, किं स्वप्नः, किं मूर्च्छा, किं मदावस्थेति चिन्तयन्त्याः परिच्छेत्तुमक्षमाया मायावी स गृह्यमाण इव मय्यलीयत[५] । साऽहं निसर्गनिर्मलस्य शशाङ्कसदृशः कुलस्यास्य कलङ्कलेखेव वैरूप्यकारिणी कदर्थीकृतकन्याजनस्थितिः सोढुं न शक्ष्यामि पुरोभागिनामरुन्तुदानि सोल्लुण्ठवचांसि न दर्शयिष्यामि पित्रोरवशो मषीकषायितमाननं न धारयिष्यामि हृद्रोगवद्[६] दुरन्तदुःखदायिनः प्राणानयमाजन्मापराधशोधनाय बध्यमानश्चरमः प्रणामाञ्जलिरुषायाः [७]प्रतीक्ष्यतां भवतीभिरिति विरराम ।

अहं तु तत्क्षणोपजातस्मृतिः सङ्कल्पितसाहसामिमां सहासमब्रवम्[८] । अपूर्वासि धर्मचारिणी या स्वप्नजनितेऽपि पाप्मनि शरीरान्तं प्रायश्चित्तमनुतिष्ठसि । अपि सरले विस्मरणशीले स्मर स्मरवैरिवध्वा वरप्रदानमेषा च वैशाखशुक्लपक्षस्य द्वादशी निशीथसमयश्च यमचिरेण चरितार्थयसि निर्माणनैपुणं विधातुः । मयेत्थमुदीरिते तु तत्क्षणमक्षीयत शोकतिमिराडम्बरो व्यदलदालीनां नयनराजीवराजिरराजत शमितवाष्पबिन्दुतारकाततिरतिरागवत्युषा ।

तदवधि स्वप्नदृष्टस्य तस्य महनीयजन्मनो जनस्य लावण्यपीयूषपानजनितमरोचकमिव दधानयोर्दृशोर्न किञ्चिदासेचनकममन्यत । तमेव नक्तन्दिवमनुचिन्तयन्ती न किञ्चिदभ्यनन्दत् । केवलं सङ्कल्पकल्पितसमागमसुखानुभवा कमपि कालमुल्लङ्घ्य कुसुमशरासनस्य प्रणेयतामभजत् । अगमच्च कमलवनी चचालातपेन प्रथममनोजवैकृतेन दर्शनीयामवस्थाम् ।

अपत्रपाशृङ्खलितोऽपि सञ्चरन्निरङ्कुशत्वं सहसा समाश्रितः ।
बभूव तस्यां मदनो दुराक्रमः क्रमेण वापीमिव बालकुञ्जरः ॥१६४॥

तडिल्लतामेखलितान् नवाम्बुदान् सपीतकौशेयतदङ्गरोचिषः ।
विविक्तवातायनदत्तया दृशा विलोकयन्ती मुदमाप[९]साचिरम् ॥१६५॥

यथा यथा तस्य सखीजनः कथा जुहाव वेद्यामिव तत्र शान्तये ।
तथा तथा यौवनवातबृंहितश्चिराय जज्वाल मनोभवानलः ॥१६६॥

---

१. स्नेहवतामवरतु, २. बहुधानुवध्यमाना । ३. पाटलोच्छन-, ४. जगुक्ष्यमान- । ५. मच्यलीयत । ६. हृद्रोग वदुःखदायिनः । ७. प्रतीक्ष्यतो । ८. सहासमब्रकत् । ९. युदमायसा चिरम् ।

विलासवाटीषु न मन्दमारुतैर्न चन्द्रशालासु च चन्द्ररश्मिभिः ।
सरस्सु फुल्लैर्नलिनैर्न निर्ववौ तदीयमङ्गं स्मरतापवेपितम्[1] ।।१६७।
अमन्दमिन्दीवरवृन्दसुन्दरे [2]निमज्जती तत्तनुकान्तिसागरे ।
समीहमाना मनसा तदात्मतामवाप सा पाण्डिमभूषणं वपुः ।।१६८।
सखीमुखाम्भोजविकासवैरि सा वपुर्वहन्ती बहुपाण्डिमाश्रयम् ।
बभूव शुक्लेतरपक्षसम्भवा शशाङ्कलेखेव कृशा दिने दिने ।।१६९।
अपह्नुवानापि मनोजविक्रियामपत्रपिष्णुः स्फुटरागलक्षणा ।
अभूतपूर्वां समुपेयुषी दशां सखीभिरालक्षि विलक्षणा स्थितिः ।।१७०।
पुनस्तमाशंसुरसौ विलोकितुं [3]प्रतीक्षमाणा गणरात्रमुन्मुखी ।
निपत्य तल्पे न ददर्श वीतया यतः सपत्न्येव स निद्रयाहृतः ।।१७१।
निदाघसन्ध्यासु विलोचनोत्सवं वितन्वती जह्नुसुतेव सुन्दरी ।
समाश्रिता पाण्डिममण्डनं वपुः कृशापि सा कामपि कान्तिमाययौ ।।१७२।

अथ शरदातपेन मालतीमालामिव म्लायमानामनुदिनविजृम्भमाणमनसिजज्वरवेदनाविसंष्ठुलाङ्गीमतनुतापवेपमानस्तनसिचयामिमामवलोकयन्नतर्कितानिष्टपातशङ्काकुलः सहचरीजनः ससम्भ्रमं शीतलोपचारमरचयत् ।

सा त्वविलम्बितोन्मूलितजलकलिलकोमलकमलनालकल्पिततल्पशायिनी हरितपद्मिनीपलाशव्यजनवीज्यमानतनुरतनुघनसारनीरधारासारसिच्यमानसर्वाङ्गी बालकदली- काण्डगर्भच्छदच्छादितस्तनी तनीयो न निर्ववार, वैरमेव परमुरीचकार, चन्दनारविन्दवातांशु[4]भयमभयदर्शनादवाप ।

एवमप्रतीकारविरहदहनोद्दाहदूयमाना शिरीषसुकुमारतनुलता नितान्तमाकुलीबभूव । दावानलत्रासतरलखञ्जनमिथुनपारिप्लवविलोचना सर्वाङ्गीणश्रमसलिलपूरप्लवमानस्तनाञ्चला चन्द्रकान्तिरिव धूमग्रहेण मोहेनागृह्यत । तदनु विशृङ्खलमानीतामुल्ललास करुणकोलाहलः । तामवस्थामवलोक्य म्लानमुख्यः सरभसमुषामातरमावेदयाञ्चक्रुश्चेट्यः[5] ।

सा तु मर्मणि निर्दयनिपीडितेव विषविघूर्णितेव खिद्यमाना सहस्रसङ्ख्यानिःसीमन्तिनीभिरनुगता मरालमञ्जुगामिनी सह महाभिषग्भिस्तदन्तिकमापपात ददर्श च बालवरटामिव पङ्कगहनादुत्तरन्ती किञ्चिदपचीयमानमोहामात्मजामलघुवात्सल्यविस्रंसमानवाष्पविलुलिताक्षी स्थलकमलकोमलेन पाणिपल्लवेन स्पृशन्ती तदङ्गुलिपर्वाणि शनैः स्फोटयन्ती तामवोचत् । कथय वासु का वेदना तव दारिके, किमिति सौकुमार्यसाराणि ताम्यन्ति तवाङ्गानि, किमिति बन्धुवर्गमखिलमेव संशयितजीवितं विदधती मुहुर्मूर्च्छसि, किमिति कतिपयदिनानि मदन्तिकं नागतासि,

१. वेषितम् । २. निमन्मतीतनु- । ३. प्रतिक्षमाण । ४. चन्दाराविन्दवातां सुभय- । ५. चेद्यः ।

किमिच्छसि, किं करवाणि, किं ददानि, जिज्ञासन्त एते पीयूषपाणयो भिषजस्तवावस्थाम् ।

उषा तु बहुधानुयुज्यमाना लज्जायासमन्थरमुदीरयामास । अम्ब किं ब्रवीमि, भाषणभोजनोत्सवसमाजादि किमपि मह्यं न रोचते । केवलमङ्गमर्द्दस्वेदपिपासादाहमोहातुरा विषीदामि । नान्यदाकलयामि । तदाकर्ण्य बाणमहिषी वैद्यानुवाच । अन्यादृशीव देव्या जलक्रीडादिनावधि जातेयमाहारविहारविमुखी । निद्रानिःश्वासदाहमोहप्रलापोत्तरं ताम्यति नाभिनन्दति प्रियताम्बूला प्रियताम्बूलवीटिकामपि, नामोदमुद्गिरन्तीःस्रजः स्वीकरोति, न क्रीडति मणिपर्वतकेषु, नाभिरमते प्रमदवनवीथीषु, न विश्राम्यति समुद्रगृहेषु, नाश्वसिति फुल्लकमलकाननासु विलासवापीषु, न चित्रीयते चित्रशालासु, न ध्रियते कौतुकनिकेतनेषु केवलमाविष्टेव ग्रहगृहीतेवापस्मारिणीवोन्मदिष्णुरिव वामकरतलकपोलमण्डला किमपि चिन्तयति, किमप्यालिखति, किमपि सम्मन्त्रयति, किमपि वीक्ष्येव प्रसीदति, जिघृक्षति चुचुम्बिषति पुनस्तेन वियुक्तेवोच्छ्वसिति,विषीदति विलपति चलति लुठति प्रस्वपिति । मसृणचन्दनमुरसि निधीयमानमेतस्याः सद्यो बुद्बुदौघमुद्वमति । दूरत एव कर्पूरकणिकाः प्रज्वलन्ति, तप्तायसीव गन्धसलिलधारास्तिरोभवन्ति, निधातुमुद्धतानि सरोजानि धूमायन्ते। तदस्याः शास्त्रतो निश्चित्य प्रतीकारमावेदयत वैद्याः ।

ते तु निदानवेदिनो विदग्धाः परस्परमुखावलोकपूर्वमब्रुवन् । नूनं कठोरजलकेलिश्रमादस्याः प्रस्वापग्लानिजृम्भादयः समुदभवन्ननेकनारीनिकाये च तत्र त्रैलोक्यदुर्लभलावण्यलालिते वपुषि कस्याश्चिद् दुष्टदृष्टिरपतद् यदरतिप्रलापतापसम्भ्रमैरभिभूयते । रक्षामन्त्रैर्गौरसर्षपैः प्रजपितपानीयैरभिषेकेण मणिभिरौषधीभिरखिलमपगमिष्यति । बालकशतपत्रगन्धसारोशीरधान्याकमांसीकषायो दोषमतनुज्वरजनितमपहरिष्यति । त्वरितमेव पार्वतीप्रसादादियमुल्लाघतामञ्चति, न चिन्तनीयमिति स्वास्थ्यमिव मन्यमाना सपरिकरा बाणपत्नी यथागतं जगाम ।

अन्यास्तु स्त्रियः का नाम वयं महतां गृहाचारचिन्तासु, किन्तु विवेकसहावस्थानविरोधीन्येव भवन्ति प्रायः प्रभुत्वानि यदेते विषमे वयसि वर्त्तमानाः कुमारीरभिमतेन पत्या झटिति न योजयन्ति मूढमतयः प्रभवो दिष्ट्या दारुणप्रकृतेर्बाणस्य मनसि निपतेदुषाया विवाहचिन्तेत्युपांशु संलपन्त्यो निरगमन् ।

अहं तु सख्या विरहदुरवस्थया दूयमाना रहसि तामशंसम्—सुभगे, कथय [१]नितान्तमन्तरङ्गेऽपि जने न लज्जायाः कश्चिदवसरः । कस्य कृते विरहदहनज्वालाभिरभिभूयसे । ननु परमेश्वरावरोधेन निदिष्ट एव ते दयितो नहि देवता वितथवाचो

१. नितान्तरंगे ।

भवन्ति । स्वप्नदर्शनेन दृष्टप्रत्यया चासि, धैर्यं बधान, विजहीहि क्लीबताम्, नहि महाकुलप्रसूतास्त्वादृशः कुमार्यः स्तोकेन कातरीभवन्ति । सा तु स्नेहकरुणरमणीयं प्रियंवदा मामवादीत्– आर्ये, जानासि मनागपि प्रभवन्ती का नाम स्वमानसमन्यसात्कुर्यात् । आजानपारिप्लवं तु चेतः, प्रकृत्या हृदयहारिणः स्वजगति केऽपि भावा वामशीलश्च खलः प्रसूनधन्वा, तन्निदेशवशंवदं च हतकमिदं वयः, किमधिकमभिदधीय स्वप्नदर्शनदिनावधि वर्द्धमानमाधिमियन्तं कालमगणयन्ती कथञ्चिदासम्, न सम्प्रत्युपदेशकालो न खलु धैर्यस्यावसरः, शीर्णमेव तपस्विन्या त्रपया, गलितमेव शास्त्रसंगृहीतेन प्रबोधेन, विलीनमेव गुरुजनगौरवेण, क्वथ्यन्त इवाङ्गानि, भिद्यन्त इव मर्माणि, कृष्यन्त इव प्राणाः ।

पार्वत्या प्रसादीकृतोऽपि स जनः कथमिव स्वयमुपैष्यति, अदृष्टं हि पुरुषाकारमन्तरेण नार्थान्निर्मातुमीष्टे । सर्वथा संशयितजीवितोऽयं जनो यदि न तस्य पुनः पिबति पूर्ण-पीयूषदीधितिदर्शनीयमाननम्, पुनरहमभ्यधां विदुषि, किमङ्गेव प्रलपसि, दैवमात्रगम्येऽर्थे पुरुषप्रयत्नः कथं क्रमताम्, स्वप्न एव त्वया दृष्टस्य तस्य कुलशीलादि दुरधिगमम्, नहि प्राकृतः कोऽपि पुरुषो [1]दहनदुर्निरीक्षमन्तःपुरं प्रवेष्टुमुत्सहते । तेन च निर्देश-भाग्यभाजनं भवति भवान्याः । सर्वथा सुरासुरैरपि दुराधर्षः स भवितुमर्हति । धन्यासि यस्यास्ते पतिरीदृशो [2]महेशकान्तयाज्ञप्तस्तमानेतुमितरजनः कथमध्यवस्येत् ।

एवमुक्ते तु प्राणदयितं दुरवापमेव मन्यमाना दनुजराजनन्दना दीर्घमश्रुधार-मरोदीत् । अहमिवान्तरङ्गभूता ततश्चिरमाश्वासयन्ती रामा तामाह स्म । अनाथेव किमिति रोदिषि राजपुत्रि, सकलकलाकुशला, शिल्पेषु कल्पमतिर्महाप्रभावान्त-रिक्षचारिणी चित्रलेखा निर्बध्यतामस्मिन् कर्मणि । किन्नाम प्रतिभावतामसाध्यमिति ।

सा पुनः कृताञ्जलिरश्रुमुखी मां व्यजिज्ञपत् । पांशुकेलिप्रभृतिरूढसख्यमाक-स्मिकव्यसनबाध्यमानममुं[3] जनं किमुपेक्षसे, दीनस्य यस्य कस्यापि हन्त सन्तो दयन्ते किमुत सुहृदः । न प्रभवामि यावतीर्यातनाः शरीरसादादुदीरयितुमुदीरितेन वा किं प्रयोजनं प्रत्यक्षदर्शिनो जनस्य यदि न दर्शयसि सम्फुल्लसहस्रपत्रोपमं मुखमभिमतस्य, चपलमेव व्रजामि, तदा स्मरणशेषामवस्थां तामहमलपं समान-सुखदुःखे जने किममुनोपन्यासेन, किमञ्जलिबन्धेन, विधुमुखि, रागस्य गाम्भीर्यमेव परीक्षितुमियमुपेक्षा । चपलं हि चेतः कुमारीणां प्रयत्नसाधितेऽपि कृत्ये कदाचिद् विपरिवर्त्तेत । राजसदनेषु निभृतस्वच्छन्दचरितानि बह्वनर्थानि मनागपि सन्धिमधिगम्य निर्भिन्नरहस्यानि भूयसे भयाय भवन्ति ।

---

१. दहनुर्निरीक्षंतः पुरं । २. महेशकान्तथा- । ३. मसुं ।

सुविमृश्यकारिता नाप्रज्ञावतामाभरणमनन्यगतिकतया तु सर्वमिदमुदस्य प्राप्तकालं परिचिन्तनीयं सुमेधसा । साहं समभिरहोभिः सुरासुरगन्धर्वविद्याधरसिद्धसाध्ययक्ष-रक्षःकिन्नरनरनागेषु लावण्यतेजोऽभिजनवतो यथाकृति यथावया यथालक्षणं लिखित्वा भवतीं दर्शयामि । प्रत्यभिजानीहि तत्र स्वप्नदृष्टं जनमनन्तरं यथोचितमाचरयिष्यामि । सा तु मध्येजलधि मज्जन्तीं नावमिव मामिकां वाचमवलम्ब्य लब्धजीविताशा तमर्थमनुमेने ।

अहं ततः क्रमेण लोकान् गाहमाना हस्तवती सप्तरात्रेण यथोक्तमालिख्य चित्रपट्टमेनामदर्शयम् । सा तु मार्कण्डेयमतिरिव दामोदरोदरे तत्र जगदखिलमुपलभ्य विस्मयमाना त्रिदिवमतीत्य भूलोकमवलोकयन्ती सह वृष्णिभिर्वासुदेवमुदैक्षत । तदनु प्रद्युम्नमवलोक्य सन्दिहाना भवन्तमालुलोके नवजलधरमुदीक्ष्य चातकी-वोन्मनायमाना । सोऽयं चित्तचोर इत्यालपन्ती विस्मयोत्फुल्ललोचना मामभाणीत् । सखि, [1]कं देशमलङ्करोत्ययं जनः । कस्य कुलस्याऽऽभरणम्? किमभिजनः? किमवदानः? किमभिधानः? अस्यैव मदनवाडवदारुणे विरहसागरे निमज्जन्ती दैवगत्येव भवत्या चित्रफलकमुपनीय परं पारं निनीषितास्मीति जाने तामहमाख्यं स्थाने कृताभिनिवेशासि, जितं गुणज्ञतया, जृम्भितं गरिम्णा, विस्फूर्जितं हरप्रियतमाप्रसादेन, फलितं वेधसो निरतिशयलावण्यनिर्माणश्रमेण ।

दुर्दान्तान् दितिजानुपेत्य धरणीं राजच्छलाद् [2]द्रुह्यतः
साधुभ्यो बलदर्पदुर्बलनयानत्राऽऽगतः[3] शासितुम् ।
अध्यास्तेऽधिपयोधि यादवबलैरुन्मूलितद्वेषणो
देवो द्वारवतीमुदारचरितः क्षीरोदकन्यापतिः ।।१७३।

अन्तः सुयशसा यस्य क्षीरशुभ्रेण पूरितम् ।
ब्रह्माण्डमद्भुतं भाति[4] नालिकेरसलाटुवत् ।।१७४।।

अमितमहिम्नस्तदात्मजस्य प्रद्युम्ननाम्नः सूनुरनिरुद्धो नाम यस्मिन् नयनराग-मासादितवत्यसि

कृपाणपाणे रणमूर्द्धनि क्रुधा प्रधावतो यस्य भयेन कम्पितात् ।
पतेदुदञ्चत्पुलकोत्करात् करात् प्रभोः पितॄणामपि दण्ड उद्यतः ।।१७५।

१. के । २. द्रुह्येतः । ३. त्रागजः । ४. भाजि ।

उद्धृत्य योधयेदेष पर्वतैरेव पर्वतान् ।
बाहुभ्यां सिन्धुमाकृष्य नयेत् सिन्ध्वन्तरं बली ।।१७६।
नासत्यनिर्माणधृतावधानः
पुरूरवाः सृष्टिगृहीतशिल्पः ।
नलेन लब्ध्वा स्थिरतां करस्य कृतस्मरोऽमुं विदधे विधाता ।।१७७।
न केवलं राजसुते त्वमेका निशम्य कान्तिं कति नास्य रामाः ।
वियोगपादः पतिमध्यमग्ना महोदवासव्रतमाचरन्ति ।।१७८।
स युवा भाति धमिल्लस्त्रिलोक्या हरिणीदृशः ।
तदङ्के पारितथ्येव शोभस्व वरवर्णिनि ।।१७९।

तदमुना कुलशीलरूपयौवनोत्साहतेजोवैदग्ध्यशालिना वदान्येनाविकत्थनेन क्षमावतातिगम्भीरेण महासत्त्वेन स्थेयसा निगूढमानेन दृढव्रतेन युक्त एव तवाभियोगः । किन्तु सप्तभिः प्राकारैः परिक्षिप्ता समुद्रमेखला कालायसकपाटतोरणा दारुणै रक्षिभिरावृता द्वारवत्यपि रिपूणामद्वारवती न सा पुरी परकीयेण प्रवेष्टुं शक्यते । साहसे कथञ्चिन्निर्व्यूढेऽपि कुतश्चित् प्रकाशीभवेदेवायमर्थस्तथा च मानिनां मूर्द्धन्यस्त-वत्तातो निकारमेतं न मृष्येद् भवेदेवमनर्थपरम्परा । तदेतत् कटुविपाकं कर्म कथमाचरेयम् । सा तु निसृष्टार्थासियोगबलेन विदितवेद्यासि मम प्राणरक्षणे कृतप्रतिज्ञासि किमधिकमुपदिशेयमिति शनैरभिधाय जोषमासीत् । अहं पुनस्त्रैलोक्य-रत्नमेषा विरहवह्निना विक्रियते, सर्वथा झटिति प्रतिविधेयोऽयमर्थ इति निश्चित्य समासादितशुभशकुना ततः प्रातिष्ठे, आगमं च कियता कालेन द्वारकोपशल्यशोभिमन्दाकिनीतीरपरिसरे ।

तत्र स्थिता कथं मया प्रक्रान्तोऽयमर्थः शुभोदर्को भवेत् कथं मां न निर्दहेदीषद् रोषरूषितया दृशा यदुप्रवरः कथं प्रतिपद्येत मदुक्तमनिरुद्ध इति विचारयत्येव नारदं मुनिमुदैक्षे । अधिनदं ध्यायन्तं तमुपसृत्य प्राणसत्त्वाशिषानिनं यत्वं कुतश्चित्रलेखे किमिव ध्यायसि, किं वा विवक्षसीति मामपृच्छत् । तमवादिषम्-भगवन्, जानासि बाणस्य दैत्यपतेरुषा नाम कन्यारत्नमखिलसुन्दरीमौलिमधिवसति । तस्याः पार्वतीवरप्रदानपराधीनमनिरुद्धे मनोऽनुरज्यतीति विरहः परां कोटिमारुरोह । तया [1]दौत्येन प्रतिशिष्टा विभावयामि-कथमस्मिन् साहसिक्ये कृष्णो मामुपेक्षेत, कथमनिरुद्धे शोणितपुरं नीते प्रवृत्तिमेतामुपलभेत । साऽहं भवन्तमासाद्य कृतार्थंमन्याऽस्मि । ऐहिकीनामामुष्मिकीणां च चिन्तामपनेतारः सज्जनसमागमा भवन्ति । समुन्निरुन्मनाय-मानो[2] ध्यानमुत्सृज्य मङ्क्षु मामभाषत-भद्रे, परममृतं कर्णयोः कीर्णवत्यसि यत् किलायमारम्भः कलहपर्यवसायी । तदर्थमेव तु त्रिलोकीमटामि । चिरेण कलहामृत-मन्तरेण नयनयोरुपवास एवासीत् । तत्र संयुगप्रसङ्गे मम स्मरिष्यसि । समयमिमं

१. दूत्येन । २. समुनिरुन्मनायमानो ।

कुरु। करोमि ते समस्तमीप्सितमयमेव मे प्रत्युपकारः प्रवृत्तिनिमित्तं च। मया प्रतिश्रुते तु तदर्थे साधितपूर्वामिमां सर्वमोहिनीं गृहाण तामसीं नाम विद्यामेनया न कश्चित् त्वामनभिमतो ज्ञास्यतीति प्रसन्नस्तां विद्यामदात्।

ततस्तमभिवाद्य प्रोत्तुङ्गकनकप्राकारगोपुरसौधसंबाधां पुरीं प्राविशम्। प्रद्युम्न-भवनादविदूरे भवद्भवनमद्राक्षम्। तेन[1] चामीकरचत्वरस्तम्भशोभितेन वैदूर्यतोरणेन मणिप्रवाललतितकपाटेन बद्धविविधवन्दनमालेन पूर्णकुम्भोपशोभितपार्श्वद्वयेन ह्रियमाणचिताचन्द्रमण्डलमालिहन्तममुं प्रासादमन्तरिक्षादुदैक्षिषि। तदन्तः सन्तन्यमानं संगीतकौतुकमाबध्यमानगोष्ठिसुन्दरीसममभिवीक्ष्य नूनमत्रैव भवेदनिरुद्ध इति चिन्तयन्ती तारासमाजमध्यवर्त्तिनमिन्दुमिव भवन्तमालोकिषि। जायमानेऽपि महति कुतूहले विमनायमानमप्रसन्ननयनतारं [2]त्वामुदीक्ष्योदनैषं नूनमस्यापि मम सख्या इव मनो न क्वचिदभिरमते, ध्रुवमनेनापि कुत्रचिन्निबद्धचक्षूरागेण भवितव्यमपि नाम सैवास्य मन्मथोन्माथनिमित्तं भवेत्। अथावसरमभिलषन्ती सङ्गीतविरतौ तामस्यां त्वद्वर्त्तमावृत्य पादपद्मिदमाश्रिताऽस्मि। [3]इदमुदन्तजातमखिलमजस्रमावेदितमावेदनीयशेष-मभिधीयसे।

अस्या दिशः समुपगच्छति मारुतेऽपि
सन्तोषमञ्चति परं तरलायताक्षी।
दैवात् कयाचिदुदितेऽप्यनिरुद्धशब्दे
[4]सिक्तेव शीतलजलैः पुलकं बिभर्त्ति ॥१८०॥

आलीजने तव कथां कथयत्काण्डे
कण्डूयति श्रवणमिन्दुमुखी सलीलम्।
उज्जृम्भते परिजनाङ्गुलिमञ्जुशब्दै-
रङ्गानि काञ्चनरुचीनि भिनत्ति भूयः ॥१८१॥

मदनज्वरो महीयान् प्रहीयसी हन्त सा बाला।
दावानलस्य चन्दनलतिकायाः सङ्गमः सोऽयम् ॥१८२॥

तव मुखमिव रमणीयं [5]राका शशिनं दिदृक्षते सुतनुः।
अहह करालकराली तप्ता तूर्णं पराङ्मुखी भवति ॥१८३॥

सहजोऽपि विषस्य चन्द्रमा नियतं तीव्रतयाऽतिरिच्यते।
गरलं जगृहेऽखिलं शिवो रजनीशस्य कलां तनीयसीम् ॥१८४॥

[6]सङ्कल्पोपरतैः कथञ्चन भवन्निर्ध्यानलीलारसै-
रेतावन्ति दिनानि सा शशिमुखी निन्ये धृतिं लम्भिता।

१. मद्राक्षतेन। २. तारत्वामुदीक्ष्य। ३. इदमुदन्तजातमखिलयजिस्र-। ४. सिक्तेवशीततजलैः। ५. एका-। ६. संकल्पोपवतैः।

सम्प्रत्येष वियोगिनीजनमनःसन्तोषसर्वङ्कषः
कर्णारुन्तुदकोकिलाकलकलः कालः कथं यास्यति ।।१८५।

माकन्दैर्मुकुलावली परभृतैः कर्णामृतं कूजितं
भृङ्गैर्मञ्जुलगुञ्जितानि पवनैः पाटीरगन्धोत्करः ।
आयातस्य किलोपदा ऋतुपतेः सज्जीकृतो दारया
साधो त्वद्विरहे विरक्तमनसा प्राणाः कुरङ्गीदृशा ।।१८६।

मन्दाश्चन्दनचूतचम्पकवनीसञ्चारिणो मारुता-
स्तन्वङ्ग्या बहुलीबुभूषव इव प्राणान् जिघृक्षन्त्यमी ।
जानीमो मुखशारदेन्दुविजितश्चन्द्रः किलौर्वानल-
ज्वालामण्डलसोदरैर्निजकरैस्तां हन्तुमुत्कण्ठते ।।१८७।

औशीरेषु गृहेषु शैवलदलैः सा तल्पमाकल्पितं
नीता नाम सखीजनैः शिव शिव ग्लानिं परामञ्चति ।
दूरादालपितेऽनुरञ्जनधिया वैपञ्चिके पञ्चमे
किञ्च [1]स्विन्नतनुः सरोरुहमुखी मोहं मुहुर्गच्छति ।।१८८।

चलति मलयमारुते नताङ्गी शिव शिव सा परिवेपते लतेव ।
शशधरमणिपुत्रिकेव चन्द्रे समुदयति स्विदिता सखीर्दुनोति ।।१८९।

लामज्जकव्यजनसन्ततवारिसिक्ता-
[2]स्ताम्यस्तनौ दधति भस्मतुलां जलार्द्राः ।
उद्दाममन्मथमहोष्मभरैः स्फुटन्त्यो
लाजीभवन्ति कुचयोरपि हारमुक्ताः ।।१९०।

मदनज्वरकारिणः कराग्रान् शशिनो जालपथात् कथञ्चिदेतान् ।
सहसा स्थगयन्ति हन्त सख्यः स्वकुचेभ्योऽञ्चलपल्लवानुदस्य ।।१९१।

हारो भारो भवन्नस्याः सखीभिरपवर्जितः ।
वाष्पबिन्दुवितानेन कुचौ तदपि हारिणौ ।।१९२।

दिनमिदमतिवाहितं कथञ्चिद् रजनिरियं नु कथं शिवा व्यतीयात् ।
प्रतिदिनमिति चिन्तया कृशाङ्ग्यः [3]समुपचरन्ति तदीयसख्यः ।।१९३।

[4]नयनगलितवारिसारिणीभिः कुचकलशान् स्नपयन्ति यत्र सख्यः ।
विजहति शुकसारिकाश्च[5] भोज्यं सुनयन सम्प्रति सा दशाऽबलायाः ।।१९४।

---

१. खिन्नतनुः । २. अयमंशः पाण्डुलिपावविद्यमानो मया निवेशितः । ३. समुपचरां । ४. नमन- । ५. शुकसारिकाञ्च ।

प्रालेयशैलशिखरे समुदीय चन्द्रो
धारां किरत्यमृतवारिनिधेः[१] करैश्चेत् ।
[२]क्रौर्यं विहाय बहुभिः शरदां समूहै-
स्तापस्तदा कृशतनोर्यदि नाम शाम्येत् ।।१९५।

गाढं पाण्डुः कृशतनुलता रूप्यरेखाभिरामा
सत्त्वस्येव [३]त्रुटिरितरयोस्तापनेनातितन्वी ।
पश्यन्ती ते हरिणनयना [४]स्पन्दमाना सुचित्रं
चित्रीभूता कथमपि विभो वर्त्तते बाणपुत्री ।।१९६।

तदव मदनवेदनाविदूनामकृतकरागवशंवदां वधूं ताम् ।
जनक इव च मास्म भूर्नृशंसो विरहिजनेषु दयोचितेषु साधो ।।१९७।

इतरास्तव [५]तावदेवानुकम्पाः सुमुखीं तामवलोकसे न यावत् ।
ननु कामयते न कोऽपि ताराविशदां शारदकौमुदीमुदीक्ष्य ।।१९८।

नवनीरदसुन्दरस्य ते भवताद् विद्युदिवेयमङ्कगा ।
इदमाकलयन् विमुञ्चतात् परितापं ननु मादृशो जनः ।।१९९।

इदं च तया सन्दिष्टं श्लोकद्वयमवलोकयतु महाभागः ।

त इह कृतिनो धन्यास्तेषां सुखाः सकला दिशः
प्रणयनिगडे येषां चेतो न संयतमायते ।
भवतु यदि वा कश्चित् प्रेमा परस्परमूर्जितोऽ-
नधिगतपरस्वान्तः स्नेहो विशिष्य विडम्बनम् ।।२००।

नोपालम्भपदं मनागपि ननु स्वप्नैकदृष्टो जन-
श्चेतोभाजनमागसोऽस्य तु निजं निर्हेतु यत् सज्जते ।
आधिव्याधिगणैर्निमाय जगृहे यन्मायया कौतुकी
तत् सोऽपि स्मरचापवक्रचरितस्तत् [६]किं नु मन्तूयति ।।२०१।

इदमाकर्ण्य पीयूषकलशसहस्रैः स्नपित इव सर्वाङ्गीणमानन्दमनुभवन्नुद्भिन्नरोमराजिरौत्सुक्यसौहार्द्रहृद्यमनिरुद्धो व्याजहार—अहो [७]विधेरभिमतविधानव्यसनिता, अहो मन्मथस्यान्योन्यमनःसन्धानशैली, अहो मणिमन्त्राणामिव महात्मवचसां

१. वारि विधेः । २. क्रौपां । ३. त्रुटिरितपोरतापनेनातिन्वी । ४. स्पन्दमानासु । ५. तावदेकम्पाः । इहाक्षरच्युतिर्लेखकप्रमादादिति वागीशः । ६. किंतु । ७. विधेरभिमजः ।

प्रभावविभवः, अहो भवितव्यताया विलासः । अकालकादम्बिनीव पीयूषधाराभिः परितापमखिलमपहरन्ती कल्याणि न केनापि पारितोषिकेण विधिवत् सम्भाविता भवसि । ततोऽयमात्मैव त्वत्सात्कृतः प्रभवति तस्मिन्निव जने यथेष्टमिहापि विनियोक्तुं किमपरमुपचरेयम् । चिरमाकस्मिकविकारविक्लवेन हृदयेन दुर्वहो लघूकृतस्त्वयाद्य चिन्ताभारः । प्रत्यक्षमिव दर्शिता प्राणदयिता । निर्मूलमुल्लसितोऽपि पल्लवितस्तत्समागमप्रत्याशाङ्कुरः । अविदित्वैव मदवस्थां तव सखी मामुपालभते । नन्वहमपि त्वभिहितवर्णवयोरूपाकृतिं स्वप्ने वामलोचनामुदीक्ष्य क्रमविजृम्भिणः पञ्चबाणस्य प्रणेयतामनुभवन् वियोगव्यसनैश्चिराय दुःस्थीकृतोऽस्मि । तथापि-

अकस्मादुन्मीलन् विलुलितसमस्तेन्द्रियगणः
क्षणं मोहश्चेदं[1] मद इव मदीयं भ्रमयति ।
क्षिपन् सर्वाङ्गीणं दवथुमथ मे मन्मथशिखी
धृतिच्छेदी लुम्पन् [2]हिममकृतकारं च कुरुते ।।२०२।

यदवधि मम स्वप्ने याता दृशोर्नवकौमुदी
करणमखिलं [3]रुन्धत् तावत् तमः परिवर्द्धते ।
शिशिरशिशिरे तस्यां मग्नस्य कान्तिपयोनिधौ
शशिमुखपरीता यो भूमानमञ्चति चेतसः ।।२०३।

कर्पूरद्रवदीर्घिकाः कति कति प्रालेयपूर्णह्रदाः
शय्याः शैवलपुण्डरीकरचिताः पाटीरनीरच्छटाः ।
कामं पार्वणशीतरश्मिकिरणा हंहो मया शीलिता-
स्तापःकिन्तु निदाघचण्डकिरणस्पर्द्धी परं वर्द्धते ।।२०४।

मुकुलितसहकारपादपासु स्फुटकुसुमोत्कररेणुरञ्जितासु ।
मुखरमधुपकोकिलासु दिक्षु क्षणमपि चक्षुरुपैति न क्षणं मे ।।२०५।

ते लोचने तरुणखञ्जनलोललोले
सा सौकुमार्यसुभगा मधुरा मुखश्रीः ।
लज्जामनोजललितं किल चेष्टितं त-
न्न प्रस्मरिष्यति मनो जनुरन्तरेऽपि ।।२०६।

आशासु भाति परितो दिवि दृश्यते च
स्वप्नेऽपि सा स्फुरति तिष्ठति जागरेऽपि ।

---

१. मोहश्चे । एकाक्षरत्रुटिर्लिपिकरदोषादिति वागीशः । २. हियमकृतकारं । ३. रुंधतावत्तमः ।

धर्तुं मया प्रवितते बत बाहुपाशे
न ज्ञायते शशिमुखी क्व तिरोदधाति ।।२०७।
अनिशं मनसि स्थितिं विधत्ते सततं तिष्ठति चक्षुषोर्मृगाक्षी ।
अपि दृश्यत एव दिक्षु नित्यं तदियं काचन मन्मथस्य सभा[1] ।।२०८।
वक्त्रं चन्द्रो मलयपवनः श्वाससौरभ्यलक्ष्मीं
वाचं तस्याः परभृतगणश्चम्पकश्रेणिरङ्गम् ।
अम्भोजाली करपदरुचं चानुकृत्य क्षणं मे
मोदं दत्ते[2] तदपि मदनोऽमर्षमाणो दुनोति ।।२०९।
दृष्टा मोहमहौषधिर्यदवधि स्वप्ने मयाऽजानता
कन्दर्पस्य ततो मनागपि मनः स्थैर्यं न धत्ते क्वचित् ।
चन्द्रः कालति चन्दनद्रवरसो हाहा हलत्यङ्गके
माला व्यालति चन्दनाचलभवो मन्दानिलो ज्वालति ।।२१०।
सौधोऽचलीभवति चन्दनपङ्किलोऽयं
दावानलीभवति पल्लविनी च शय्या ।
लोको मृगीभवति भामिनि[3] तां विना मे
मन्वन्तरीभवति च त्रुटिरार्त्तिभाजः ।।२११।
हरिणनयना सुभ्रू राका मृगाङ्कमुखीगुरु-
स्तनसमुदया मध्ये क्षीणा नितम्बभरालसा ।
अभिनववयो जृम्भा जाग्रन्मनोभवविभ्रमा
भ्रमयति धियो धारा धीरं मनो मम दुर्धरा ।।२१२।
हृदये लिखिताऽपि पक्ष्मलाक्षी लिखिता कुड्यतले पुनर्मयेयम् ।
नयनोदपयोधिपूरवृद्धिं तनुते पार्वणचन्द्रिकेव नित्यम् ।।२१३।
सम्भावितस्य मम धैर्यधनेषु नित्यं
तापः कथं बहिरुपैतु वचोभिरेषः ।
अन्तः प्रसर्पयति तत्[3] कलयत्यमुष्मिन्
दीप्ते मदीयहृदयं पुटपाकभावम्।।२१४।

---

१. सभाया । २. दते । ३. भाविनि ।

धुरि धैर्यवतां निरूपितो निपतत्येकपदे जनो यदि ।
विषमे विपदम्बुधौ तदा परितस्तस्य परं विडम्बना ।।२१५।
वसति कुत्र सरोरुहलोचना नयतु को नु तदन्तिकमद्यमाम् ।
मयि विचिन्तयतीति विचेतसि प्रकटितासि कुतश्चन वेधसा ।।२१६।
स्वागतासि नियतंकरणीये वेधसस्त्वमिह मूर्त्तिमतीच्छा ।
मज्जतो विरहवारिनिधौ मे हस्तधारणमतः कुरु भद्रे ।।२१७।
आवयोस्तव करे करभोरु प्राणितं तदितरच्चयदास्ते ।
तद् विलम्ब्य खलु सञ्चिनु तूर्णं पूर्णचन्द्रचटुलानियशांसि ।।२१८।

इति मदनविदूने कातरीभूय भूयो
निगदति पटुमन्दं[1] चन्द्रिका चक्षुषोः सा ।
अभिमतफलसिद्धेर्मोदमुच्चैर्दधाना
प्रणयविनयरम्यं वावदूकावभाणम् ।।२१९।

तुल्ययोरघटनादयशो यद् वेधसो जगति विश्रुतमासीत् ।
मार्जितुं तदमुनैव निबद्धः सङ्गमे परिकरो युवयोस्तु ।।२२०।
युवयोर्मनसी मनोभुवा प्रथमं स्वेन शरेण कीलिते ।
अथ मुद्रयति स्म मुद्रया निजया तद्विधिराभिमुख्यभाक् ।।२२१।
उभयोः किरतः शरोत्करानिशं पुष्पशरस्य वेधसः ।
मम चाभिनिवेशमुच्चकैर्गुणगृह्ये फलितस्त्वयि ध्रुवम् ।।२२२।

तदद्यैव कनककमलमालेव विशाले भवदुरसि विलसन्ती मम सखी सुखयतु भवन्तमित्यभिदधाना वधूकदम्बकादनिरुद्धमुद्धृत्य योगर्द्धिसाधितेन विमानेन सा योगिनी गगनवर्त्मना निनाय ।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपाह्वेन
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरितेऽ-
निरुद्धहरणं नाम चतुर्थ उच्छ्वासः ।।४।



---

१. मातृकायां नास्ति ।

# अथ पञ्चम उच्छ्वासः

स लम्भितः शोणितसंज्ञकं पुरं तयातिवेलं मुमुदे स्मरार्दितः ।
पदं चिदानन्दमिवात्मचिन्तयाचिरेण शीतोष्णसहस्तपोधनः ।।१।

ततस्तामेव स्वप्नदृष्टां राजधानीं प्रत्यभिजानन् प्रतियाममपूर्वया चतुरङ्गिण्या सेनया समाक्रान्तहस्तिनखानि कृपाणपाणिभिर्दनुजभटैरधिष्ठितानि विभूतिमन्ति पुरद्वाराणि पश्यन्नुन्नमय्यानिलतरलरक्तकेतुकरान् सौधशिखरैर्नयसि निवार्यमाण इव प्रमदवनलतालिङ्गनलम्पाकपवनपरिचितो विलासिवलभीविकस्वरैर्विचकिल-स्रगमन्दचन्दनमधुरमधुररसामोदैरुपस्थितोऽभिसारिकाचरणमञ्जीरमञ्जुशिञ्जितानुनादिकल-हंसकुलकलितकौतुकः श्रवणरसायनानि सुन्दरीणां मदजल्पितानि शृण्वन् जागरूकयामिकध्वनिमुखरमार्गाणि शयितकिरातकञ्चुकिकुब्जवामनवधिरजरमूकानि कक्ष्यान्तराण्यतिवर्त्तमानो निशीथरमणीयडामरनगरमुपरिष्टादवलोकयन् कन्यान्तः-पुरेऽवततार । यत्र यत्र जाम्बूनदवरणवारितगतिर्वामदृशां दर्शनमलभमानो मरीचिमाली दिवसमखिलं परिभ्रम्य प्रतिनिशं निर्बिरीसेन[1] तमसाऽभ्यभूयत ।

यत्र च पिनाकिनेत्रानलनिर्दग्धः प्रसूनधन्वा विलासिनीवदनजैवातृक-स्मितसुधामिषेणोदजीव्यत । यत्र च मत्तकाशिनीमुखशिशिरमयूखज्योत्स्नायानसुहितानां गृहचकोराणां न बहुमानविषयो बभूव विधूदयः । यत्र च मणिभूषणप्रभाजालगलित-तिमिरावरणतया निशि नाज्ञायत [2]बहलशुक्लपक्षयोर्विशेषः । यत्र च केलिदीर्घिकाकल-हंसशिशूनामनारतमाचार्यकमाचचार मृगदृशां मणिमञ्जीरनिनदः । यत्र [3]च परःसहस्राणां सीमन्तिनीनां परिकर्मणि गन्धमभिसंगृहणन्नधुनापि गन्धवह इत्याख्यायते नभस्वान् । यत्र सलीलाङ्गनासु सञ्चरन्तीषु पद्मरागरुचिमञ्चति स्म चन्द्रकान्तसोपानपरम्परा[4] । यत्र मरकतमणिस्तम्भेष्वेव[4] मालिन्यं[5] कामिनीवदनकान्तितिरस्कृताश्चन्द्रकिरण एव तृणानि चित्रेष्वेव पुरुषावलोकनं सुरलोकवर्णनेष्वेव सुरतानन्दः पुष्पावचय एव कुसुमेषु चापलम् ।

तस्य चैवंविधस्य मध्ये तप्तचामीकरकुड्यप्रत्युप्तमहामणिगणसन्दर्शितसहस्र-सूर्योदयमुल्लसद्विलासिनीवदनचन्द्रमःसमूहसमानाभिहारदुरुपलम्भशशिमण्डल-

---

१. नेर्बिडज्बिरीसचौ (पा.अ. ५.२,३२) । एतत्सूत्रानुसारेण 'निबिरीसेन' इत्येव भाव्यमिति वागीशः । २. बहुल-। ३. यत्रचर । ४. परम्पराः । ५. स्तंभेद्येव ।

मुदारमुक्ताफलकलापकुसुमकिसलयबद्धवन्दनमालं कनकवेत्रपाणिभिः प्रतीहारीभिरधिष्ठितालिन्दचारुचामरधारिणीभिः सहस्रसंख्याभिः सुन्दरीभिः सङ्कुलं दैवतमिव धरायाश्चैतन्यमिव त्रिलोक्या मुकुटमिव महीमूर्तेर्महेश्वरस्य प्रतिनिधिमिव त्रिविष्टपस्य स्वरूपान्तरमिव हेमकूटस्य मनोरथैरपि दुरारम्भमैन्द्रजालिकैरप्यदर्शनीयं तपोभिरप्यसुलभं सकलाद्भुतनिधानं विमानरत्नं विलोकयामास ।

सप्तभूमं हि लोकानां षण्णामुपरिगं स्म यत् ।
सत्यमाहूयते सत्यमाकरो दिव्यसम्पदाम् ।।२।
मणीनां यस्य कल्माषैरभीषुभिरुदित्वरैः ।
नीलकण्ठीक्रियन्ते स्म हंसा गगनसंश्रयाः ।।३।
केलिपल्वलपद्मानामाहूता यत्र सौरभैः ।
न कालागुरुधूमेषु निरणीयं तपद्वदाः ।।४।
जलयन्त्रविकीर्णेषु शीकरेषु समन्ततः[१] ।
अनृत्यन् केकिनो यत्र विनापि जलदागमम् ।।५।
विलासिनीनां वदनैर्जितो यत्र क्षपाकरः ।
सङ्कोचयति पद्मानि तेषां मित्राण्यमर्षणः ।।६।
यस्मिन्नादर्शशालासु बालानां प्रतियातनाः ।
तरन्त्यः स्वच्छसलिले नागकन्या इवाबभुः ।।७।
निषण्णं जनमभ्येत्य सूच्चरन्ती[२] सभागृहे ।
प्रत्येकं पुत्रिका यत्र निन्ये ताम्बूलवीटिकाम् ।।८।
आहते घटिकायन्त्रे स्वयं संस्कारतो जगौ ।
वसन्तमन्तरेणापि यत्र कृत्रिमकोकिलः ।।९।

तत्र भृङ्गारकमाल्यतालवृन्तताम्बूलकरङ्कवाहिनीभिराकीर्णपरिसरे पाण्डुकम्बलसंवीतसकलभूभागे विततवितानबलयिताम्बरे विविधरत्नरोचिर्धाराधौतान्तरे सुरभिसमीरशिशिरीकृतोदरे चित्रलेखाचातुर्यमनुसन्धाय दयितसमागमावश्यम्भावनिश्चयेन विदग्धसख्या रामया सपदि विविक्तीकृते विलासवेश्म निवसन्ती स्वानुरागनिगड-निःस्पन्द-मनसमसुरराजनन्दनामनिरुद्धो ददर्श । दृष्ट्वा च तामिदमचिन्तयत्—दिष्ट्या स्वप्नदृष्टस्य प्रथीयसः सुषमानिकायस्य साक्षाच्चक्षुषोर्व्यतिकरः । मनःस्थाने तरलतामातनोश्चक्षुश्चिराय वञ्चितमसि दैवेन सुप्रभातसमयसर्वेन्द्रियाणामहो चतुराननस्य

---
१. समं ततः । २. जनमभ्येत्य मुंचरन्ती ।

त्रैलोक्यातिशायिसौन्दर्यरचनाभिनिवेशः । कथङ्कारममूनि शिरीषकुसुमसुकुमाराण्यङ्गानि हन्त बंहीयसो [1]विरहज्वरानलमसहन्त । कथमिवोद्दामदुग्धपूरधवलैरकृत्रिमानुरागरसमसृणमांसलविलासवेल्लितैर्दरदलितपुण्डरीकपाण्डित्यपेशलैर्विकसितस्मितसलीलपरिवर्त्तितारकाभिरामैरनङ्गसाम्राज्याभिकैरपाङ्गविलोकितैः कठोरविरहज्वरजर्जराण्यङ्गानि शिशिरीक्रियन्ते ।

देवेन सैव सरलेन विलोचने मे
सारङ्गशावनयना शिशिरीकरोति ।
यामन्तरेण बत शारदचन्द्रपादै-
र्वृष्टिर्व्यधायि मम मर्मणि मुर्मुराणाम् ।।१०।

निमिरिव नयने मे नात्यजत् पङ्कजाक्षी
क्षणमपि ननु राकाचन्द्रतुल्यानना या ।
कथमिह विधियोगाद् दृश्यमाना दृशोः सा
वितरति मुदमुच्चैः काञ्चनी देवतेव ।।११।

वक्त्रं निर्जितचन्द्रमम्बुजवरस्वाम्येऽभिषिक्ते दृशौ
बाहू मञ्जुमृणालसन्ततिगुरू[2] हस्तौ प्रबालैः स्तुतौ ।
वक्षोजौ करिकुम्भदैवतमहो मध्यो मृगेन्द्रैर्नतो
ग्रामण्यौ कदलीकुलस्य सुतनोर्जङ्घे स्वयं श्रीरियम् ।।१२।

विरहेण तनूकृतापि तन्वी सहजाङ्कामपि न श्रियं जहाति ।
मलिनापि महातपेन गन्धरुचिरं कञ्चनवाकुलीव माला ।।१३।

श्रुतिसीमविलङ्घिलोचनेयं ज्वलयन्ती मदनानलं विशिष्य ।
सफलीकुरुते कदा नु गाढं हृदि लग्ना महतो मनोरथान्मे ।।१४।

अत्रान्तरे च प्रियमुखचन्द्रसन्दर्शनोल्लसितलोचनचकोरामनल्पपुलकपालिदन्तुराङ्गीमतर्कितोपनतत्रपातिरस्कृतोचितक्रियामुषामवलोक्य समयोचितं चित्रलेखा व्याजहार— अपि विदुषि वत्सले किमिति महाजनाचारमतिवर्त्तसे, केयमपत्रपा प्रणयपरिगृहीते निजजने । ननु गुणगृह्यालुमुपचर चिराय हृदयनिहितमर्घ्यादिभिः प्रियातिथिं यदुप्रवरम् । ततो [3]मन्दाक्षमिदमुचितमुपचारमाचरितवत्यामसुरराजदुहितरि पद्मरागपीठमुदग्रमध्यासीने प्रद्युम्ननन्दने चित्रलेखा पुनरिदमुदीरयामास—सुभगे न केवलं त्वमेव विरहवैश्वानरस्य गोचरं गताऽसि । स्वप्नदृष्टां भवतीमनुस्मरतो वृष्णिवरस्यापि कथं कथमिमे वसन्तवासरा व्यतीयुः । तथाहि—

१. विरज्वरानसहंत । २. गुरु । ३. मदाक्षमेद- ।

वाताः कम्पितचूतमौलिमुकुलाः श्रीखण्डसम्बन्धिनः
कूजत्कोकिलचञ्चरीकचटुलाः फुल्ला वनश्रेणयः ।
आपूर्णं शशिमण्डलं विदधतश्चण्डं वियोगज्वरं
सोढा मन्मथबाणविद्धवपुषा धृत्यैव यूनाऽमुना ।।१५।
उन्निद्रचन्द्रधवलाः परिवर्द्धमान-
पञ्चेषुमोहगहना यदुपुङ्गवस्य ।
आमन्दचन्दनसमीरणसेव्यमाना-
स्तन्व्योऽपि चैत्रिकनिशा न लघु व्यतीयुः ।।१६।
बिभ्रद्विशल्यकरणीमिव यो हृदि
पञ्चेषुसायकततीरपि निस्ततार ।
नैनं कुतः शिशिरयन्ति सुधासमुद्र-
कल्लोलकेलिविमलाः[१] किल ते कटाक्षाः ।।१७।
त्वन्नाममन्त्रजपजागरतोषिताया
जानीमहे विलसितं स्मरदेवतायाः ।
मुग्धे हृषीकगणशर्मरसायनस्य
यत् त्वामयं सपदि विन्दति सिद्धविद्याम् ।।१८।
एनं युवानमधिगम्य सुराङ्गनाभि-[२]
र्ध्यातं सदा श्रियमिमां सफलीकुरुष्व ।
त्वां प्राप्य [३]यौवनललामपरैस्तपोभि-
[४]रेकोऽपि विन्दतु फलं नवयौवनस्य ।।१९।
पार्वत्या जगदभिरूपमौलिरत्नं
निर्दिष्टः पतिरयमेव ते प्रसह्य ।
गान्धर्वं [५]परिणयमाचरामुना त-
न्नाम्नाऽयाल्लघुवचनं हि तादृशीनाम् ।।२०।

शकुन्तलादीनां स्वैरवृत्तिरपि शुभोदर्केति किमाख्यातव्यमाख्यानकुशलायाः प्रियसख्यास्तत्कृतं कालातिपातेनेति । ततो नाथवत्यस्मि प्रणयिसखीजनस्येति [६]मन्दमभिहितवत्या उषायाः पाणिमनिरुद्धेन विधिवच्चित्रखाऽलेजिग्रहद् व्यजिज्ञपयच्चेदम्—

---

१. -केलिलाः । इह पाठस्त्रुटितः । २. सुणांमाभि- । इहापि पाठस्त्रुटितः ।
३.यौवत- । ४. रेवोऽपि । इह भ्रष्टः पाठः । ५. परिणयमाचारामुना । ६. मन्दमभिहितचत्या ।

बाणस्यैषा दितिजनृपतेः कन्यका स्त्रीगुणाना-
मेकावासो यदुकुलमणे त्वद्गुणग्रामशुक्ला ।
गौर्या [१]धातुर्विषमविशिखस्यानुमत्या मया ते
दत्ता भूयात् ते सहचरी प्रीतिपात्रं चिराय ।।२१।

अथ प्रियापाणिपल्लवस्य स्पर्शजनिताऽऽनन्दकन्दलोद्भेदगद्गदेन स्वरेणा- निरुद्धस्तामगदत्-

मालिन्यदोषमखिलं परितो हरन्ती
हेतुः सुखस्य परमस्य महाजनानाम् ।
चान्द्री कलेव सितपक्ष उदीयमाना
प्रीतिर्दिनं दिनमये समुपैति वृद्धिम् ।।२२।

गुणैरुदारैरुपबृंहितावमू ततः समाशंसितसङ्गमौ जनैः ।
अभूषयेतामधिकं समागतौ परस्परं नीतिपराक्रमाविव ।।२३।

प्रियतमविरहेण तन्वि भूषास्तव विरहं चिरकालमन्वभूवम्[२] ।
सफलय हरिणेऽधुना ता इति सुमुखी समलञ्चकार रामा ।।२४।

मुक्तालताभिः कबरी सुकेश्या मल्लीप्रसूनैरपि रोचते स्म ।
घनेव [३]तारातितिभिस्तमिस्त्रा बलाकया नूतनकालिकेव ।।२५।

ललाटिकारत्नमभीषुमाली मुखं शशी पङ्कजलोचनायाः ।
यदप्यभातां युगपत् तथापि ग्लानिं न भेजे कबरी तमिस्त्रा ।।२६।

भ्रमन्नधस्तादलकावलीनां तस्याः स कालागुरुधूपधूमः[४] ।
श्यामत्वमेकान्तमवाप्तुकामः कामं सिषेवे ध्रुवमम्बुवाहः ।।२७।

मुक्तावलीभिर्ग्रथितान्तराला सीमन्तरत्नारुणकान्तिकान्ता ।
प्रफुल्लतापिच्छगुलुच्छनीला वेणी त्रिवेणीव बभौ तरुण्याः ।।२८।

न नासिकामौक्तिकमिन्दुमुख्या मुख्यामभिख्यां कलयच्चकाशे ।
हर्तुं सुधा दैत्यकृते प्रयातो जानीमहे दैत्यगुरुःसुधांशुम्[५] ।।२९।

चक्रे मनोभूः स्वरथस्य चक्रे ताटङ्कयुग्मं तरलायताक्ष्याः ।
नेत्रद्वयी सारथिसंयुतेन येन त्रिलोकी विजयं वितेने ।।३०।

कुशेशये कर्णगते किशोर्या दासाविवाक्ष्णोरनुपानचिह्नौ ।

---

१. धातुविषम- २. मन्वभूवन् । ३. तारजतिमि-। ४. गुरुधूमधूमः। ५. सुधाशुम् ।

विलासतिर्यग्वलितैः कटाक्षैः पतद्द्विरेफेक्षणमक्रियेताम् ।।३१।
परामभिख्यां दधती निसर्गतो विरेजतुस्तन्नयने कृताञ्जने ।
जगत्त्रयीजित्वरयात्रयोत्सुकौ स्मरस्य नूनं धृतजालिकौ भटौ ।।३२।
दृक्कोणयोरञ्जनमञ्जुरेखे प्रसाधिका कौशलकल्पिते ते ।
जानीमहे पक्ष्मललोचनायाः कटाक्षकामाशुगसूक्ष्मशल्ये ।।३३।
मुक्तावली शारदचन्द्रिकोज्ज्वला मध्ये सुमध्या स्तनयोरशोभत ।
उत्तुङ्गयोः काञ्चनशैलशृङ्गयोर्गीर्वाणसिन्धुर्ध्रुवमन्तरालगा ।।३४।
रराज तन्व्याः कुचयोः कपोलयोः पत्राङ्गुलिर्लोहितचन्दनोद्भवा ।
चिराय रागस्य कृताङ्कुरस्य किं प्रियावलोकान्नवपल्लवोद्गमः ।।३५।
करौ तदीयौ मणिकङ्कणाभ्यां स्फुरद्द्युतिभ्यामधिकं स्मभावतः ।
द्विधा विधाय स्वतनुं सवित्रा सरोरुहे किं प्रणयेन पृक्ते ।।३६।
माणिक्यकाञ्ची तनुमध्यमाया नितम्बबिम्बे[1] विललास भूयः ।
प्रदक्षिणा काञ्चनशैलसानौ नक्षत्रमालेव परिभ्रमन्ती ।।३७।
पदे पदे श्रोत्रसुखैकहेत्वोस्तुला तुलाकोटिजुषोस्तदङ्घ्र्योः ।
आमत्तहंसद्वयनादिताभ्यां लभेत दैवेन सरोरुहाभ्याम् ।।३८।
निसर्गरक्तोन्नतवर्त्तुलानां तस्या नखानां पदलक्तकाङ्कः ।
चिरं गृहीतस्य तनौ प्रयत्नादुद्वेलतारागमहोदधेः सा ।।३९।
सर्वाङ्गभूषामणिकान्तिजालेऽवलक्षकं[2] क्षौममुदारमस्याः ।
तथा तनौ नूतनभूषणानां कान्तिं पृथक् काञ्चनकाञ्चनानाम् ।।४०।
श्वाससौरभहृता मधुपालीः सान्द्रतां परिमलैर्गमयन्त्या ।
मालया विचकिलस्य विशेषात् सा बभूव रमणी रमणीया ।।४१।
पत्राणि राजतानीव ताम्बूलानि न सेहिरे ।
स्वभावादधिकं कर्त्तुं रागं तस्या रदच्छदे ।।४२।
रामया स्तनयोः स्पृष्टा ससुगन्धेन पाणिना ।
स्मित्वा प्रणयरोषेण मालयैनामतर्जयत् ।।४३।
सदृशी तव केवलं त्रिलोक्यामियमेका मुकुरे विलोक्यते या ।
इति बोधयितुं ध्रुवं वयस्याः पुरतो दर्पणपट्टमूहुरस्याः ।।४४।

१. विचे । २. कान्तिजालेललक्षकः ।

नयने च पयोधरौ तस्याः कचभारश्च सुधासुहृत्स्मितं च ।
इयतैव जगज्जितं स्मरेण श्रममात्राय पराणि भूषणानि ।।४५।
दमयन्तीदमयन्ती रतिमरतिं संनयन्ती सा ।
लक्ष्मीमपि गतलक्ष्मीं चकार कान्त्या किमितरास्याः ।।४६।
इति भूषणशालायामाभूष्य वरवर्णिनीम् ।
निनाय रमणोपेतं रामा मोहनमन्दिरम् ।।४७।
लिप्ते चन्दनजम्बालैर्यत्र चित्राणि रेजिरे ।
मयूखैर्दिव्यरत्नानां नानावर्णैर्विकस्वरैः ।।४८।
आरुह्य रुचिरा यत्र शाखामरकतैः कृताः ।
रिरिंसवः प्रियाभ्याशे शुकाश्चाटूनि चक्रिरे ।।४९।
अभ्येत्य यस्मिन् [1]माद्यन्तो मुहुर्मणिमयूरिकाम् ।
बर्हाणि मण्डलीकृत्य नृत्यन्ति स्म शिखावलाः ।।५०।
अपठन् कामसूत्राणि सुस्वरं यत्र सारिकाः ।
बन्धानभिनयन्ति स्म सयन्त्राः शालभञ्जिकाः ।।५१।
यस्मिन् मृणालिनी यत्र व्यजनैः सुरतश्रमम् ।
शमयन्ति स्म सुभगाः कृत्रिमाः परिचारिकाः ।।५२।
यस्मिन् प्रबालपर्यङ्के रेजे कुसुमसंस्तरः ।
प्रसूनधन्वना मुक्तो नूनं विशिखसञ्चयः ।।५३।

तस्मिन् मञ्जुमञ्जीरशिञ्जितश्रवणसोत्कण्ठराजहंसपोतैरनुगता पृथुपयोधरभाराभिभूततनुलता नितान्तमुद्वेलखेलदभिलाषसिन्धुमग्नमानसा मत्तमातङ्गगतिर्युवतिर्मल्लिका प्रियसखी पाणिपल्लवमवलम्ब्य सलीलमुपाविशत् ।

अथानुजानीतं मां गुरुजागरक्लमविनोदायेति दृढमुषया धृताञ्चलापि कथञ्चिदवमुच्य रामया समं स्मितमुखी चित्रलेखा निर्जगाम । [2]प्रविशेन्न वध्वा हृदि भीत्या सममकस्मादपत्रपा ।

इच्छन्ती हृदयेशवक्त्रकमलं पातुं दृशा नाशकत्
प्रष्टुं स्वागतमुन्मना वरतनुर्नोवाच किञ्चित् तदा ।
गाढालिङ्गनलालसा लवमपि स्थैर्यं न तत्याज सा ।
द्वैराज्ये स्मरलज्जयोर्निपतिता भेजे त्ववस्थान्तरम् ।।५४।

---

१. माघंतो । २. प्रविशेनववध्वा ।

विशालवक्षाश्चलकुण्डलो युवा
स्फुरन्महारत्नकिरीटकङ्कणः ।
सपीतकौशेयधरस्तरङ्गित-[१]
स्मरः प्रियां नागरिको निरैक्षत[२] ।।५५।
प्रागल्भ्यं [३]तरुणिम्नो मार्दवमपि तत्र शिशुतायाः ।
सम्भूय नेत्रकौतुकमदिशातां[४] कामतनयस्य ।।५६।

ततोऽभिलाषसहस्रविषयीकृतामनवरतहृदयकमलकर्णिकानिखातमूर्तिमुदारयौवनोल्लासविसृमरविलासां पुरः प्राणेश्वरीमवलोक्य क्षणमपि क्षपयितुमक्षमः सात्वतनन्दनश्चिन्तयाञ्चकार—कथं तावदिमामपत्रपिष्णुं नववधूमनुनयामि, न खलु मनागपि मृष्यति चिरस्य वञ्चितः संहितसायकः कुसुमधन्वा, कथमेकपदे गद्गदत्वपराहतानि वचांसि ममाङ्गान्यपि प्रायः स्वोचितक्रियासु न वर्त्तेरन्नहो [५]मोहनमहौषधीमिमामवलोकयन् कथमसः [६]संवृत्तोऽस्मि तथापि [७]धीरतावष्टम्भेन [८]व्रीडामस्या विनयेयम्, न खलु प्रथमसमागमसम्मीलिता मनोरथान् वितथयेदिति ।

विजृम्भितानङ्गतरङ्गचञ्चलो विलोक्यतां पार्वणकौमुदीमिव ।
प्रियोपचारे चतुरः प्रियंवदो जगाद धीरध्वनिरब्धिवद् युवा ।।५७।

भजमानमेव मौनमागस्विनि यदियन्तं कालमनुस्मर्यमाणोऽपि नायं जनः प्रत्याससाद सेवासु तत्सत्यमेव मन्तूयति । किन्तु भुजलतापाशसंयतस्य स्तनशिखरसमाक्रमणमलघुकालमस्य निष्कृतिः [९]समुचितावसरं वितर कुन्दकुड्मलाग्रदति दन्तदंशान् कृन्तकररुहैरकरुणमिमे पुनर्दुःसहा विषमविशिखस्य मर्मस्पृशो नाराचनिचयाः । यदि तु मदीयरतिदासजनस्य दयसे तदाकर्णय तव वियोगवेदनाविदूनस्य तास्ता दशाः स्वप्न एव [१०]श्रीमतीं नयनसुधां विधाय चित्ररूपामनुक्षणमीक्षमाणस्त्वदेकगतेन चेतसा विविधसङ्कल्पकल्पनासु क्षणलब्धसङ्गमसुखानुभवो नितान्तमीर्ष्यया कषायितयेव [११]निद्रयानभिगतस्तनिमानमनारतमुपेतस्ताम्बूलमलयजमालादिषु बद्धविद्वेष एकपद एव [१२]व्रीडाविगमादलीकविलोकितां भवतीमालिलिङ्गिषुर्मुहुरमूर्च्छम् ।

त्रैलोक्ये ललनाललामभवती चेतस्यवात्सीच्चिरं[१३]
प्रागल्भिष्ट च नूतनेन वयसा प्रोत्साह्यमानः स्मरः ।

---

१. तरंगीत-। २. निरैक्षत् । ३. तरुणिम्णो । ४. मदिषातां । ५. मोहन माहौषधी- । ६. सवृतोऽस्मि । ७. धीरतावष्टंभेन । ८. व्रीडयस्या । ९. समुचितावरं । १०. श्रीमतौ । ११. निद्रयानभिगतस्त्वनिमान- । १२. व्रीड । १३. वात्सीच्चं मप्रागल्भिष्ट ।

मन्दोद्यन्मलयानिलः प्रविलसत्पूर्णेन्दुरत्रान्तरे
मुग्धे [१]चूतमरन्दमत्तमधुपः कालश्च कोऽप्यागमत् ।।५८।

तदवधि विकचपाटलाशोककिंशुककरुणकर्णिकारतिलकदन्तुराणि विरहिदुर्निरीक्षाणि दिङ्मुखान्यसहमानो मन्दमान्दोलितमाकन्दमुकुलरेणुरूषितैश्चन्दनामोदमेदस्विभिर्मलयमारुतैरतितरामुपतप्तो रसालकिसलयास्वादमुखरमतपरभृतपञ्चमोल्लापसूचिशतक्षतश्रुतिर्मधुरमधुपानमुदितमधुकरकुटुम्बकेलिकलहश्रवणशालीनो मोहमात्रैकविश्रमः श्रमसलिलतरङ्गतरदनल्पनलिननालतल्पकठोरकामज्वरजनितवेपथुः कथञ्चिदिमानि वासराणि व्यगमयत् । क्षपाः पुनः पूर्णहरिणलाञ्छनावतंसाः सामर्षमनसिजमुच्यमाननाराचनिचयनिचुलिताङ्गो न नेतुमपारयम् ।

शैत्यमिच्छुरहमिन्दुमाश्रयस्तापमाप मतिदावपावकम् ।
शीतरश्मिरिति शब्दवर्त्तिना[२] न व्यवेचि विपरीतलक्षणा ।।५९।

सुमुखि तव मुखनिर्जितस्य विधोरुचितमेवास्मासु दौरात्म्यमथवा प्रकृत्यैवातिदारुणोऽयम् । तथाहि—

विधुमुद्ववाम [३]विषमञ्जुलराशिर्वडवानलं वहति कुक्षिगतन्तु ।
अशनायया विलुलितोऽपि च राहुः कवलीकृतं वमति सत्वरमेनम् ।।६०।
कलङ्किनस्तस्य विधोर्विलोकनान्मया यदेनः समुपार्जितं प्रिये ।
त्वदाननेन्दोर्विमलस्य दर्शनाच्चिरं चिकीर्षामि तु तस्य निष्कृतिम् ।।६१।
स्मराधिसिन्धोरयमुद्धृतो यदि प्रपद्य वात्सल्यमकृत्रिमं स्वतः ।
कुतस्तदाक्रीत इवात्र तन्यते त्रपा कृपामर्हति केवलं जनें ।।६२।
[४]विशङ्कमेतर्हि कटाक्षविभ्रमाः [५]कुणन्तु नेत्रे प्रभवन्ति किं न ते ।
विधेहि बिम्बोष्ठि पिपासितस्य मे चिराय मुग्धाधरपानपारणाम् ।।६३।
न यावदालिङ्गसि कण्ठमङ्गने [६]सुधासमुद्रोद्धतबाहुवल्लरि ।
व्रजन्ति तावन्न शमं ममोद्धता मनोजबाणज्वरसञ्ज्वरास्तनौ ।।६४।
वितीर्यतां तालफलोपमस्तनि स्तनोपपीडं परिरम्भणं प्रिये ।
परं न याचे सकृदेव चुम्बनं प्रयच्छ पीयूषरसे वितृष्णाय ।।६५।

१. नूत मरन्दमतमधुपः । २. वर्तिनृव्यवेचि ।
३. विषमञ्जल- । ४. विशंर्के । ५. कुणंनेत्रे ।
६. सुधासमुद्रो ऊत ।

धनं मदीयं शतधा समच्छिदन् प्रसह्य मे धैर्यमवार्यविक्रमाः ।
तव त्रपाकञ्चुककर्तने कथं स्मरस्य ते कुण्ठितकोटयः शराः ।।६६।

भवन्तु मूकाः कलकण्ठयोषितो मलीमसत्वं द्रुतमेतु चन्द्रमाः ।
अपत्रपन्तां हरिणीगणाः क्षणं प्रसीद मे सम्प्रति जीवनौषधिः ।।६७।

आतनोषि यमुनेऽत्र विभ्रमं लक्ष्यसे सुरतरङ्गिणी ततः ।
मज्जतः स्मर सरस्वति द्रुतं बाहुदासि मम किन्न नर्मदे ।।६८।

पर्यङ्के तव सुमनोभिरङ्गसङ्गः[1]स्मरत्वाद् ध्रुवमिह वाञ्छितश्चिराय ।
[2]वासन्ती व्रजति निशासु नेत्रे कन्दर्पः किरति शरीरकेशरौघान् ।।६९।

इति प्रियवचोऽमृतप्रभवया महत्या मुदा
हृदः किमपि संहृता हरिणलोचनायास्त्रपा ।
अपाङ्गमगमत् तदा तरुणखञ्जनद्रोहिणी ।
[3]दृगुज्ज्वलरसालसारकणवक्त्रसञ्चारिणी ।।७०।

दृष्टिः कातरतारका वरतनोर्यत् साचि सञ्चारिणी
फुल्लेन्दीवरदाममञ्जिमसखी पत्यौ [4]प्रयातोत्सुके ।
प्रारम्भे स्मरसङ्गरस्य शकुनं भद्रं तदेवाभवत्
सुप्रीतस्य मनोभुवः स्फुटमभूत् सैव प्रसादक्रिया ।।७१।

अथ कृतार्थीकुरु प्रियतमे प्रसूनशयनीयं न खलु मालतीकुसुमसुकुमारतनुलतायास्तव कठोरमणिकुट्टिमे स्थितिः साधीयसीत्यभिधाय प्रियेण पर्यङ्कमानीता[5] रम्भास्तम्भतरलोरुसन्दंशसावधाना समविशत् । प्रतिनयननिपातकातराक्षीमक्षीणदाक्षिण्य[6]-दत्तविस्रम्भामप्यतिमात्रमपत्रपाप्रतिबद्धपूर्वानुरागसङ्कल्पितसकलमन्मथमनोरथां चिरं चिरण्टीमुदीक्ष्य दुर्निवारविषयेषु बाणवेदनास्विन्नसर्वाङ्गोऽनिरुद्धः पुनरिदमभ्यधात्–अपि कातरे, विजहीहि व्रीडामकाण्डपल्लविताम् । ननु स एव स्वप्नसुरतसुखेनानुगृहीतस्तवायमङ्कपालिपात्रं प्रियतमः[7]प्रपञ्चय पञ्चबाणविशृङ्खलखेलाः सम्प्रति चिन्तनानां विहहविभावितानां मनोरथानामानृण्यञ्च[8] । किंच चन्दनरसासारसाधीयं सा हिमबालुकोद्धूलनैकधुरीणेन प्रालेयशकलशीतलेन पीयूषपङ्कपेशलेन मदनविषधरविषघ्नमणिहारेण सञ्जीवनौषधिवल्लिपल्लवेन बाहुना झगिति प्रिये शिशिरीकुरु कण्ठकन्दलीं कुसुमशरशरव्यस्य ममोरसः सपदि विधीयतामानीलमुखेन

१. स्मैरत्वाद्ध्रुव-। २. इहाक्षरद्वयात्मकस्त्रुटितः पाठः । ३. मण- ४. पयातोत्सुके ।
५. 'कमानीता' इत्यधिको द्विरावृत्तः पाठः । ६. दतविस्रभा- । ७. प्रपंचमपंच- । ८. मानृण्यमंच ।

[1]मग्नचूचुकेन परिणाहिनोत्तुङ्गेनान्तरालेन[2] कठोरमसृणेन कनककलशातिशायिनानेन कुचयुगलेन नीरन्ध्रमालिङ्ग्य चिराय निर्वृतिः ।

अथवा स्वच्छन्दमिन्दुमुखि, चन्द्रचन्दनद्रवधारेवानन्दकन्दलमुदञ्चयन्ती विरहानलतापितां मदीयवक्षोवेदिमेवाधिवसनं त्यजन्त्येव त्वदूरुकदलीस्त-म्भपरिरम्भमन्तरेण चिरन्तनो वियोगवैश्वानरोष्मा । अस्य पुनः सुकृतशतोपनतस्य जीवलोकनिरतिशयानन्दसन्दोहसाम्राज्यानुभवभद्रासनस्य मानससरःपुलिनपरिणाहिनो जघनमण्डलस्याधिकारितां धारयत्ययं जनस्तदस्तु साम्प्रतं कृतमप्रकृतचिन्ताभिः । किन्तु कमलमुखि सर्वथाऽनृणासि यदि दरदलितनीलनीरजदीर्घपाटलानवलोक्य[3] सकृत् स्मयसे ।

लालप्यमानमिति मन्मथरागवेगात्
कण्ठेन कण्ठमुपगूहितमीहमानम् ।
स्मित्वा सरोरुहमुखी दरनर्त्तितभ्रूः
कान्तं न्यषेधदसकृत् करकम्पनेन ।।७२।

न कञ्चुकीसन्धिगतं करं क्वचित् प्रियस्य सा विश्वसिति स्म कातरा ।
दृढोरुसन्दंशनिबन्धबन्धुरा कुतस्तु तं नीविजुषं विमृष्यतु ।।७३।

स्मरोपमर्दं सुकुमारकातरा सहेत बाला बलवन्न धर्षिता ।
दयालुरित्येवमनाकुलः स्म तां समन्दमाक्रामति कामुकः प्रियाम् ।।७४।

अमृष्टपत्रालिमलुप्तयावकाममुक्तधम्मिल्लधुरामुदीक्ष्य ताम् ।
तत्र त्रपामप्यनुवर्त्तते प्रियो मुहुर्वयस्य व्यहसन्निति प्रगे ।।७५।

दिने प्रतिश्रुत्य सखीषु सुन्दरी स्वयं ग्रहाश्लेषमपाकृतत्रपम् ।
दृढेन पत्युः परिरम्भमप्यहो ह्रिया न सोढुं घटते स्म सा निशि ।।७६।

मनोरथैर्भानुगतः[4] करैरिव त्रपा तमिस्रेव तिरस्कृता दिने ।
मृगीदृशो मारकुमारकूर्दनं निवारयन्ती प्रससार सा निशि ।।७७।

ललाटमाचुम्ब्य कृतक्रमे धवे विशिष्य बिम्बाधरसाधुशीधवे ।
मुखं तिरश्चीनमकारि कान्तया सुवर्णपङ्केरुहसुन्दरं तया ।।७८।

---

१. मग्न- । २. रंतरालेन । ३. पाटशावलोक्य । ४. भानुतः ।

दयिते दयस्व मम मन्मथाशुगा-
नवबुध्यसे [1]नु तरुतापितासितैः ।
विजहीहि [2]वाम्यमधुनापि तामिति
प्रियशंसितैः स विदधे वशंवदाम् ।।७९।

उपक्रान्त्या मन्दं कुसुमशरतन्त्रैककृतिना
शनैः प्रौढिं नीता हृदयदयितेन प्रियतमा ।
ह्रियं हित्वा दूरे स्मरतरुणिमभ्यामनुमता
विलासानामासीत् परमसमबाणस्य रसिका ।।८०।

पाणिं प्रियेण निहितं कुचयोर्मृगाक्षी
चिक्षेप न स्मितसुधास्नपिताननश्रीः ।
आलिङ्गिता बृहदुरःपरिपीड्यमान-
वक्षोरुहद्वयमियं विदधे न वाम्यम् ।।८१।

रागशृङ्खलितचित्तयोस्तयोस्तर्जिता बलवता मनोभुवा ।
संचुकोच परिपन्थिनी त्रपा मान्मथा विचकसुश्च विभ्रमाः ।।८२।

अङ्गमङ्गमुपनिन्यतुश्चिरादेकतामिव भृशोत्सुकाविमौ ।
अन्तरा बत वियोगपावकश्चूर्णितो नु रभसाद् व्यलीयत ।।८३।

चुम्बिता गलकपोलचक्षुषि स्फीतपीतमुखशीतदीधितिः ।
त्वं मम प्रतिकुरु प्रिये तमित्यालपन्तमबला व्यलोकत ।।८४।

केशपाशमवलम्ब्य चुम्बिता निर्दयं दशनखण्डिताधरा ।
चुम्बति प्रणपरोऽथ धाष्टर्यभाक् सा स्म विस्मितमनाः प्रियं सकृत् ।।८५।

यौवनोन्नमितनिष्ठुरस्तनी भूय एव हृदये न्यधीयत ।
भूय एव रमणेन रागिणा सुभ्रुवोऽधरमधु न्यपीयत ।।८६।

तत्कुचौ कलभकुम्भविभ्रमौ कान्तपाणिजयदैर्विरेजतुः ।
सङ्कुले कुसुमबाणसङ्गरे हेतिविक्षततनू भटाविव ।।८७।

सुभ्रुवः कुचगिरिं चिरं श्रयन् रोमराजिपथमेत्य तत्करः ।
लङ्घितत्रिवलिसङ्कटस्थलः प्राप नाभिनलिनीनिमज्जनम् ।।८८।

मत्करस्य सुचिरं तपस्यतस्तन्वि ते स्तनधराधरोपरि ।
तीर्थमेत्य तव नाभिमद्भुतं नीविलम्भनमिदं न साम्प्रतम् ।।८९।

---

१. इदं पाण्डुलिपौ नास्ति । २. वाम्यधुनापि ।

इत्युदीर्घ पुलकालिदन्तुरं स्तम्भयन् परमथ प्रियः करम् ।
आनिनाय दृढनीविबन्धनं[1] सुभ्रुवो जघनमण्डलं महत् ।।९०।
युग्मम्

नीवीं विघट्टयति[2] नायकपाणिपद्मे
पद्मेक्षणा प्रतिबबन्ध दृढं कराभ्याम् ।
[3]ह्रीसङ्कुचत्तरलकातरविस्मिताक्षी
नाभीनितम्बजघनं वृणुते स्म भूयः ।।९१।

अपावृतं तेन हठेन तस्याः काञ्चीनिनादैर्जघनं रराज ।
यथा मदाराविमरालमालं जम्बूस्रवन्त्याः पुलिनं विशालम् ।।९२।
जाम्बूनदस्ते [4]भवितुं विकान्तेरुरुद्वयात् स्निग्धतमा तरुण्याः ।
चक्राकृतेः किञ्च नितम्बबिम्बाच्चिराय पत्युर्न चचाल चेतः ।।९३।
[5]रराज रम्भा रुचिरं नताङ्ग्या उरुद्वयं पाणिपयोरुहेण ।
परामृशन् काञ्चनगण्डशैलशोभं नितम्बं च ननन्द भूयः ।।९४।
क्व स्निग्धतेयं करिणां करेषु स्तम्भेषु हेम्नो मृदुता क्व चेयम् ।
संस्थानसौभाग्यमिदं कदल्याः काण्डेषु कुत्रेत्यसकृज्जजल्प ।।९५।
रोमावली शैवलशोभिता सा नाभीमहावर्त्तमनोज्ञकान्तिः ।
शीतान्यकार्षीस्त्रिवलीतरङ्गैरङ्गानि शृङ्गारसरित्प्रियस्य ।।९६।
अम्भोजगर्भच्छविकोमलस्य दोर्मूलमध्यस्थविलासवत्याः[6] ।
स्तनद्वयस्योन्नतपीवरस्य विलोकनात् तृप्यति न स्म कान्तः ।।९७।

अथ बृहदुरःकपाटपीडितपृथुपयोधरमधीरस्मेरतरलतारकमालोलविलुलितधम्मिल्लस्खलितगर्भकमाचुम्बितकवलितनिपीतनयनकपोलदन्तच्छदमुदारसीत्कारश्वसितमनुकृततरुणमत्तपारावतकुहरितकूजितमभिहतोरःस्तनान्तरमुल्लसन्नखलिखितनितम्बबिम्बमवगलितमेखलागुणमनवेक्षितसौकुमार्यमुपचितमन्मथावेशमुल्लङ्घितकामतन्त्रमास्फालिततुलाकोटिकृतक्वणितमगणितश्रमसलिलबिन्दुतुन्दिलकपोलपालिकण्टकितगात्रमतिमात्रमुत्कलिकाकुलसकलेन्द्रियमलब्धविश्राममलघुश्रमशिथिलसर्वावयवमानं वरसातिशयमोहमुकुलितनेत्रपङ्केरुहमवर्त्तत कुसुमकाण्डकेलिप्रपञ्चः ।

---

१. नीविंवधनं । २. विधद्वयति । ३. ह्रीसंकुचतरल-। ४. भविदुं । ५. सरजरम्भा ।
६. विलासन्यवसाः ।

आलोलधम्मिल्लपतत्प्रसूना दरस्फुरत्पीनपयोधरा सा ।
दिगम्बरीभूतबृहन्नितम्बा शातोदरी कामपि कान्तिमाप ।।९८।
आः किमेतदलमालयः क्व मे मुञ्च साहसिक मां[१] च निर्दय ।
स्तोकमप्यहह किं न लज्जसे पादयोस्तव पतामि किङ्करी ।।९९।
युग्मम्
धृष्टया मदनरागमत्तया कान्तकण्ठकृतबाहुपाशया ।
यद्यदेवमुदितं मृगीदृशा तेजनं तदभवन्मनोभुवः ।।१००।
पाणिपल्लवविधूनना पुनर्गूहनं जघनमण्डलस्य च ।
क्रन्दितान्यपि च कातरा गिरः साभिलाषहसितानि च क्षणम् ।।१०१।
सामि शोणनयनं निरीक्षणं निःसहैरवयवैश्च विश्रमः ।
सस्मितानि परुषाणि सुभ्रुवः प्रेयसि स्मरशरोग्रतामधुः ।।१०२।
युग्मम्
नेति नेति मृदिता यथा यथा सा जजल्प मधुरं मृगेक्षणा ।
[२]भूय एव ववृधे तथा तथा कामिनः सुरतरागसम्भ्रमः ।।१०३।
सुवर्णवल्लीव नवं तमालं तन्वी तमालिङ्ग्य भृशं स्मरार्त्ता ।
प्रभातपङ्केरुहमञ्जुलाक्षी रोमाञ्चरम्या पटु सीच्चकार ।।१०४।
मौक्तिकैस्त्रुटितहारविच्युतैराचितं [३]शयनमाबभौ तयोः ।
किं प्रसूननिकरै रतोत्सवे तुष्यता मनसिजेन पूरितम् ।।१०५।
विलुलितकबरी भृशालसाक्षी नवदशनव्रणवर्द्धिताधरश्रीः ।
स्मितसुभगमुखी प्रियस्य तेने परिमृदिता दयिता दृशोर्विनोदम् ।।१०६।
[४]दरमन्थरतारके ह्रिया स्मितमुग्धे श्रुतिसीमलङ्घिनी ।
सुदशश्चिरमाययौ प्रियो नयने मत्तचकोरचेष्टिते ।।१०७।
त्वरितामतिलज्जया ग्रहीतुं वसनं लोलविलोचनां नताङ्गीम् ।
परिरभ्य दृढं प्रियो भुजाभ्यां न मुहूर्तं विससर्ज विस्फुरन्तीम् ।।१०८।
इहैव मुग्धे निहिता दिवानिशं [५]ममासवः प्राणधनाधिदेवता ।
क्व साम्प्रतं यास्यसि न त्वया विना क्षणेऽपि जीवामि यतः सुमध्यमे ।।१०९।
इमौ पृथुतुङ्गतरौ तव[६]स्तनौ न वै सहेते विरहं ममोरसः ।
[७]इतीरयित्वा हृदये पुनः प्रियां निधाय गाढं स चिराय सस्वजे ।।११०।

१. सं च । २. भूयष्टव । ३. शयनमानवभौ तयोः । ४. द मन्यर- । ५. ममावसः ।
६. स्तनैनवै । ७. इती रपित्वा ।

युग्मम्-

उद्वेलरागरसयोः पुनरेव यूनोरासीदहो विविधबन्धविधानरम्यः ।
प्रत्यग्रवत् प्रियतरः सुरतप्रबन्धः को हीन्द्रियार्थमुपभुज्य[१] लभेत शान्तिम् ।।१११।

प्रार्थनं न विपरीतरतेः सापत्रपिष्णुरपि मोघमकार्षीत् ।
आचरन्ति सरसं हरिणाक्ष्यः किं न वल्लभजनानुनयेन ।।११२।

स्वेदसिक्ततनुराकुलालका सा रराज यदुवीरवक्षसि ।
स्पन्दमानमकरन्दसन्ततिश्चम्पकस्रगिव षट्पदावृता[२] ।।११३।

वैयात्यं व्यपगतमम्बुजेक्षणा या
व्रीडैव [३]प्रसभमुपागता रतान्ते ।
आहार्यं कतिपयकालमस्तु यत्नाद्
दुर्लङ्घ्यः परमिह देहिनां स्वभावः ।।११४।

कथमप्यवमुच्य वेदिमध्या मदिराक्षी हृदयेशबाहुपाशान् ।
अतितुङ्गतरस्तनी तनीयो वसनं व्याकुलकुन्तला बभार ।।११५।

इत्थं विचित्रसुरतोत्सवमन्वभूतां
लोकत्रयीतिलकतां दधतौ युवानौ ।
एका गृहीतवसना निषसाद भूमा-
वन्यो महामणिमये तपनीयपीठे ।।११६।

नखदन्तपदाङ्कितं सुमौग्ध्यादरे रञ्जितमञ्जसाऽञ्जनेन ।
हृदि यावकचिह्नितं हसन्ती हृदयेशं ललना मुहुर्ददर्श ।।११७।

अत्यर्थमायासितासि प्रियतमे तदानृण्यमस्य चिकीर्षामि तव प्रसाधनेनेत्यभिदधानोऽनिरुद्धो विदग्धरचनारमणीयमाकल्पमकल्पयत् ।

बबन्ध वेणीं नवबन्धबन्धुरां लिलेख पत्राणि कपोलयोः कृती ।
उरोजयोः स्थासकसम्पदं व्यधाद् विचित्रलाक्षारसरञ्जनं पदोः ।।११८।

विभूष्य सर्वावयवान् विभूषणैस्तमालपत्रं विरचय्य कौङ्कुमम् ।
प्रयच्छ मे चुम्बनमम्बुजेक्षणे पणे[४] प्रहस्येति चुचुम्ब स प्रियाम् ।।११९।

एवं निरन्तरितमानसयोरुदञ्चत्-
प्रेमानुकूलपरिहासरसार्द्रयोः सा ।

---

१. को हींद्रियार्कसुय भुज्य । २. षद्वरावृत्ता । ३. प्रसभु- । ४. पणप्रहस्येति ।

पल्यङ्कमेकमधिशय्य चिरस्य यूनोः
सञ्जल्पतोः प्रियकथा व्यगमत् त्रियामा ।।१२०।

अथोत्थितामार्द्रनखक्षताङ्कितपयोधरामधरमणिव्रणविलज्जितामतिजागरकषायितालसलोचनामुषामुषसि पश्यन्तीनां नर्म सखीनां न चिरं विरराम । साकूतस्मितमनिरुद्धस्तु स्वगृह इवानुभूतस्नानानुलेपनपानभोजनादिक्रियश्चित्रलेखादिचतुरसखीभिः प्रतिक्षणं प्रतीक्ष्यमाणो गूढ एवं न्यवात्सीत् ।

वलयाङ्कितकण्ठमम्बुजाक्षीस्तनकाश्मीरकलङ्कितोरसं तम् ।
हृदि यावकचिह्नितं हसन्त्यस्त्रपयामासुरुषां सदैव सख्यः ।।१२१।

तदङ्गरागारुणितां वहन् युवा घनस्तनालिङ्गनसाक्षिणीं स्रजम् ।
श्रुतिर्विपञ्च्यां मदताम्रलोचनो दृशं प्रियास्ये निदधे दिवानिशम् ।।१२२।

चटुप्रियायाः स निशम्य सुन्दरो न तां विपञ्चीमपि [1]बह्वमन्यत ।
अवाप्य साक्षाल्लहरीं सुधोदधेः क आद्रियेतेन्दुमयूखविप्रुषम् ।।१२३।

कदाचिदुचितेन हल्लीसकेन कदाचित् क्रीडापर्वतकवनविहारेण कदाचित् केलिदीर्घिकाकमलकाननगूढगृहसुरतसुखेन, कदाचित् प्रमदवनमाधवीनिकुञ्जनिवेशेन, कदाचिदुच्चैश्चन्द्रशालामलङ्कृत्य सह सरोरुहाक्ष्या चन्द्रतारकाद्यवलोकनेन, कदाचिद् विचित्रचित्रनिर्माणकौतुकेन, कदाचिद् वीणादिवाद्येन, कदाचित् सरसकाव्यविनोदेन समयमतिवाहयन् क्षणमपि हृदयदयिताया विरहमसहमानस्तदालपितैकतानश्रुतिस्तदाननेन्दुचन्द्रिकास्वादलुब्धलोचनचकोरश्चिमरमत । उषापि त्रिलोकीललामलावण्यसम्पदः प्रियस्य सस्मितावलोकितवल्गुसंलपितैर्विधेयीकृता स्वप्नेष्वपि तमेव पश्यन्ती कदाचिदुद्गाढनिद्राभरेण क्षणमपि विघ्नितावलोकनसुखा नितान्तमतप्यत ।

वदनेन्दुविलोकनोत्सवे न सहेते स्म निमेषमन्तरम् ।
अनुसन्दधतुः परस्परं न च भेदं वपुषोर्विलासिनौ ।।१२४।

एवमनयोरतिभूमिमारुरोह परस्परानुरूपरामणीयकविनयवैदग्ध्यवर्द्धितोऽनुरागबन्धः । एकदा तु दिवसावसानसेकशिशिरासु विकसितमल्लिकालतासु प्रमदवनवीथीषु विहरन्ननिरुद्धः प्रियामिदमुदाजहार–

सायं स्नानजडेषु यत्र शिशिरैः श्रीखण्डपङ्कद्रवै-
र्लिप्तेषु[2] स्तनमण्डलेषु सुदृशामासाद्यते विश्रमः ।
आप्रत्यूषकठोरपूषकिरणैस्तप्तैः परं कामिभिः

---

१. वद्धमन्यत । २. द्रवैलिभेषु ।

पश्य प्रेयसि रागिणां प्रियतमः सोऽयं निदाघोदयः ।।१२५।

तन्वन्तः कृकलासमूर्द्धसु महालौहित्यमत्यद्भुतं
[1]शैलेन्द्रेषु शिलाजतूपजननाद् येषूष्मिकां[2] कुर्वते ।
प्राप्ताः सम्प्रति नालिकेरपयसां सान्द्रीक्रियाकोविदा-
स्ते शैथिल्यकरा वियोगिमनसां धैर्य्येष्वमी वासराः ।।१२६।

परिणतसहकारच्छायमाश्रित्य पान्था-
स्तरुणतरणिरौद्रं मध्यमह्नो महीपः ।
लवमिव गमयन्ते ही प्रपापालिकानां
तरलितनयनानां सस्मिताभिः कथाभिः ।।१२७।

शिशिरमुदकं कौपं छाया वटस्य विनोदिनी
सुनिहितशिलाः शय्या वाताश्च पाटलवासिताः ।
विविधविषया यातैर्मध्यन्दिने पथिकैः समं
विरमतु कथं गोष्ठी ग्राम्यैः कृता कृषिपारगैः ।।१२८।

वाताः पाटलमल्लिकासुरभयः श्रीपर्णरेणूत्करै-
राकीर्णाः सहकारबिल्वपनसामोदैर्दिशो वासिताः ।
सायाह्ना रमणीयतैकनिधयः सार्द्धं पयःकेलयः
कान्ताभिः कतिचिद् गुणाः सुनयने ग्रीष्मस्य लोकोत्तराः ।।१२९।

शिशिरचन्दनचारुपयोधराः श्रवणलम्बिशिरीषमनोहराः ।
विचकिलप्रसवैः कृतभूषणा मृगदृशो विजितातपदूषणाः ।।१३०।

कर्पूरद्रवदीर्घिकास्तलगृहाः पाटीरनीरच्छटा
वाताः शीतलतालवृन्तजनिता रम्या उशीरालयाः ।
धाराशीकरवर्षिणश्च निलयाः शय्याः शिरीषैः कृताः
कान्ताः कोमलपल्लवाश्च सुकृतामुष्णं विमुष्णन्त्यलम् ।।१३१।

राजेव प्रकरोति कर्कशकरस्तातं प्रजानां रवि-
र्नीतिज्ञं कमलेव च स्वयमहो निद्रा जनं गाहते ।
नश्यत्यव्यवसायिनो धनमिवाभीक्ष्णं ह्रदस्योदकं
वृद्धिं याति वनस्य पावकशिखा चिन्तेव वर्गच्छतः[4] ।।१३२।

---

१. शैलेंषु । २. जननाद्येवूष्मिकां । ३. सा या ह्ना । ४. वर्गछतः ।

किरति परितो भानौ भानून् महोल्मुकवर्षिणः
कलयति भुवःशश्वद्धूलीचये च कुकूलताम् ।
अमृतममृतं छत्रं छत्रं भवत्यखिलावने:
क्वचिदपि गता छाया छायामुपैति दिवः पथि ।।१३३।
मरीचिकावीचिभराचिता दिशः पदे पदे पादनखम्पचा मही ।
पतन्ति मध्याह्नमहातपातुराः पलाशिमूले पथिका विचेतसः ।।१३४।
पायं पायं पयः कामं कलविङ्काः पिपासवः ।
अहम्पूर्विकया स्नान्ति श्रीह्रदे घर्मविक्लवाः ।।१३५।

अहो महातपेन सत्त्वानां वैचित्त्यम् । तथा हि—

शुण्डाशीकरसेकमिच्छति हरिः स्तम्बेरमस्योन्मुखः
शार्दूलस्य शशाः स्पृशन्ति परितः स्विन्नां तनुं निर्भयाः ।
[1]व्याघ्री श्लिष्यति पल्लवलादुपगतानेकैकमार्द्रान् किरीन्
फेनोद्गारपृषन्ति लेढि च शयोः सद्यः प्रसूता मृगी ।।१३६।
धावित्वा सिकतिलभूतलेऽम्बुबुद्ध्या
ताम्यन्ति श्रमशिथिलाश्चिरं कुरङ्गाः।
तृष्णार्त्ता मृदुवचनैर्विलोभ्यमानाः
सेवित्वाऽर्थिन इव बद्धमुष्टिमीशम् ।।१३७।
चिरादुत्सृष्टपानीयः परुषाणि रटन् बहु ।
प्रायः प्रायोपविष्टोऽयं निदाघे चातकद्विजः ।।१३८।
विकारमायान्ति सुनिर्मला अपि स्पृशन्ति कालस्य गुणा बलान्न कम् ।
पयः प्रकृत्या शिशिरं परिस्फुटं निदाघदोषेण यदुष्णतामधात् ।।१३९।
कविता इव कुकवीनां विच्छिन्ना नीरसाः शिखरिनद्यः ।
निर्भरसलिलमलक्षितमायुरिव प्राणिनां स्त्रवति ।।१४०।
शीतलेषु सरितां शयितानां सैकतेषु परितः पथिकानाम् ।
अव्यपोह्य नितरां शयनेच्छां सुप्रभान्ति सहसैव रजन्यः ।।१४१।

---

१. व्याघ्री ।

संक्षुभ्यत्तृणपर्णधूलिवलयैरालक्षिता दूरतो
ग्रामीणैः पटलावपातचकितैरुच्चैः कृतोद्घोषणाः ।
[१]आधूतद्रुममौलया नियमितब्रध्नप्रभामण्डला-
श्चित्रं [२]यानि नयन्त्यहानि विपुला वात्याः करीषङ्कषाः ।।१४२।
आरब्धमेतदखिलं किमु तेजसैव
विश्वं विधूय [३]विधिनेतरभूतजातम् ।
[४]कान्तस्य निर्गतवतः कुसुमाकरस्य
सन्तप्यते [५]नु जगती विरहज्वरेण ।।१४३।
विकसितशतपत्ररेणुगौरं न च नलिनीदलसंवृतामलाम्बु ।
मधुरमधुपगीतिमञ्जु सायं तरलपतत्रिसरः सुखाकरोति ।।१४४।
यत्सायन्तनसेकशीतललतासौरभ्यगर्भानिले
सौधे मुग्धसुधाधरांशुधवले सार्द्धं कुरङ्गीदृशा ।
कामं पश्चिमयामदीपितमनोजन्मा सुखं नीयते
नैदाघी रजनी जनैः परिणतिस्तत्पूर्वपुण्योन्नतेः ।।१४५।
उत्तुङ्गेषु प्रौढकान्तास्तनेषु व्यापारश्चेच्चन्दनं स्थासकस्य
[६]न स्यादेकः कामुकानां तदानीं द्राघीयांसो वासरा न व्यतीयुः ।।१४६।
इति शुचिमुचितैस्तदा वचोभिर्ललितपदैरुपवर्णयन्[७] कुमारः
अरमत रजनीं तपर्तुरम्यां प्रमदवने विनयन् प्रियासहायः ।।१४७।

एवमनयोरनेकस्थानभूषणवेषविषयवैदग्ध्यसमयसौहार्दसम्पदा वैचित्र्यमानीयमानो भूय एवोल्ललास रतिरसः । नाशक्यत निरर्गलस्य मनोजन्मनः स्वैरवृत्तिर्निरोद्धुम्। के हि नाम बलवतः कुसुमकार्मुकस्य तपस्विन्यौ भीतिलज्जे । निपुणमालिभिर्निगूहितोऽपि सोऽर्थः शनैर्विवृतिमुपयन् क्रमेण कन्यावरोधरक्षिभिरवधार्य भीतभीतमाबद्धवेपिताञ्जलिप्रार्थितप्राणरक्षणं बाणस्य कर्णमनीयत विज्ञापयाम्बभूवे च । सर्वथा वयमपराध्नुमः[८] किन्तु नक्तन्दिनमवहितैरप्यस्माभिर्न मनागपि[९] तदागतिरलक्ष्यत नूनमन्तर्द्धिसाधकमणिमन्त्रादिबलेन कुहकः स दुरचेष्टत परं देवः प्रमाणमिति ।

स तदाकर्ण्य प्रबलरोषरक्ताक्षो दष्टदन्तच्छदो दन्दशूक इव पादघट्टितो

१. आधूतद्रुममौलपा । २. यामि । ३. विधिनेनतरभूतजातम् ।
४. कां तस्यः । ५. भुजगती । ६. तस्मादेकः । ७. पदैरुपवर्णमत् कुमारः ।
८. वयमपराधुमः । ९. सनागपि ।

दीर्घमुच्छ्वसन्नीषदस्पष्टमाचष्ट–आः कः कालदर्वीकरस्य दंष्ट्रामाक्रष्टुमोजायते । कः प्रबलदावानलज्वालावलीमिमामाचामति[१] । केन यथाजातेन [२]जीवनिरपेक्षमिदमचेष्टि । कः परेतनेतारमवलोकितुं त्वरते । श्लाघनीयं तु साहसिक्यमस्य मुमूर्षोर्येन मामप्यविगणय्य कालकूटमेतत् कवलितमद्यैव पश्यत्वस्य दुर्नयस्य फलमेष पापीयान्[३] । व्रजत रे [४]लोकपालानामप्यन्यतमस्य तस्योज्जासयत । नामुष्य चित्रवधवार्त्तामन्तरेण स्वास्थ्यमालम्बते मदात्मा ।

ततो गृहीतहेतिराबद्धभीषणभ्रुकुटिरुद्दामदनुजभटा किङ्करुथिनी प्रतस्थे प्रविवेश च किं किमेतदिति निषेधन्तीनां प्रतीहारीणां कन्यान्तःपुरभोगभवनम् । अनिरुद्धस्तु सार्द्धमुषयाऽक्षैर्दीव्यन् दक्षिणाक्षिस्पन्दमुद्दिश्य दूयमानां तामनुरञ्जयन्नाकस्मिकं सैन्यकोलाहलं निशम्य[५] स्मयमान उदतिष्ठत्[६] । तदनु पर्यस्फुरन्नाकृष्टकृपाणपाणयः [७]कतिपये दैत्ययोधाः ।

अथ विकोशकरवालकरालकरैः किङ्करैः परिनिरुध्यमानमनिरुद्धमालिलिङ्ग वाताहता कदलीव कम्पमाना [८]दैत्यराजनन्दना मुक्तकण्ठमाचक्रन्द । स्वयंग्रहाश्लेषसुखमनुभूय तामाश्वासयन्ननिरुद्धः सहर्षमिदमुच्चैर्व्याजहार-

मुग्धे, रोदिषि किं मुधा तव यतो [९]वेलेयमानन्दितुं
प्राणप्रेयसि सम्भ्रमो विरमतु स्वैरं समालोकय ।
[१०]मद्दोर्दण्डपवित्रपातविगलन्मस्तिष्कपङ्कप्लुते-
रेते सम्प्रति जर्जरैरवयवैरावृण्वते मेदिनीम् ।।१४८।

अत्रान्तरे च चित्रलेखा समुपागतस्मृतिर्नारदं सस्मार । स चान्तरिक्षमधिष्ठाय[११] मोदमानोऽनिरुद्धमिदमगृणात्–

स्वस्ति तेऽस्तु वीर वैरिणो विजयस्व । मा च भैषीस्त्वदरिपुरमागतोऽस्मि । शुभोदर्काश्च मादृशां प्रवृत्तयः । ततस्तमभिवाद्य प्रमदमदभ्रमुपगतः समरसमारम्भरभसपतत्पादाघातेन घूर्णितामिव क्षितिं विदधानः किञ्चिदुन्मिषितरोषरमणीयस्मितः सात्वतपुङ्गवः सौधादवरुरोह । ते च शार्दूलसम्पातचकिता वृका इव किञ्चिदपसृत्य यूथशो बाणवर्षैस्तमवाकिरन्नत्यजंश्च[१२] युगपदेव शक्तिशूलमुसलमुद्गरपरशुपरिघप्रासधाराः ।

असौ पुनः शुन इव तानगणयन् मत्तमात्तङ्गविलसितः स्वबाहुपरिणाहिनं कालायसमयं[१३] द्वारपरिघमादाय कन्यान्तःपुरप्रतीहारस्यालिन्दपरिसरमाश्रितस्तानतर्जयद-[१४]

---

१. ज्वालावलीमां । २. जीवति- ३. पापीयात् । ४. लोकपालानामस्यन्यतमस्य । ५. मिशम्म । ६. उदतिष्ठतदनु । ७. कतिपेये । ८. दौत्य- । ९. वेलेपपमा-। १०. मद्दोर्दण्डयविप्रपात- । ११. मविष्टाय । १२. न्नत्यजांश्च । १३. कालापसमयं । १४. चौरादिकस्तर्जधातुरात्मनेपदीति वागीशः ।

पोथयच्च कांश्चिदभिपततः कालदण्डदुःसहेन परिघेण । ते च यथाप्राणं प्रहृत्य सङ्घशः परिघपातेन पतन्तः क्षरत्क्षतजमांसमेदोमेदुरां मेदिनीमकुर्वन् । सुकर्मणस्तस्य रोमहर्षेण परिघवज्रव्याघातेन तेषु विरल एवायुष्मान् विरल एव च धृतिं दधार ।

परिघाघातनिष्पिष्टकीकशग्रन्थिसन्धयः ।
हृतशेषास्ततो योधा बाणं गत्वेदमब्रुवन् ।।१४९।।

देव, न पारयामः सर्वातिशयालुपौरुषस्य तस्य पुरोऽवस्थातुमतिमानुषाण्यतिदैवतानि चास्य कर्माणि । गम्भीरभीषणश्च संरम्भः । अदृष्टपूर्वमौदार्यम् ।

तथाहि–

तिग्माग्राः परिषहते [१]सिनीमुखाली-
रस्माकं कुसुमततीरिव स्मितास्यः ।
तत्पाणिप्रशिथिलहेलया प्रयुक्ताद्
वीराणामपि परिघादियं दशा नः ।।१५०।

स तु श्वासभूयिष्ठमतिकातरमालपतस्तानुदीक्ष्य क्रोधताम्राक्षः कोऽयमतिसम्भ्रमः। कापुरुषाः पदातिपरमाणोरित्यधिक्षिपन् पार्श्ववर्त्तिनोऽन्यानवालुलोके । ते च तूर्णमापीडकुसुममधुधाराभिरस्य चरणनखशिखाः समुक्ष्य समरलालसाः साङ्गमिकैः स्यन्दनैः समचरन्[२] ।

अत्रान्तरे च चिरं चरित्वा व्योमकासारहंसो हंसोऽस्तमियाय । फुल्लतमालनीलनीरन्ध्रतमिस्रा प्रावर्त्तत । अतिकरालकोटराक्षाः केशश्मश्रुशोणिताशाः शोणिताशाः [३]पर्यधावन् । मुकुटमणिप्रभापुनरुक्तदीपिकोपक्रमास्तेऽनिरुद्धमभ्यपतन् ।

वन्यैर्गजैरिव ततोऽयुतशो धरित्री
प्रावृट्पयोदनिवहैरिव पूरिता द्यौः[४] ।
दैत्यैः सह प्रमथभूतगणैरुपेतै-
रुद्घूर्णकुन्तकरवालगदापृषत्कैः ।।१५१।

आकाशादवनेर्दिशश्च विदिशः सन्दष्टदन्तच्छदैः
सृष्टा वृष्टिरजिह्मगस्य परितोऽवर्त्तिष्ट जिह्माशयैः ।
नाकं पिष्टघनाम्बुभिः सगिरिवन्नाकम्पयन् मर्वशो

१. शिनीमुखाली- । २. समचरं । ३. पर्यधावत् । ४. पूरिताघौः ।

नाकं किञ्चन चान्वपद्यत कृती नाकं तपन् विद्विषः ।।१५२।

स्वीकृत्य साहसमनल्पमनेकमार्गै-

रद्वैतवाद इव वादवरैः समन्तात् ।

सम्भूय भूरिदितिजैः स विखण्डितोऽपि

न व्याकुलत्वमगमन्निगमोपपन्नः ।।१५३।

यदा यदा प्रपतति स स्म तोमरं

रणे च्युतं पृथु परिघं प्रगृह्य च ।

सुरद्विषां निपतितहेतिमण्डलं

तदा तदा भुवि शतधा व्यकीर्यत[1] ।।१५४।

विक्रान्तानां रक्तसिक्ताननानामुत्खड्गानां धावतां श्मश्रुलानाम् ।

तालानीवापातयत् [2]खड्गपाणिर्दैतेयानां वृष्णिवीरः शिरांसि ।।१५५।

अथ प्रमथवरैरसुरप्रवर्हैश्च स्वपक्षक्षयमुदीक्ष्य तीक्ष्णकौक्षेयककरैरभीक्ष्ण-क्षुण्णशस्त्रैर्युगपन्मण्डलीकृत्य कुमारमभिभवितुमुपाक्रम्यत । स तु कस्यचिदाच्छिद्य चन्द्रहासचर्मणी भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं प्लुतमित्यादिमार्गानाचरन्नीहार-जालमिव मिहिरो वैरिबलं विदारयामास । एकमपि तं कृतकायव्यूहमिवानेकमव-लोकयन्तः करवालमयीरिव दिशो मन्यमानाश्छर्दितक्षतजधारारुणितधरणयोऽसुरसैनिकाः पराबभूवुः ।

चर्मच्छिन्दन् वारबाणान् विभिन्दन्नस्थिग्रन्थीन् सध्वनि द्राक् च वृश्चन् ।

दैतेयानां खण्डयन् [3]कालखण्डं तस्याक्रीडन् मण्डले मण्डलाग्रः ।।१५६।

अलातचक्रतरले कालदंष्ट्रापरिवर्त्तकराले तस्य करवालचक्रवाले कृत्तभुज-शिरोधरोरुकरपूर्वकायान् स्फुरतोऽभ्यमित्रीणानवलोक्य पुलकिताङ्गाः प्रतिप्रजीक-विगलितकीलालधाराः परस्परस्योपरि पतन्तो हतशेषा दनुजभटा बाणमुपगम्य लज्जया न किञ्चिदूचुः । तांस्तथाविधानुदीक्ष्य भ्रुकुटिटङ्कितटः स्फुरदोष्ठः[4] प्रबलमरातिमभिमन्यमानो दानवपतिः [5]समराय स्वयमुदयुङ्क्त ।

अरुणपताकमुद्धुरतुरङ्गसहस्रयुतं

प्रचलितकिङ्किणीक्वणितमिश्रितमन्द्ररवम् ।

१. व्यकीर्यते । २. वद्ग । ३. कालं खण्डं । ४. स्फुरदोष्टः । ५. समरोयस्वयमुदयुंक्त ।

वलयितऋश्यकृत्तिमधिरोपितशस्त्रगणं
रथवरमारुरोह दशनल्वमितं स ततः ।।१५७।
शूलासिप्रासचर्मस्वधितिगुरुगदापट्टिशांश्चापबाणौ[१]
बिभ्रद्दोर्भिः स्थवीयः परिघपृथुतरैर्बद्धवर्माङ्गुलित्रः ।
त्रैलोक्यं निर्दिधक्षन्निव निजमहसा रोषरक्तेक्षणश्रीः
श्रीमान् कुम्भाण्डनुन्नैरथ रथतुरगैरापतद् दैत्यराजः ।।१५८।

अपश्यच्च बहलकीलालपिच्छिले जानुदघ्नपललपङ्कप्लुते दैतेयकबन्धबन्धुरे निपतितकरितुरगशिरःशरीरसहस्रसङ्कटे कन्यान्तःपुरद्वारपरिसरे पिशङ्गवाससमभिनवतमालनीलमुल्लसिततारुण्यमनर्घहारकेयूरकटकुण्डलमाजानुभुजमम्लानमल्लिमाल्यमुत्तमाङ्गनाकुचकलशकाश्मीरकर्दमकलङ्कितोरसमसम्भ्रान्तप्रसन्नसहजोर्जितं सुन्दरावलोकितमरातिरक्तबिन्दुकन्दलितवदनकान्तिमसिलताद्वितीयं गन्धगजप्रतीक्षयावस्थितं कण्ठीरवकुमारमिव यदुप्रवरम् । दृष्ट्वा च तमिदचिन्तयत्—

सोऽयं नः पृतनाप्रमाणचपलो[२] बालोऽतिवीरायते
वैयात्यं महदस्य साहसकृतः श्लाघ्यं किलैकाकिनः ।
सोढा सम्प्रति वज्रपातविषमान् बाणस्य यन्मार्गणान्
नाकं नाकविकल्पकल्पपदवीं जीवस्तदारोक्ष्यति[३] ।।१५९।

कुम्भाण्डस्तु सुरासुरैरप्यधृष्यप्रभावमदुदात्तप्रकृतिमगणितबाणसुरसंरम्भं तमवलोक्य मनसि विचारयामास—

यस्याकर्ण्य विनिर्गमं स्वभवनान्मन्थाद्रिनिर्लोडन-
क्षुभ्यत्क्षीरसमुद्रसाम्यमयते स्वर्गः समग्रो द्रुतम् ।
पौलोमीपतिरप्यनल्पपवनप्रेङ्खोलितस्याम्बुज-
व्रातस्यानुविधायि मङ्क्षु वहति व्यग्रः सहस्रदृशाम् ।।१६०।

तस्य दैत्यपतेर्बाणस्य साक्षादभियोगेऽपि निष्प्रकम्पस्त्रैलोक्यमहनीयमहिमा महाकुलप्रसूतिः कोऽपि वीरवरोऽयं भवितुमर्हति सर्वथा समरकण्डूलभुजकाण्डस्य चण्डकोदण्डखण्डितारिगर्वस्य दनुजपतेर्वीरप्रकाण्डः पूरयति युद्धमनोरथान् । अत्रान्तरे च—

---

१. गुरुदा यद्दिशांश्चापवाणौ । २. प्रमायचपलो । ३. खण्डितेयं पङ्क्तिर्मया स्वयमेव पूरितेति वागीशः ।

भीरुप्राणप्रणाशं प्रतिरसितमहागह्वरं सिंहनादं
कुर्वन्नानायुधाद्यैर्भुजपरिघशतैः सर्वलोकस्य भीष्मः।
दृष्ट्वा बाणः समीके स्वजनपरिभवं दीप्तदुर्वारमन्यु-
मौर्वीं विस्फार्य वज्राहतगिरिनिनदां [1]तिष्ठ तिष्ठेत्युवाच ।।१६१।

अनिरुद्धस्त्वचिन्तयत्–अहो पुण्याहमद्य यदेषः

बलेः सूनुः साक्षात् त्रिभुवनसमाम्नातयशस-
स्तपोभिः पुत्रत्वं स्वयमधिगतः किञ्च शिवयोः ।
सुराणां निर्जेता रणभुवि सहस्रेण च भुजैः
स्थितो युद्धाकाङ्क्षी किमपरमतः कौतुकपदम् ।।१६२।

द्रष्टव्यमवश्यमस्य भुजसहस्रस्य सन्धानविमोक्षलाघवम् । न खलु भारशृङ्गो मृग इव शृङ्गभूम्नैव भीषणो भवेत् । इदं तु विषमम्–

कुरङ्गाक्षी कर्षत्यहह हृदयं कातरदृशा
विषीदन्ती पश्चात् किमिह भवतीति क्षुभितधीः ।
पुरो वाहान्[2] बिभ्रत्यजगरगुरून् वैरिणि मुहुः
प्रयातार्थी धत्ते किमपि करवालस्तरलताम् ।।१६३।

तथापि वीरकन्ये [3]समाश्वसिहि सर्वथा दनुजराजस्य युद्धातिथौ[4] न विलम्बितव्यमिति । ततो बाणानिरुद्धयोर्द्वन्द्वयुद्धदर्शनौत्सुक्यतरलो नारदो यदूद्वहमिदमगदत्–

वत्स विरथो विधन्वा चासि सर्वथा [5]विश्रुतबले वैरिणि प्रतिहितो भव । तमनिरुद्ध ऊचे–

कामं सन्तु भुजाः सहस्रमसकृद् गीर्वाणगर्वच्छिदो
[6]धत्तां तैः खलु काममायुधधुरा दैतेयराजो रथी ।
आभ्यामेव दलत्कदम्बमुकुलस्फूर्जद्भितिभ्यां मुने
बाहुभ्यां न विहास्यते लवमपि त्वन्नेत्रयोरुत्सवः ।।१६४।

किञ्च–

प्रत्यर्थी प्रथितप्रतापपटलीकण्डूलदोर्मण्डलो
दैत्येन्द्रो हिमकुन्दकैरवसिता कीर्तिर्गरीयः फलम् ।

---

१. तिष्टतिष्टे- । २. वाहन् । ३. समीश्वसिहि । ४. युद्धातिथो । ५. विश्वित- । ६. धतां ।

दृष्टा तत्र भवानलं परगुणप्रख्यापनापण्डितः
सामग्री सकलेप्सिता विधिवशादोजायितुं[१] वाञ्छतः ।।१६५।

अत्रान्तरे-

जाले जाले कौतुकाद् राजदाराश्चञ्चन्नेत्रा गूढगूढं स्थिताश्च ।
कुम्भाण्डेन स्यन्दनो दैत्यभर्त्तुर्भ्रूनिर्देशादभ्यमित्रं हृतश्च ।।१६६।

धृत्वा दोष्णा पञ्चशत्या धनूंषि बाणो बाणांस्तद्वदाबद्धदृष्टिः ।
वृष्टिं चक्रे क्षुद्रकाणां तरस्वी दृष्ट्वाऽधृष्यं यादवेन्द्रं पुरस्तात् ।।१६७।

स तु स्मरेमुखतामरसः शलभानिवापततः पतत्रिणः सलीलमिव निवारयन् [२]विफलप्रयत्नमस्य रोषमधिकमदीपयत् । भूय एव विससर्ज दैत्यपतिः सहस्रशः स्वर्णपुङ्खान्यक्षवतः पन्नगानिव शिलीमुखानयं पुनरपूर्वशिक्षासंस्कारसावधानः कौक्षेयकेण क्षणादच्छिनत् ।

बाणकार्मुकविनिर्गताः शरा नालमाकुलयितुं तमण्वपि ।
निर्जिताखिलहृषीकसञ्चयं योगिनं विषयविभ्रमा इव ।।१६८।

हस्तलाघवममुष्य विलोक्य क्रोधधूम्रवदनोऽवददुच्चैः ।
दन्तकान्तिहतभूरितमिस्रः सन्दधच्छरशतान्यथ बाणः ।।१६९।

श्लाघनीयलाघवोऽसि किन्तु वञ्चय नाराचनिचयमेतमेतर्हि गर्हितस्य कर्मणो दारुणां परिणतिमनुभवसि । तमनिरुद्धः स्मितान्तर्हितरोषविक्रियो बभाषे—

वृथैव वागारभटी क्रियमाणस्य कर्मणः ।
किं दर्पणं दर्शयतो मुखवैवर्ण्यवर्णनैः ।।१७०।

वारितैरपि तैर्निशिततरैर्नाराचैराविद्धगात्रोऽतिमात्रस्रुतशोणितप्रसाधितावयवः किञ्चित्क्रोधरक्तेक्षणोऽनिरुद्ध उत्प्लुत्य बाणस्य रथमारुरोह । असिमुसलपट्टिश-परिघतोमरैरभिहन्यमानोऽपि न किञ्चिदकम्पयत् ।

रथेषां[३] तस्य वव्रश्च निशितेनासिना बली[४] ।
हयानामनयत् क्रुद्धः सहस्रं किञ्च पञ्चताम् ।।१७१।।

बाणस्त्वाकृष्टकृपाणमापतन्तं तमवलोक्य भृशमाकुलः सहस्रेण बाहुभिर्विविधा-युधानि प्रक्षिप्य यथाप्राणं बाणवर्षमन्वतिष्ठत् । ततोऽनिरुद्धःशललैः शल्यक इव शिलीमुखैराकीर्णसर्वाङ्गो हत इत्येव सर्वैः प्रतिपन्नो रथादवप्लुत्य पार्श्वतोऽवतस्थे ।

---

१. विधिवशादो आपितुं । २. विफलय्यप्रयत्न ।
३. रथेषांतस्मं । ४. निशितेना सिनावली ।

जहृषुश्च जितकाशिनं बाणमभिष्टुवन्तो दैत्यसैनिकाः ।

कुलिङ्गे पत्रीव द्रुतमुपनिपत्योग्रनयन-
स्तरस्वी दैत्येन्द्रेऽक्षिपदसिमसौ रोषरभसात्[1] ।
प्रतीष्टोऽपि च्छित्त्वा फलकमतितीक्ष्णः स सुदृढं
शिरस्त्रं चिच्छेद क्षतजमपि [2]यच्चास्य शिरसः ।।१७२।

अथ बाणः पुनःप्रपातमाशङ्कमानो बद्धविविधघण्टाघणत्कारघोरामशनिमिव महोल्कामिव महामृत्युरसनामिव कालानलज्वालामिव दारुणां शक्तिमुद्यम्य प्राहिणोत्।
तमायान्तीं प्राणिनां कालरात्रिं सोऽभिप्लुत्य प्राग्रहीद् वीरवर्यः ।
[3]बाणस्योरस्यक्षिपद् यत् प्रगाढं भित्त्वा सापि प्राप तूर्णं धरित्रीम् ।।१७३।

क्रौञ्चस्येव कुमारेण शक्त्या तस्य क्षते हृदि ।
हा हेति दनुजेन्द्राणामनीकानि प्रचुक्रुशुः ।।१७४।

तेन प्रहारेण विभिन्नमर्मा दैत्याधिनाथः परिवृत्तनेत्रः ।
रथे गृहीत्वा ध्वजदण्डमुच्चैः पपात मैनाक इवाम्बुराशौ ।।१७५।

दयितप्रणयादुषादृशोर्जनकस्याप्यनुरागतोऽधिकात् ।
सुखदुःखसमुद्भवाश्रुणोः क्षणमासीदविशिष्य निर्गमः ।।१७६।

केनाम्बुधिर्नियमितो दृढसेतुबन्धात्
कालानलो व्यरचि केन च रुद्धशक्तिः ।
केनार्यमा बलवता स्थगितः कराभ्यां
मेरुः प्रकम्प्य भुवि केन निपातितश्च ।।१७७।

अत्यर्थमश्रुकलिलैर्नयनारविन्दै-
रालोक्य [4]दानवपतिं पतितं विमुह्य ।
आहत्य कञ्चुकिजनेन निवार्यमाण-
श्चुक्रोश तारतरमित्यवरोधवर्गः[5] ।।१७८।

अथ शिशिरोपचाररचनाचेतनामधिगते दानवेन्द्रे कुम्भाण्डो व्याजहार– दनुजराज, किमुपेक्षसे, कोऽप्ययमतर्किपराक्रमो लोकपालैरप्यनुपमेयमहिमा नाल्पेनाभिभवितुं शक्यते । सर्वथा मायामवलम्ब्य युद्धस्व न यावदस्मासु विषममाचरति ।

एवं बाणः सचिववचनैर्बोधितः क्रोधमुग्रं
कुर्वन्नूचे निकृतिचतुरश्चेतसा चिन्तयित्वा ।

१. रोवरभसात् । २. वच्चास्य । ३. वाणस्योरस्यक्षिपद्य । ४. दानवयार्तिं । ५. मित्यचरोधवर्गः ।

दुर्वृत्तोऽयं नियतमधुना वीक्षते स्वर्णवृक्षान्
वास्तव्यत्वं व्रजति रुदिति प्रेतभर्तुः पुरस्य ।।१७९।
प्रेमेव दुर्जनानां ननाश सहसा ततो विशालोऽपि ।
आरूढो रथमन्यं सरथः साश्वः ससारथिर्दैत्यः ।।१८०।
तामस्या विद्यया च्छन्नः सायकानक्षिपद् बहून् ।
पश्यन् दिशो दश ततो [1]नापश्यत् तं यदूत्तमः ।।१८१।
बहुलो हितनिर्झराप्लुतः क्षतसर्वायवो यदूद्वहः ।
विविधान् विशिखानलक्षितानसहन्मत्तकरी यथाङ्कुशान् ।।१८२।
तमधृष्यमुदीक्ष्य देवदैत्यैरपि बाणो विहितप्रभूतयत्नः[2] ।
इषुभिः पवनाशनस्वरूपैः प्रतिगात्रं दृढबन्धनं न्यबध्नात् ।।१८३।
फणिभिः प्रफुल्लफणमण्डलैः स्फुर-
न्मणिरश्मिभिर्वलयितोद्युतद्बली ।
धृतराष्ट्रसूनुकपटेन कोपितो
वपुरुन्मिषन्निजमहा इवाच्युतः ।।१८४।
फुत्कारिभिःफणिभिरुत्फणमण्डलैस्तै-
र्बद्धो विभीरपि कृतः किल निष्प्रयत्नः ।
शौर्योष्मभिर्बहिरनिर्गमितैर्नितान्तं
सन्तप्यमानहृदयो भृशमश्वसत् सः ।।१८५।
तस्मिन् सन्दानिते बाणैर्बाणः प्रादुरभूत् क्षणात् ।
अन्धकार इवोदग्रो मिहिरे संहृतातपे ।।१८६।
रिपुं प्राध्वङ्कृत्य[3] प्रतिबलविलोपव्यसनिनं
विकुर्वाणो बाणो विजयपटहोदग्रनिनदैः।
सुराणां सर्वेषां दितिजदनुजानामपि बला-
न्नियन्ता यन्तारं रणभुवि रुषा रूक्षमगदत् ।।१८७।

शीघ्रमेषको निजदुर्नयस्य दारुणविपाकं फलमास्वदतां न खलु शीर्षच्छेद्यस्य [4]वधे कश्चन विचारावसरः । पतिपुत्रविरहविह्वलानामसुरसुन्दरीणामश्रुधाराः प्रमार्जय ।

तदा [5]त्वायतिकार्येषु कार्येषु कृतनिश्चयः ।
नये परिणतप्रज्ञः कुम्भाण्डोऽथ तमब्रवीत् ।।१८८।

---

१. नापश्यनं । २. विहितप्रभूयत्नः । ३. प्राध्वकृत्य । ४. चद्ये । ५. त्वापति- ।

समञ्जसमिदमाज्ञापितं भवति योग्य एवागस्विषु तुरीय उपायः । किन्तु स्वाधीनतामधिगमितस्य वधः सदैव सुकरो हतस्य तु पुनरुज्जीवनं दुरारम्भं कर्मणामारम्भेषु प्रथमं विमर्शमेव प्रशंसन्ति । तदनु दाक्ष्यमपरीक्षितोदर्काणि हि कार्याणि कर्त्तारमन्ततः सन्तापयन्ति, न चोपाकृतघातं हतेष्वीदृशेषु भवादृशां कश्चिदुत्कर्षः । न खलु राजन्नसौ साधारणः कोऽपि पुरुषः । दृष्टैव विविध-युद्धमार्गेष्वस्य प्रवीणता, लोकोत्तरं धैर्यमव्याकुलः संरम्भः, क इवेतरो द्विबाहुः, सहस्रबाहुमभियुञ्जीत । पश्य केसरिकिशोर इव पञ्जरपराधीनः शरनिकरसंयतोऽपि नास्मानाणयति । वाडव इव वैरिविषयं गतोऽपि न तेजसा हीयते । शरदभ्रतिरोहित-स्तरणिरिव निगृहीतोऽपि दुर्मर्षणः । न मुञ्चति ललाटपट्टमधुनाप्यस्य त्रिशिखभ्रुकुटिर्न पश्यामि तं वीरवरेण्यं भवन्तमन्तरेण य एनमभिभवितुमुत्सहेत । प्रथमं विवेक्तव्यमस्य कुलशीलादिकमनन्तरं प्रसादमितरद् वा करिष्यसि । कुमार्याः परिचयोऽपि गान्धर्वविधिपुरःसर एव श्रूयते । गिरिजावरदानसंवादी सोऽयमर्थ इत्यपि रहस्यवेदिनः परस्परं गूढमालपन्ति । शतशः श्रुताश्चैवंप्रायाः पुराणेषु भूभुजां सम्बन्धाः । तदित्थमेवामुं रक्षन्तु रक्षिणः परीक्ष्य गुणदोषौ । पश्चादुचितमाचरिष्याम इति तु [1]प्रतिपदं देवः प्रमाणम् ।

इत्थं नृपः स सचिवेन[2] विबोधितः स-
न्नोमित्युवाच परिचिन्त्य चिराय [3]चित्ते ।
गर्त्ते पतेत् प्रतिपदं मदमीलिताक्षो
राजद्विपो यदि न मन्त्रिवचःश्रृणिः स्यात् ।।१८९।

दैत्यान् कर्कशकेशरक्तनयनान् निस्त्रिंशचर्मायुधा-
नादिश्याथ जगाम दानवपतिस्तस्योद्धुरान् रक्षिणः ।
किं [4]वाच्योऽस्य पराक्रमस्य महिमा येनानिरुद्धो बली
मायापन्नगपाशवेष्टितवपुर्गाढं निरुद्धः कृतः ।।१९०।

प्रविदार्य रिपून् परःसहस्रानिषुजाले परिपुञ्जितः स तस्थौ ।
प्रलये प्रदह्य सर्वलोकान् हरनेत्रेऽग्निरिवाल्पितप्रतापः ।।१९१।

तं तथाविधमुदीक्ष्य योषितो रूपयौवनगृहीतचेतसः ।
जालजालविनिवेशितैर्मुखैरस्रवन् नयननीरसारणीः ।।१९२।

उषा तु विषमविषधरदंशशङ्काकुलकृत्तमूला[5] कदलीव सहसा पपात ।

---

१. प्रतिपरदेवः । २. स सचिं न । ३. चिते । ४. वाच्यौस्य । ५. कृतामूला ।

चिरादधिगतचेतना वीतसाध्वसमपेतलज्जमतिकरुणमुन्मादिनीव मुक्तकण्ठं विललाप ।

अपि वीर विशाललोचन स्मितवक्त्राम्बुरुह प्रियंवद ।
तव वीक्ष्य विभो दशामिमामहह प्राणिमि वज्रनिष्ठुरा ।।१९३।
वसतो निजबन्धुभिः सुखं प्रणयावर्जितचेतसो हठात् ।
करिणः करिणीव बन्धने तव हेतुर्विधिवञ्चिताऽभवम् ।।१९४।
मदुरोजपटीरजाञ्चिते सततं वक्षसि विस्तृते तव ।
रुधिरारुणिते वमन्ति हा विषगण्डूषमिमे महोरगाः ।।१९५।
तव बन्धुजनैरलक्षितं [1]यदहत्वा गतधीरजीहरम् ।
हृदयं दहतीदमद्य मे परिणामेऽतिविदाहि भक्ष्यवत् ।।१९६।
जननी तव वत्स वत्सला परिदीव्येत् कुररीव यन्मुहुः ।
अशिवाय भवान्तरेऽपि तन्नमनं[2] भविता कुकर्मणः ।।१९७।
यदुवंशशरत्सुधाकरश्चपलाया बत योषितः कृते ।
विषमामगमद् दशामहो जनवादोऽयमतीव दुःश्रवः ।।१९८।
[3]पुर एव सखी ममाऽब्रवीदखिलं सा रवदूरदर्शिनी ।
रुचितं न तु मे विचेतसे नियतं स्वार्थपराः स्मरातुराः ।।१९९।
मनसामपि दुर्गमे नृणां नगरेऽस्मिन् बत संयतस्य ते ।
कथयिष्यति कः कथामिमां तरसा सुन्दरशार्ङ्गधन्वने ।।२००।
अतिदुर्लभमप्यवाप यत् प्रथमं त्वामनुकूलतां दधत् ।
सहते न पुनः सुखं तु नौ विधिरद्धा [4]जनवारवत्सरः ।।२०१।
निजबन्धुजनैरनादृतां प्रतिकूलाचरणामनायतिम् ।
विपदम्बुधिमध्यतो न मां किमु मृत्यो भगवन् विकर्षसि ।।२०२।
इत्थं प्रियायाः परिदेवितानि श्रुत्वा स भेजे करुणां क्रुधं च ।
सरोरुहाक्षीं परिसान्त्वयिष्यन्नूचे महादुन्दुभिधीरघोषः ।।२०३।

अयि कातरे किमिति विलपसि । धीरतां धेहि नाहमीदृशैर्मायाविभिः सुनिबर्हो यदि सम्मुखमयोत्स्यत तदाद्यैवादर्शयिष्यं वैवस्वतं देवम् । तमसुरापसदं निखिलमवलोक्य नारदो मुनिर्विहायसा द्वारवतीमाजगाम प्रवृत्तिमेतामुदीरयितुम् । नूनमापतति सात्वतपतिर्यस्य शङ्खनिह्रादिन निपतिष्यन्त्यसुरगर्भिणीनां गर्भाः । दानवशवैः

१. यदहत्वांगतधी- २. नमूनं । ३. पुरराव । ४. जनवत्सरः ।

संवृत्ता च भवित्री भूतधात्री। तव मुखमृगाङ्कस्य ग्लानिरधिकं दुनोति मामतः स्वास्थ्यमुपयाहि।

उषा ततो वयस्याभिर्बोध्यमाना मुहुर्मुहुः।
शोचन्ती पितरं भीरुरन्तर्गृहमुपागमत्॥२०४।
असुरैः परिवेष्टितः करालैः प्रतिगात्रं फणिराजरज्जुबद्धः।
परितः स्वहितं कमप्यपश्यन्ननिरुद्धः कुलदेवतां ववन्दे॥२०५।
त्रैलोक्यं महदहमादिमद् विलासो
यत्ख्यातेः सपदि विमुक्तिमेति जन्तुः।
स्मर्तृणाममरगवीमतर्क्यरूपां
तां देवीमभिमतसिद्धयेऽहमीडे॥२०६॥
उल्लास्य क्षुभितसमीरभङ्गिभिर्या
सौषुम्ने पथि कृतचक्रषट्कभेदाम्।
मोदन्ते परमशिवेन योजयित्वा
सा स्वान्ते मम परदेवताविरास्ताम्॥२०७।
पश्यन्ती प्रभवति मध्यमा नराणां
वैखर्या सह च परायते हृदिस्था।
शब्दार्थोत्करजननीं क्रियाप्रधानां
तां वन्दे प्रकृतिमुपेतबिन्दुरूपाम्॥२०८।
मातेवोपदिशति या हितं जनानां
यन्निघ्ना भुवि निखिलाऽपि लोकयात्रा।
पन्थानं मुहुरमृतस्य दर्शयन्तीं
तामीडे [1]मृडदयितां त्रयीस्वरूपाम्॥२०९।
ज्योत्स्नेवामृतकिरणस्य नन्दयन्ती
घर्मांशोर्द्युतिरिव निघ्नती तमांसि।
या स्वैरं प्रकटयते जगद् विचित्रं
तां शक्तिं परमशिवस्य स्मरामि॥२१०।
धीमन्तस्तव बहुधा निरूप्य रूपं
मुह्यन्तः सदसदिति स्फुटाभिधाने।

१. पृडदपि तां।

त्वाममम्ब प्रथितजगन्महेन्द्रजालेऽ-
निर्वाच्यं किमपि वदन्ति विश्वबीजम् ।।२११।
यत्सर्गस्थितिनिधनेषु रूपभेदात्
प्रागल्भ्यं समजनि निष्क्रियस्य पुंसः ।
विश्वेषां तव किल भोगमोक्षदाया-
स्तज्जाने जननि विजृम्भितं गुणानाम् ।।२१२।
दैत्यानां दलनकुतूहलेन नाना-
रूपाणि त्वमति परे न यद्यधास्यः ।
अध्यास्यन् कथमिव केऽपि भक्तिमन्तः
सिञ्चन्तीममृतमहोर्मिभिस्तदा त्वाम् ।।२१३।
हैमीनां ध्रुवमवधीरणं द्युतीना-
माधातुं धृतललनाप्रकाण्डकान्ति ।
श्रेयो मे वितरतु पर्वतप्रसूतिः
श्रीशम्भोः सुचरितसम्पदामपूर्वम् ।।२१४।
बालार्कद्युतिमरुणां वरां त्रिनेत्रा-
माकल्पैर्ललिततनुं शशाङ्कचूडाम् ।
हस्ताब्जैः कुसुमशरेक्षुचापपाशान्
बिभ्राणां सृणिमपि भावये भवानीम् ।।२१५।
उन्मुक्तालकलतिकां शिरःस्त्रगाद्यां
सृक्काग्रस्त्रवदसृजं करालवक्त्राम् ।
निश्च्योतद्रुधिरकपालमण्डलाग्नौ
वाहाभिर्जननि वराभये वहन्तीम् ।।२१६।
[1]श्यामाङ्गीं शम्बकृतकर्णपूरशोभां
बिभ्राणां कुणपकरैः कृतां च काञ्चीम् ।
दिग्वस्त्रां पितृवनवासिनीं सुघोरां
त्वां ध्यायन् भयमखिलं जहाति जन्तुः ।।२१७।

युग्मम्—

---

१. श्यासांगी ।

दैतेयक्षतजचितं कृपाणपाणि
प्रोन्माद्यन्महिषमहासुरान्तकारि ।
सानन्दप्रणतमहेन्द्रमह्यमानं
पञ्चास्याभरणमुपाश्रयामि तेजः ।।२१८।

ध्यायामि प्रशमितधूम्रलोचनां त्वा-
मासेवे समरनिरस्तचण्डमुण्डाम् ।
संयाचे चुलुकितरक्तबीजरक्तां
पश्यामि [1]प्रबलां निशुम्भशुम्भहन्त्रीम् ।।२१९।

वेतालैः प्रतिभयडाकिनीनिकायैः
फेत्कुर्वत्क्षुधितशिवाशतै रुताम् ।
निर्भिन्नासुरशवघोरशूलहस्तां
चामुण्डां सुररिपुमर्दिनीं स्मरामि ।।२२०।

तापिच्छच्छविमतितीक्ष्णदीर्घदंष्ट्रां
[2]व्यात्तास्यां प्रविततलेलिहानजिह्वाम् ।
दैत्येन्द्रक्षतजरसासवेन मत्तां
धावन्तीं रणभुवि चिन्तयामि चण्डीम् ।।२२१।

विन्ध्यस्थां विविधबलिप्रियां प्रसन्नां
पूजाभिः शबरपुलिन्दबर्बराणाम् ।
भक्तानामवनिभृतां च कामदोग्ध्रीं
देवानां भयशमनीं भजे भवानीम् ।।२२२।

त्वां चैत्ये महति [3]चतुष्पथे श्मशाने
सम्भेदेषु च सरितां शिलोच्चयेषु ।
[4]विस्रब्धाः कतिचन पूजयन्ति भक्त्या
तेभ्यस्त्वं वितरसि तत्र वाञ्छितानि ।।२२३।

[5]भक्तस्त्वां सकृदपि यो नयेदजस्रं
गीर्वाणव्रजमुकुटोपलाकुलाङ्घ्रिम् ।
तस्याशु क्षितिपतिमौलिमल्लिमालाः
पादाग्रं पिदधति पिञ्जरैः परागैः ।।२२४।

---

१. प्रबला । २. व्यातास्यां । ३. चतु:पथे । ४. विस्तब्धाः । ५. भक्ता त्वां ।

प्रासादाः शशधरबिम्बबद्धवादाः
कामिन्यस्तरुणकुरङ्गलोलनेत्राः ।
नृत्यन्तः पवनतरस्विनस्तुरङ्गा-
स्तावत् ते[1] जननि कृपाकटाक्षकेलिः ।।२२५।
वादीन्द्रान् सदसि स [2]मूकयत्यधस्ताद्
व्याचष्टे परमदुरूहशास्त्रसारान् ।
स्वर्वामाधरमधुरास्तनोति सूक्ती-
र्मन्त्राणां कलयति यस्तवाधिकर्णम् ।।२२६।
निद्राति स्तनकलशेषु कामिनीनां
तुङ्गेषु व्रजति मदान्धसिन्धुरेषु ।
अत्युच्चैर्विहरति वैरिशेखरेषु
त्वद्ध्यानक्षणनिगृहीतचित्तलौल्यः[3] ।।२२७।
ज्ञानाम्भःकतकरसो न येन मोहा-
दापीतश्चरणसरोजशीकरस्ते ।
मृद्वीकास्वरससरित्सखीमुखाब्जात्
किं तस्य प्रवहतु गद्यपद्यधारा ।।२२८।
दासन्ति क्षितिपतयो [4]हिंसन्ति हिंस्राः
शास्त्राणि प्रियललनासुभाषितानि ।
मूकन्ति प्रतिसुधियो भवोऽपवर्ग-
त्येकान्तं तव चरणाब्जभक्तिभाजाम् ।।२२९।
एकाग्रो [5]विधिवदलिप्सुरप्युपास्ते
त्वामम्ब त्रिजगदुपास्य देवतां यः ।
तं भुक्त्या कृतपरिरम्भणं हठेन[6]
स्वच्छन्दं [7]सपदि वृणोति मुक्तिकान्ताम् ।।२३०।
चित्रं ते प्रणतजनेषु [8]वत्सलत्वा-
दार्द्रत्वं निरवधि पर्वतात्मजायाः ।

---

१. स्तावते । २. मूकयत्ययस्ताद् । ३. चितलौल्यः । ४. हितति हिन्स्राः । ५. विधि-वदलिक्षु- ६. हठेने । ७.सयदि । ८. वत्सलं ।

आश्चर्यं भुवनवनीयकेषु नित्यं
दातृत्वं किमपि दिगम्बरस्य वध्वाः ।।२३१।
वन्दारोः पुरमथनस्य मौलितोयै-
रामृष्टेऽप्यभिनवयावकोपदेहे ।
न स्पर्द्धा रहयति यन्नवप्रवालै-
स्तद् गौर्याश्चिरणयुगं समाश्रयामि ।।२३२।
नम्राणाममरमृगीदृशां समन्ताद्
धम्मिल्लद्युतिमलिनानि मौक्तिकानि ।
ये तूर्णं परिघटयन्ति पाटलिम्ना
तैर्वन्दे नखमणिभिः शिवौ तवाङ्घ्री ।।२३३।
भक्तानां प्रमदपयोधिवर्धनस्ते
वक्त्रेन्दुस्तिरयतु नस्तमांसि तूर्णम् ।
शीतांशुर्जित इव येन शम्भुमौलौ
क्षीणत्वं त्यजति न चिन्तयावलीढः ।।२३४।
कान्तारे रिपुगहने मलिम्लुचौघे
दावाग्नौ भुजगकुले च पोतभङ्गे ।
यां स्मृत्वा तरति जनो विपत्तिमुग्रां
सा श्रेयो वितरतु सर्वमङ्गला मे ।।२३५।
देवानामभिमतदानकल्पवल्ली
दैत्यानां प्रशमकरालकालरात्रिः ।
कंसस्य प्रसभमुपेत्य भीषयित्री
प्रादुःष्यान्मम[1] भगिनी गदाग्रजस्य ।।२३६।
निर्भेत्त्रिप्रचिततवासनाचरन्ना-
बन्धानां बहुयुगगाढगुम्फितानाम् ।
बन्धं मे विदलय मायिकेन क्लृप्तं
सुप्रीता यदसि जनप्रहर्षिणी त्वम् ।।२३७।

---

१. सम ।

[१]एवमस्मिन्नभिष्टुतवति प्रियङ्गुश्यामशरीरकान्तिः शरदिन्दुवदना कालकौशेयवासिनी चतुर्भुजा निशातशूलपाणिर्मदलोललोहितेक्षणा शिखिपिच्छकेयूरकिरीटध्वजधारिणी हारकङ्कणकिङ्किणीभिर्विराजिता कलभकुम्भस्तनी महाट्टहासमोहितरक्षिभटा घण्टानादिभिर्भूतसङ्घैरनुगता भगवत्येकानंशा प्रादुरासीत् ।

विस्मिततेजसा तस्याः सर्वदिक्षु विसारिणा ।
नमस्यन्तमुवाचेदमनिरुद्धं विहस्य सा ।।२३८।

वत्स ! मा विषदः । शैथिल्यमुपयातु ते बन्धो न चासुरेभ्यः कश्चिदस्त्वभिभवः न क्षुत्पिपासे व्यथयताम् । मा गमः स्वजनवियोगजां व्यथाम् । चिरादेव चक्रपाणिस्त्वां मोचयिता । न कारणान्तरादहमधुना मोचयामि । सर्वथा समीहितानां भाजनं भविष्यसि ।

अन्तर्दधे भगवतीदमुदीर्य सद्यो
दुष्प्रापमेव महतां चिरमीक्षणं यत् ।
तद्दर्शनोपहितधैर्यबलप्रभावः
कामात्मजः किमपि न व्यथितो बभूव ।।२३९।

उषा तु प्रियविरहकर्शिताङ्गी चित्रलेखाद्वितीया रहसि रुदती कथं कथमपि समयाचकार । अथाजग्मुर्नीलजलधरखण्डमण्ड्यमानव्योमानः शिखण्डिमण्डलीताण्डवपाण्डित्यगुरवः शिशिरसमीरणोत्सङ्गरिङ्गत्सलिलशीकरोच्छ्वाससुभगाम्भविष्णवः कुटजकदम्बकोरकोद्गारकारिणः[२] केऽपि दिवसाः । यत्र पीतचञ्चुषु हरिततृणधारिणो दयिताद्वितीयाः शकुन्तयः प्रांशुपादपोपघ्नान् कुलायानकलयन् ।

प्रथमासारसमुक्षितक्षितिसौरभ्यलुभ्यन्मनोभिरारभ्यन्त कृषीवलैर्येषु कृषिकर्माणि । येषु च नवाङ्कुरोल्लासकैतवेन रसारसालिङ्गिता [३]विपुलपुलकावली बभार । नायमनेहा तृतीयपुरुषार्थव्यवसायाद् ऋते क्षणमपि क्वचित् कदर्थनीय इति दम्पतीनुपदिशन् भगवानादिदेवोऽपि कमलासहायो येषु क्षीरसागरगर्भशयनमशिश्रियत् । यत्र दुःसहनिदाघदीपितस्य जगतोऽधमधारेव वारिधरधारणी व्योमनि वितस्तार । गिरिशिखरस्यन्दमाननानाधातुरागरचिताभरणझञ्झापवनपातितकुटजकुसुमश्रेणिशेखराः सरितः सरित्पतिमभ्यगच्छन् । दर्शिताभिनवरागरमणीया लताः कमलैः किसलयैर्वनस्पतीन् गाढमालिङ्गन् । यत्र च व्योमप्राङ्गणमिन्द्रनीलशिलाभिराबद्धमिवालोक्य तरलपोत इव गगनसागरगतः पुरुहूतहेतिरदृश्यत । तस्य जातरूपरचिता पताकेव [४]विद्युदपोतधीवराणामिव धावतां धाराधराणां करेभ्यो रजतरज्जव इव विच्छिद्य वारिधारा न्यपतन् । यत्र च—

१. खमस्मिन्नभिष्टुवति । २. कोरकोद्रारकारिणः । ३. विपुलपुल का वलीवं भारनाय । ४. विद्युदद्योत ।

प्रजानां भृशमुत्कानां दशमे पञ्चमे दिने ।
राजेव विषयासक्तः सविता दर्शनं ददौ ।।२४०।

आक्रान्ता धरणी जलैरविरलैर्नष्टास्तथा सत्पथाः
पङ्कप्रायमभूज्जगत्सु महतीं प्राप्ताः कदम्बाः श्रियम् ।
प्रासीदन्न च राजमण्डलमहो मित्रेऽपि न स्वच्छता
काले तत्र कलाविव द्विजगणो दुःस्थो जहौ स्वक्रियाम् ।।२४१।

मूकत्वं दधिरे परं परभृता वाचालतां बर्हिण-
स्तोकीनां तृडुपारमत् प्रववृधे पान्थप्रियाणां दृशाम् ।
मौर्वी च प्रतिसंहृता नृपतिभिः पञ्चेषुणाऽऽरोपिता
निर्वाणा वनवह्नयो विरहिणां दीप्ता वियोगाग्नयः ।।२४२।

कान्ताः कौसुम्भवसना वासः प्रासादमूर्द्धनि ।
मनोज्ञा मालतीमालाः किमन्येन विलासिनाम् ।।२४३।

तत्र चैवंविधे व्यतिकरे निरन्तरं नीरधाराभिर्जलदजलप्रवाहमापूरयन्तीम—सुरराजनन्दनामुदीक्ष्य हृदयमस्या विषयान्तरे प्रसञ्जयेयमिति चित्रलेखा प्रणिजगाद ।

धाटीषु ध्वनयत्पयोदपटहं कामस्य वामभ्रुवो
दोलाकेलिषु लोलयन् विदलयन् यूनां प्रवासोद्यमम् ।
रम्यः कोऽपि कदम्बसर्जकुटजैः फुल्लैर्दिशो वासयन् ।
कालश्चातककेकिदर्दुरबटूनध्यापयन्नागतः ।।२४४।

अम्भोभारभरादुदीक्ष्य नमतो दूराध्वखिन्नान् घना-
नाहन्ते कृपयाशु विश्रमयितुं शङ्के बलाका वियत् ।
आसीदन्ति यथा यथा शिरसि ते नूनं तथा कुर्वते
केकाकैतवतो निपातचकिताः कोलाहलं भूधराः ।।२४५।

आचामन् सह वारिभिर्जलनिधेर्ज्वालावलीं वाडवीं
तामेव ज्वलितामिरम्मदमिषान्मेघा वमन्ति ध्रुवम् ।
किं चैता [१]बिसकण्ठिका न परितः कादम्बिनीसंस्पृशो
निर्गच्छन्ति पुरः पयोधिपयसो डिण्डीरपिण्डोच्चयाः ।।२४६।

---

१. निसकंटिका ।

एते कम्पितकन्दलीसुमनसः संश्लिष्टसर्जार्जुनाः
प्रोन्मीलद्गिरिमल्लिकासुरभयो रोलम्बमालाश्रिताः ।
नूनं नीपरजोभरेण[१] हरितः कर्तुं पिशङ्गीरसात्
कामं कौतुकिनो भ्रमन्ति परितो मेघङ्करा मारुताः ।।२४७।
अभिनवयूथिकामधुरसौरभभारभृतो
विकसितकेतकीधवलधूलिलवच्छुरिताः[२] ।
किमिव वियोगिनो विकचनीपरजोऽञ्जलिभि-
र्गतघृणमन्धयन्ति बत शीकरिणो मरुतः ।।२४८।
इतस्ततो रूप्यमयीव वारिभिर्नवाङ्कुरैर्मारकतीव मेदिनी ।
विकीर्णमाणिक्यकणानुकारिणी न शक्रगोपावलिरत्र नोचिता ।।२४९।
सिञ्चन्त्येते दानाम्भोभिर्मेद्यामतापे नागेन्द्राः ।
हैम्यः कक्ष्यास्तेषु प्रायो विद्युन्माला दीप्ता भान्ति ।।२५०।
अमृतेन [३]चलितबलाहकोऽनिशं परिदह्यते[४] तदपि धन्वयासकः ।
सुजनःप्रभूतमपि शीलमाचरेन्न तु दुर्जनो लवमपि सीदति ।।२५१।
वने वने चातकमञ्जुकूजितैः प्रियासखानां शिखिनां च नर्त्तनैः ।
लतापरीरम्भशुभैरनोकहैर्मनोजसौराज्यमहो विजृम्भितम् ।।२५२।
धाराधौतशिलातलानि परितः प्रारब्धवर्षाण्यगै-
रुच्चैः शैलशिरःपतद्घनरसध्वानैर्मनोह्नन्ति च ।
केकाभिर्वलिता सनाथशिखिनां निघ्नन्ति कर्णज्वरं
किञ्चित्स्वस्थकपीनि वृष्टिविगमे धन्यान्यरण्यान्यलम् ।।२५३।।
प्रत्यासन्नपयोमुचःशिखरिणां भागा दलत्कन्दली-
रागिण्यो वनराजयो जलकणैर्मन्दाः कदम्बानिलाः ।
कूजन्तो वनितासखाश्च शिखिनो रक्तस्वराश्चातकाः
कालेऽस्मिन् मदयन्ति योगविजितं चेतो यतीनामपि ।।२५४।
द्यामभ्रलिप्तीमवलोकयन्तः पान्थास्त्वरन्ते विरहज्वरार्त्ताः ।
धैर्यव्ययातत्प्रमदाजनानां प्राणा अपि प्रोन्मथिताः स्मरेण[५] ।।२५५।

---

१. नीपरजोभेरणहरितः । २. च्छुरिता । ३. संचलित- । ४. परिदत्पते । ५. स्मरेणः ।

पूर्यन्ते परमूर्द्धवपूरमजिरे [1]पात्राणि धाराजलैः
स्फाटिक्यो घुटिकानुबुद्बुदशतामुद्यन्ति यन्ति क्षणात् ।
लम्बन्ते बिसवल्लयोनुवलभीवारीणि नीध्राततो
[2]वेगान् किञ्च वहन्ति घर्घररवं पूर्णाः प्रणाल्यो बहिः ।।२५६।
जङ्घालैर्नवकोरकस्तवकिताः पान्थैर्म्रियन्तेऽम्लिका
गावः पुच्छमुदस्य जातपुलका ग्रामाय धावन्ति च ।
वर्षत्येकपदे पृषद्भिरवशैः[3] साटोपमम्भोधरे
क्लिद्यन्ति स्तनभारमन्दगतयो मध्येऽध्वमेणीदृशः ।।२५७।
घनानां युध्यमानानामाघातैश्चूर्णिता तडित् ।
उडुपं ते त्रियामासु तत्कणा ज्योतिरिङ्गणाः[4] ।।२५८।
यामिन्यो निबिडान्धकारगहनाः खद्योतकान्तिप्रदा
झिल्लीझङ्कृतिनादिता वनभुवो दीप्ता मुहुर्विद्युतः ।
ताराण्यम्बुदगर्जितानि सजलाः पौरस्त्यझञ्झानिलाः
कान्तानामभिसारलोलमनसां स्वान्त्र्यमातन्वते ।।२५९।
जलपटलैर्लोलैरुद्वासिता वियतो भ्रुवं
कवककपटास्तारा[5] भूमौ वसन्ति हतत्विषः ।
अमृतकिरणो देवो न ज्ञायते किमभूदहो
न भवति महानाविस्तेजो व्यये पुनरल्पवत् ।।२६०।
नद्यां जलनिधिं यान्त्यां पतत्येकपदे तटः ।
कन्यां विसर्ज्य जामात्रे[6] शोकेन जनको यथा ।।२६१।
कालुष्यं [7]दधतु नदाः कुतो न घोरं
दुष्प्रापाः किमिव न जीवनार्थिनां स्युः
लङ्घतां किमिति तटाश्चिराश्चितान्न
स्वो भावः स हि कमलाभिवृद्धिभाजाम् ।।२६२।
स्पर्द्धयेव [8]पयोदानांमम्भोभिर्हि मदोत्कटाः ।
सिञ्चन्ति धरणीं नागा [9]नागापैर्निर्झरैः समाः ।।२६३।

---

१. यात्राणि । २. वेगोत्किंच । ३. रक्वशैः । ४. ज्योतिरिंगनाः । ५. कपटातारा । ६. जामात्रशोकेन । ७. दधनु । ८. पयोदानांभोभिर्मदोत्कटाः । ९. नागायै- ।

कोशातकीकुसुमपिञ्जरितोपशल्याः
कूष्माण्डभारविनमच्छदिषो लसन्ति ।
आनीलगोमयविलेपितभित्तिभागा
ग्रामाः समृद्धपशवो रममाणगोपाः ।।२६४।

श्यामायमानकरमर्दकजाम्बवेषु
कुञ्जेषु सान्द्रविकसद्गिरिकर्णिकेषु ।
[१]भूमीषु वारिदधिया मुदमुद्वहन्तः
कुर्वन्ति केकिशिशवः कलकूजितानि ।।२६५।

वसानाः कौसुम्भं वसनमसिताम्भोजनयना
मिषत्यः प्रासादान्नवजलदलावण्यलहरीः ।
अकस्मादुन्मीलत्क्षणरुचिचमत्कारचकिताः
स्वयं कण्ठाश्लेषैः सपदि सुखयन्ति प्रियतमान् ।।२६६।

उषा तु तदाकर्ण्य भूयसा विरहसंज्वरेण परिभूयमाना प्रियसखीमिदमवादीत् सखि किमिति वर्णयसि कर्णकटु रटतः शिखण्डिनो [२]वियोगिवधवृजिनजनितश्यामलिम्नो वलाहकानेते खलु नमन्तो विषप्रदा लुण्ठितद्विजराजश्रियो निर्वासितहंसानवलोकितुमप्युचिताः । पश्य—

नीता यैर्मधुवासरा विधिवशाच्चूताङ्कुरोल्लासिनो
निस्तीर्णाः स्फुटपाटलापरिमलप्रायो निदाघोऽपि यैः ।
आशातन्तुमुपेत्य कृन्तति भृशं मन्द्रैर्मुहुर्गर्जितै-
स्ते दग्धे जलदागमे विरहिणः कण्ठेषु बिभ्रत्यसून् ।।२६७।

घनाघने वितरति वारिगर्जितैः
क्षणं क्षणं क्षणरुचिनृत्यभाजि च ।
शिखण्डिनां प्रसरति षड्जकूजिते
वियोगिनी कथय कथं नु जीवेत् सा[३] ।।२६८।

कालोऽयं जलधरमण्डलीमनोज्ञः
प्राणेशो विषधरघोरपाशबद्धः ।
उद्वेलो विषमवियोगदुःखसिन्धु-
र्दैवेन स्फुटमिह सर्वथा हतास्मि ।।२६९।

---

१. भूमिषू । २. वियोगिवधवृजिनतश्याम-। ३. पुस्तके 'सा' इति नास्ति ।

तपहतमरुमल्ली कुड्मलम्लानिभाजो
विलपितमिदमस्याश्चित्रलेखा निशम्य ।
सततरुदितरज्यन्नेत्रपद्मा विमृश्य
प्रणयमधुरवर्णं सूनृतानीत्युवाच ।।२७०।

अयि प्रियवयस्ये धीरा भव । संसारिणामनियतानि दुःखानि सुखानि च, न तेषु क्वचिदपि महान्तो मुह्यन्ति ।

विलुच्य सिंहस्य सटामकाण्डे मणिं महाकुण्डलिनः प्रगृह्य ।
व्यालस्य चोत्पाट्य विषाणमग्र्यं लभेत को जीवति तत्र शान्तिम् ।।२७१।

तत्र । केचिदेतत्कौमोदकीधरस्य कतिपयैरहोभिः पुनरनिरुद्धमापीडित-स्तनकलशमालिङ्ग्य सकलसुन्दरीस्पृहणीयं सुखमनुभवन्ति ।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनाम्ना
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते
शरबन्धो नाम पञ्चम उच्छ्वासः ।।



## अथ षष्ठ उच्छ्वासः

यूथनाथमपश्यन्त्यः करेणव इवाकुलाः ।
अनिरुद्धस्य भवने वरारोहा विचुक्रुशुः ।।१।

इदमतिचित्रमसम्भवास्पदं क्व नु गत एष निलीय वा स्थितः ।
रविमिव भास्वरतेजसं बलाद् घन इव को नु विभुं तिरोदधे ।।२।

अहह विभो निजकिङ्करीरिमास्त्यजसि ऋतं वद केन मन्तुना ।
स्मृतिपथमेति यदीषदप्यहो न तव कृतं क्वचिदाभिरप्रियम् ।।३।

शयनमिदं शशिबिम्बकोमलं स्रगियमहो तव नागदन्तगा ।
मणिविकृती वरपादुके इमे त्वमसि कुतो विधिना तिरोहितः ।।४।

शिव शिव [1]सर्वजगत्प्रशासितुरेकरिपोरपि पौत्रतल्लजः ।
इतर इवाचकितं हृतो यदि स्फुटमजयद् भवितव्यताखिलम् ।।५।

क इव गुणो जलदुर्गसंश्रये क इव हरेर्भुजवीर्यसम्पदि ।
हृदयममुष्य कुलस्य केवलं यदुत हृतो यदुपुङ्गवः परैः ।।६।

प्रणयरुषारुणलोचनोत्पलाः परुषगिरो विमुखाश्च नः स्थिताः ।
हृदयहरैर्वचनैर्विलोभयन् क इव नमन् कुशलो नु नेष्यति ।।७।

दयित सहस्व पुराकृतानि ते मणिरशनागुणबन्धनानि नः ।
चपलमुपेहि विधेहि निर्भयं कथमपि मन्तुशतान्यतः परम् ।।८।

सुभगकलानिधिना त्वया विनाऽनिश इव हन्त तमोमयीः कुतः ।
सपदि निहन्ति न नः खलो विधिर्मृतिमपि [2]मृष्यति किं न वाञ्छिताम् ।।९।

एवं ता रुरुदुः कान्ताः कुररीकातरस्वनाः ।
प्रतिध्वनीनां व्याजेन भवनैरन्वरुद्यत ।।१०।

तासामरालपक्ष्माणि राजिमन्ति महान्ति च ।
प्रातः कोकनदानीव नयनानि चकाशिरे ।।११।

---

१. सर्वजगत्प्रशासितुर्नरिक रिपोरं । २. मृष्टाति ।

निशम्य करुणावाचो निशीथविपुलीकृताः ।
आजगामानिरुद्धस्य जननी जातसम्भ्रमा[1] ।।१२।।

सा च विलुलितालकानामुरोऽभिघातगलितहारगुलिकानामश्रुधाराधौतनयना-ञ्जनजनितमणिमेदिनीमलिनिम्नामनिरुद्धस्याकस्मिकदर्शनमुद्दिश्य रुदतीनां तासामाकर्ण्य करुणालापान् हृतसर्वस्वेव महाव्याधिहतेव ग्रहग्रस्तेव पिशाचपरीतेव पञ्चेन्द्रियोज्झितेव[2] पाषाणमयीव मुहूर्तमस्तभ्यत[3] । तदनु करुणकूपारकल्लोलैरालेख्यसृष्टिमपि प्लावयन्ती रुरोद ।

अपि यदुनन्दन कुत्र वर्त्तसे किमिति न जल्पसि शीतलम् ।
अनवहिते हृदि केन वैरिणा प्रहृतमिदं मुसलेन मर्मणि ।।१३।
विनयविभूषण मामुदीक्ष्य हा त्यजसि कुतः शयनं न सम्भ्रमात् ।
पतसि कुतो मम पादयोर्न च स्मितमधुराणि कुतो न भाषसे ।।१४।
हृदयकठोर कुतो न दीर्यसे [4]व्रजसि न शीघ्रमरेऽकुतोभवः ।
भवनमिदं बत वत्सवर्जितं कथमिव सम्प्रति पश्यतो दृशौ ।।१५।
कवचहरो हरिमत्यभिव्रजन् पितरमपि स्वयुदायुधो बली ।
क इव करिष्यति साम्प्रतं रणे निपतितहेतिमरेरनीकिनीम् ।।१६।
अपहतदानवकौणपोद्यमैर्द्विजवरमन्त्रबलैर्निमीलितम् ।
ध्रुवमसुरैर्यदि नित्यवैरिभिस्त्वमह्नि पथा[5] सकलाशिषां पदम् ।।१७।
गुणनिधिमुज्ज्वलशीलशालिनं क्षितिवलयस्य विभूषणं जनम् ।
विघटयितारमतर्कितं न किं स्पृशति विधिं करुणा कियत्यपि ।।१८।
अशृणवमन्वहमेव[6] या स्तुतिं सुनयनजामिषु वीरसूरिति ।
कथमधुना बत दुर्भगेति सा त्वयि शृणवानि हृते दुरक्षरम् ।।१९।
शरभशिशोरिव वायसारिणा हरणमिदं दितिजेन वत्स ते ।
मनसि पदं लभते न धीमतां विधिरथवा न किमीहितुं क्षमः ।।२०।
त्वमरुणकोणदृशा प्रसेदुषा स्मितमधुरेण मुखेन वत्स हे ।
अहह दृशोरधुनापि नृत्यसि ज्वलति च मे विरहानलो हृदि ।।२१।
गुरुभिरुदारनियन्त्रणापरैरधिगतविद्यविसर्जितोऽसि च ।
असुहित एव नरेन्द्रसम्पदामसहृदयेन हृतश्च वेधसा ।।२२।

---

१. जातसंभ्रमाः । २. पंचेन्द्रियोक्तिव । ३. मस्तभ्यततततदनु- । ४. व्रजथ न । ५. पथाः ।
६. - मन्वरुपेव ।

अभिमतदारविभूषितस्य ते तनयमहोदयदर्शिनी कदा ।
समधिकभाग्यतया स्तुतेः पदं [१]ननु भवितास्मि समस्तसुभ्रुवाम् ।। २३।
इति मनसा परिचिन्तयन्त्यहं वितथमनोरथदीर्घकल्पना ।
शिव शिव वान्यपरेण वेधसा गतकरुणं कुलिशेन चूर्णिता ।। २४।
युग्मम्
वितरति वस्तु विभूषणं भुवः प्रतिदिनमेधयते गुणैरदः ।
हरति तदेकपदे दुराधये विधिरधिकं कुशलः कदर्थिने[२] ।। २५।
तरुरिव नूतनजालकाचितः फलमवितीर्य चिराय सिञ्चते ।
प्रविततवातबलान्निपातितस्त्वमपि[३] मनोरथमातनोर्वृथा ।। २६।
क्षणमपि बालवियोगविक्लवा दधति रतिं [४]पशवोऽपि न क्वचित्।
कुलकलशेन विना धिगत्रपा कुलिशमयी कलयामि जीवितम् ।। २७।
परिलुलितालकवल्लिवेष्टितं समुदितकोमलदन्तकुड्मलम् ।
अपि यदुवीरशिशोः स्मरामि ते [५]मृदुकलभाषणमञ्जुलं मुखम् ।। २८।
तव कियतैव तनोरनेहसा यदुपचयः करिणीशिशोरिव ।
गुणनिचयो भवदुच्चकैश्च यन्ममपरितापशताय तद्ध्रुवम् ।। २९।
अयि मम जीवन हा त्वया विना किमिति दवानलदूषिता दिशः ।
[६]अनुपयती गतिमन्तरेक्षितेरियमवलोकयिता तपस्विनी ।। ३०।
तव मुखमम्बुजचारुलोचनं स्मितमधुरं शरदिन्दुसुन्दरम् ।
अपि सुकृतैर्जनुरन्तरार्जितैः पुनरवलोकयितास्मि वत्स हे ।। ३१।
अजननिरस्तु जनस्य मादृशो मृतिरथवा जननोत्तरं भवेत् ।
अनुभवितुं बत जीवनं तु धिक् [७]प्रियनयनस्य वियोगमीदृशम् ।। ३२।
कमनुसराणि शरण्यमाकुला कमुपगता विलपानि वा भृशम् ।
परिणतिरात्मन एव कर्मणां व्यथयति जन्तुमतिप्रतिक्रिया ।। ३३।
इदमिह साञ्जलि याचतेऽबला कलय कृतान्तकृपामुपाश्रयन् ।
हृदयतुदोऽनुदिनं दुरुद्धरान् सपदि समुद्धर मेऽसुकण्टकान् ।। ३४।

---

१. नु । २. कदर्थने । ३. त्वमयि । ४. पशवोयि । ५. मृदुः । ६. अनुपपनी ।
७. प्रियनयस्य ।

इति रुदती दयिता मनोभुवो न न हृदयं दृषदोऽपि भिन्दती ।
[१]सुतविरहानलपीतचेतना सपदि मुमोह पपात च क्षितौ ।।३५।

शुशुभाते दृशौ तस्याः संसक्तैरश्रुबिन्दुभिः ।
वमन्तौ मौक्तिकश्रेणीं युवानौ खञ्जनाविव ।।३६।

अथ तां मूर्च्छितामवलोक्य युगपदेव विलपन्तीनां सहस्रशः सीमन्तिनीनामुच्चचार तारतरः करुणनिनदस्तमाकर्ण्य कन्दराभ्यः कण्ठीरवा[२] इव स्वस्वभवनेभ्यः किं किमेतदिति मुहुरुदीरयन्तो जृम्भमाणा यदवः परापतन् ।

ततः पुरुषसिंहानां शीघ्रमाह्वानकोविदाः ।
सन्नाहभेरी कृष्णस्य सभायामभ्यहन्यत ।।३७।

निनदमुपनिशम्य तेऽथ भेर्य्याः सकलपुरीपरिवर्त्तनं प्रबुद्धाः ।
फणिन इव परोपहूतिरुष्टाः सपदि जवाद् यदुपुङ्गवाः प्रचेलुः ।।३८।

आधाय मूर्द्धनि विसंष्ठुलमेव कश्चि-
दुष्णीषमीषदवनम्रसुवर्णदाम ।
आवेष्टयन् परिकरं पृथुपादपातं
कुर्वन् विकोशमसिमाशु समाजगाम ।।३९।

अयोजयित्वैव शरासने [३]गुणं ससम्भ्रमः कश्चिन सन्दधच्छरम् ।
अगूढपादो लुठदंशुकः क्षितौ चलत्किरीटः कथमप्युपागतम् ।।४०।

उपादाय कश्चिद् गदामेव [४]गुर्वीमुपप्लुत्य सौधात् प्रभिन्नः [५]करीव।
असह्यः परै रोषरक्तेक्षणश्रीः कुतः कुत्र कः कीर्त्तयन्नित्यधावन् ।।४१।

अमुक्तकोशबन्धनं बलेन रिष्टिमुत्खनन् ।
प्रदीप्तयाधिकं क्रुधा मृगप्लुतैः परो ययौ ।।४२।

कश्चिदुल्लङ्घमाना विशालाः क्षणात् कुड्यमाला महासिंहरंहा[६]युवा ।
चर्मखड्गौ वहन् स्मेरवक्त्राम्बुजो लोलहारश्चलत्कुण्डलोऽदृश्यत ।।४३।

कोऽपि कुरङ्गदृशा परिरब्धः कुङ्कुमपङ्ककलङ्कितवक्षाः ।
प्राप्तकरो लुलितालकबन्धस्त्रासकरो द्विषतां द्रुतमागात् ।।४४।

---

१. सुनविरहानलपीते चेंतता । २. कण्टीरवा । ३. गुण । ४. गुर्वा- । ५. करीवं ।
६. महासिंहरहा ।

प्रदीप्तदीपिकाशतैः पुरःसरैर्महात्मनाम् ।
पुरी रराज सर्वतश्चलाचलैश्च चामरैः ।।४५।
स्खलन् मुकुटदामभिः प्रणयिनी भुजाभ्यन्तरं
विहाय सहसोत्थितैः सुतनुदष्टदन्तच्छदैः ।
ततो मधुमदालसैररुणनेत्रपङ्केरुहैः
सभा परिवृताऽभवद् यदुभिरुच्छ्वसद्भिः क्रुधा।।४६।

अथ सभामभिप्रविश्य निजनिजस्थानमधिष्ठितेषु ध्यानमूकेषु सात्वतसिंहेषु विमनसं मुकुन्दमवलोक्य विपृथुरिदमुवाद किमिव दाशार्हशार्दूलचिन्तामभूतपूर्वामापन्नः प्राकृत इवानुशेषे । सदा विकचबिसप्रसूनसुन्दरस्य तदाननस्य म्लानिरियं नोपपद्यते[१] । नन्वायुष्मतो दोश्छायामुपजीव्य सर्व एव वयं बलवतोऽपि वैरिनरपतीन् न गणयामः । किमथवा वयं देवराज एव त्वदाश्रयेण व्यपेतयोगक्षेमचिन्तः सुखं स्वपिति । अङ्ग कापुरुषेषु लब्धावकाशा वृथा चिन्ता भवादृशेषु पुरुषसिंहेषु न प्रवर्त्तते । नहि [२]विषीदन्ति दुष्करेऽपि कर्मणि विक्रमैकरसा मनस्विनः श्वासेषु सञ्चरत्सु पश्य त्वयि विप्रतीसारपरायणे सकलमेव शोकसागरमग्नमिदं नः कुलं प्रतिभाषस्व । ज्ञातीनामाकस्मिकीमनर्थशङ्कामपाकुरु ।

यद्यप्यभूदतिशयं[३] खलु वैमनस्यं
[४]नासुप्रियस्य हरणेन जनार्दनस्य ।
स्वाभाविकस्मितसुधास्नपितास्तथापि
वक्त्राम्बुजादथ गिरो मधुरा निरीयुः ।।४७।

विपृथो न जानासि महदिदं चिन्तानिदानमुपस्थितमनिरुद्धः केनाप्यतर्कितं हृतः । शृणोषि स्नुषाया भिदुरमपि भिन्दन्तीः करुणागिरः सर्वामपि बन्धुतामामन्त्र्येदमभिदधामि । अनिरुद्धस्य हरणादशक्तान्नो ज्ञास्यन्ति सर्वेऽपि राजानः । जानीथ पूर्वमाहुको नृपतिः शाल्वेन हृतो दारुणं रणं प्रणीय यथा तं प्रत्यानेष्यामि । शम्बरेण च शिशुरेव प्रद्युम्नो हृतः प्राप्तयौवनस्तं समिति समुन्मथ्य स्वयमुपैष्यति । इत्यन्तं कालं न क्वचिद् यदूनामवनतं शिरः । अधुना त्वन्धस्य [५]शस्त्रमिव बलं मे वृथा भवति ।

हन्त पुस्तक इव प्रशोधिते भूतले प्रणिहितात्मना मया ।
अद्भुतं बुधसमाजदुःसहः शिष्यते क्वचिदशुद्धवद् रिपुः ।।४८।।

---

१. -रियंतोपपद्यते । २. विषदन्ति । ३. -दतितशं । ४. न सुः । ५. चत्रं ।

मूर्द्धनि न्यधित यो रिपुर्दधृग् यस्य धूसरमिदं पदं मम ।
सानुबन्धमधुनायमालपंस्तं नये यदि स बुध्यतेऽबुधः ।।४९।

एवमुदीर्य विरतवाचि वासुदेवे सात्यकिरुवाच—महाभाग मृगयन्तां चतुराश्चराः सर्वतोऽनिरुद्धमनन्तरमुचितमाचरिष्यते । कृतमनुतापेन । भुवनभयभङ्गहेवाकिनस्तव न किञ्चिदसुकरम् । अथ दशनदीधितिधौताधरो मुरारिराहुकं नृपतिमाह स्म—राजन् विनियुज्यन्तामनिरुद्धमन्वेष्टुमाभ्यन्तरा बाह्याश्च प्रवीणाः प्रणिधयस्तत आहूयतां प्रणिधीनामध्यक्ष इति नृपतिनोदिते ससम्भ्रमं तमुपस्थाप्य प्रणम्य च दौवारिको दूरमपासरदथ राजा व्याजहार—लघुजङ्घ निजैर्जङ्घाकारिकैस्तूर्णमन्विच्छ शाखानगरेषु शैलसन्धिष्वधित्यकासु वनेषूपवनेषु सरसीषु नदीषु चानिरुद्धम् । गृहाणामुं मन्दुरायाः सहस्रं जवनान् वाजिनो लघुपातिनस्तावतः शताङ्गान् । पञ्चसहस्राणि पुरःसरं तु तव दीपिकापाणयः पुरुषाः । कृतं कालातिपातेन ।

ततो यदाज्ञापयति महाराज इति चारैः सह स प्रतस्थे । अनन्तरं भीत इव सेनापतिरनाधृष्टिरिदमच्युतमवोचत्—वासुदेव चिरेण वक्तुकामः किञ्चिदहमपि भवन्तं भणामि, को नाम तावकीं मतिमतिशयालुः किन्तु ममतया मुखरीक्रिये । निसुन्दनरक-शाल्वशिशुपालहयग्रीवप्रभृतयः कति न बलिनो बाहुवीर्येण व्यापादिता भवता । देवानां प्रीतिमाचरतस्तव सकलमेव राजमण्डलं वैरमन्वबध्नात् । तत्र कोऽपि भवतः सद्भावेन पार्ष्णिग्राहः सहायो वा विद्यते । देवाश्च पारिजातहरणेन गभीरं क्षोभमभजन् ।

पुलोमजायामवलोकयन्त्यामैरावतस्कन्धगतः सुरेन्द्रः ।
स्वबाहुवीर्येण [1]विनिर्जितोऽथ त्वयातिवैलक्ष्यमसौ तदाप[2] ।।५०।
अतिवृत्त्य कृतज्ञतां विधूय स्वजनस्नेहमयोऽद्य सज्जनत्वम् ।
उपकारशतं वृथा विदध्यान्नियतं मानिजनस्य मानभङ्गः ।।५१।
कस्यचित् संश्रयो दृष्टः स्वतस्तेजस्विनामपि ।
ज्वलिष्यन् दावदहनः पवमानं प्रतीक्षते ।।५२।
बलिनोऽपि विषीदन्ति ये विरुन्धन्ति सर्वतः ।
संसारदोलामारूढो नह्युच्चैरेव तिष्ठति ।।५३।
अल्पोऽपि विवरं प्राप्य महतो व्याकुलत्वकृत् ।
प्रविश्य नासिकारन्ध्रं गजस्येव पिपीलिका ।।५४।

१. विनिार्जितोय । २. तदाय ।

शक्तिभिस्तिसृभिरन्वितोऽप्यलं फल्गुनाऽपि विदधीत मित्रताम् ।
श्रूयते हि पथिकः सुखं स्वपन् कर्कटेन भुजगान्निवारितः ।।५५।

तदहं भावयाम्यनिरुद्धस्य हरणेन विडौजा वैरिनिर्यातनमतनोत् । न स्वप्नः प्रगल्भते त्वत्प्रतापोष्माणमवगाहितुम् ।

इत्येवमुक्ते सेनान्यो मेघगम्भीरनिस्वनः ।
वचोव्याजेन पीयूषं ववर्ष मधुसूदनः ।।५६।

सेनानीस्तात सत्यमात्थ परमाप्तस्य भवतो नयोपबृंहितमीदृशं वचः को नाम नाभिनन्देत् । किन्तु युष्मदतिरिक्तमनुप्लवं नाहमभिलषामि । नहि करीन्द्रेषु शूरायमाणः[१] कण्ठीरवः स्वचपेटाधिकं सहायमपेक्षते ।

जातं यैः सह यैः सहोषितमहो सुक्रीडितं यैः सह
प्राप्ता यैः सह सम्पदश्च विपदः सम्भुज्यते यैःसह ।
ये जानन्ति यशोऽयशो मम निजं देहैकभिन्नाश्च ये
तान् भ्रातॄनतिवृत्त्य हन्त कतमः कर्त्ता सुहृत्सौहृदम् ।।५७।

कीर्त्तिर्मृधेषु परकीयभुजा हृता या
प्रीणाति नाङ्ग दिधिषूरिव मानिनं सा ।
भोगावलीं प्रहरणैर्दलितः शृणोति
यत्र स्वदोरतिशयस्य जयोऽजयः सः ।।५८।

प्राणान् ये तृणयन्ति शस्त्रदहने ख्यातान्वयाः क्षत्रिया-
स्तेषां तात मनोरथस्य विषयः कीर्त्तिः परं स्थेयसी ।
सा कीर्तिर्न नतं लतेव भजति प्रोत्तुङ्गमारोहति
प्राणन् कः प्रणमेत तन्वपि ततः साहायकार्यं परान् ।।५९।

बलिनो भवति सहायः कृशस्य तस्यैव बाधको भवति ।
तेजस इव पृषदश्वो लोकोऽयं स्वार्थशृङ्खलाबद्धः ।।६०।

अरिप्रतिक्रियाभारः सत्यमेकेन दुर्वहः ।
किन्तु दुर्मित्रसंसर्गात् ततोप्यापद् गरीयसी ।।६१।

यच्च भवान् पाकशासनं प्रतीदं पापमाशङ्केत नैतदौपयिकं नहि देवाः क्षुद्रकर्माणो न वा कृतघ्नाः ।

---

१. शूरयमाणः ।

पिधाय दोषानुपचारपण्डिता गृणन्ति सख्युस्त्वसतोऽपि वै गुणान् ।
स्तुवन्ति तामेव परं कृतज्ञतां यया रिपूणामपि गीयते गुणः ।।६२।
वस्तुतो मम रिपुर्न कश्चन त्वं यदात्थ विरुणत्सि सर्वतः ।
वैरिणो मघवतश्चमूपते[1] शातयेयमिति मे विधित्सितम् ।।६३।

स किल भक्तानुकम्पी शतक्रतुः कथं कुहकजनैकगम्ये पथि पदं निदध्यात् । वैरनिर्यातनमपि दोःशालिनः समरेणैव चिकीर्षन्ति न त्वसमर्थजनसेव्यया कुसृत्या ।

रणे रसक्रियां[2] धीरो रणेनैव व्यपोहति ।
नहि शास्त्रे पराभूतो गालिभिर्जयमश्नुते ।।६४।

तदीदृशमनार्यमार्यस्य शचीपतेर्न घटते ।

कृष्णस्य वाचमाश्वस्य[3] श्रुतिभ्यां सुहिते जने ।
अक्रूर आददे वाणीमन्तर्वाणीन्[4] प्रहर्षयन् ।।६५।
सन्दधातु कथं शौरिर्देवानामरिभिः समम् ।
चिकर्त्तिषति यां शाखां तां जनो नावलम्बते ।।६६।
एको जगद्धि तिमिरं तनुते विवस्वा-
नेको हरिः परिममौ स्वपदा च विश्वम् ।
क्षत्रं जिगाय भृगुजो बहुकृत्व एक-
स्तेजस्विनो न खलु नाम परप्रतीक्षाः ।।६७।
सेनापते मघवतो नहि कृत्यमेतत्
संभाव्यते ननु मुकुन्दपरायणः सः ।
येषां कृते वयमिह प्रयतामहे ते
नास्मासु निन्दितमिदं विबुधा विदध्युः ।।६८।
ततः सभ्येषु सर्वेषु विमृशत्सु यथामति ।
वाग्ग्मी वाचस्पतिरिव व्याजहार जनार्दनः ।।६९।
न देवा न च गन्धर्वा न यक्षा न च राक्षसाः ।
अनिरुद्धं जिहीर्षन्ति न च तं हर्तुमीशते ।।७०।
रामणीयकगुणेन मोहिता कापि दानवकुले वराङ्गना ।
तं जहार हृतमानसं ध्रुवं योषितामकरणीयमस्ति किम् ।।७१।

---

१. चमूयते । २. रणेतिरसक्रियां । ३. -माश्वम्य । ४. मन्तर्वाणोन् ।

शूरोऽपि विद्वानपि दक्षिणोऽपि विरज्य संसारसुखस्थितोऽपि ।
समन्दहासं तरलैः कटाक्षैः कृष्टो वधूभिर्विरलः स्थिरःस्यात् ।।७२।

मायाविन्यः स्त्रियः सर्वाः साहसैकरसाः सदा ।
ऐश्वर्यमत्ताः प्रायेण दैत्यदानवयोषितः ।।७३।

अत्रान्तरे च धूलिधूसरभ्रूश्मश्रवो बद्धपरिकराः कशापाणयः पुरुषाः सभामभिप्रविश्य प्रणमन्तो विज्ञपयाम्बभूवुः ।

देव वेणुमन्तं लतावेष्टं रैवतकमृक्षवन्तमन्यांश्च गिरीन् कन्दराः काननानि सरित्सरांसि [1]खेटखर्वटवाटिकाः प्रतिश्रयान् देवतायतनानि नगरघोषसंवाहाननुप्रविश्य कतिकृत्वो न व्यचैष्म[2] । क्वचिदपि नावलोक्यते कुमारः । किमपरमाज्ञापितं भवति ।

तदाकर्ण्य किंकर्तव्यतामूढमनसः सर्व एव वृष्ण्यन्धका विमनसो बभूवुः । कति[3] निःश्वासनुन्नाधरा वाष्पमसुस्रुवन्नितरे रोषरताननना भ्रुकुटिमबधनन्येऽनिरुद्धो हृत इत्याम्रेडयन्नन्ये[4] तु पुरुषोत्तमस्य मुखमवालोकयन् ।

विषादमलिनैरेभिः सा सभा न व्यशोभत ।
समन्तान्निशि निद्राणैः सरसीव सरोरुहैः ।।७४।

रुरोद हा हन्त तथावरोधः पुरी जजागार यथा समग्रा ।
निशापि सा मान्द्यमवाप शोकाद् यत्र व्यतीयाय जनस्य तूर्णम् ।।७५।

अभिभूताः फणिन इव श्वसन्तः परस्परमभाषमाणाः परमपौरुषं चिकीर्षवस्ते निशावसानमन्वपालयन्नथ कुतश्चिन्मधुरस्वरं कोऽपि यामिको जगौ ।

चरमरजनियामे पिंषतीभिर्वधूभि-
र्लयमयमुपनीतो गीतिभिर्मन्द्रसान्द्रः ।
रविरथ निनदेनोत्प्रेषणी पीवरदृग्[5]-
ध्वनिरवसितकल्यां शर्वरीशं सतीव ।।७६।

अपि च

कलयति तिलपर्णी पङ्कमाप्याय्य[6] सद्यो
हरिति हरिहयस्य प्रौढरागच्छलेन ।
अपि सपदि लुनीते तारकापुष्यपुञ्जं
तपनमुपनमन्तं पूजयिष्यन्नु कालः ।।७७।

---

१. खेव- । २. नय चैष्म । ३. कपि । ४. -म्रेडयन्येरपुरुषोत्तमस्य । ५. निनदेनोत्प्रेणी पीवरदृ- । ६. -मापिय्य ।

तत आस्थानमण्डपस्य मध्यमां कक्ष्यामाश्रित्य पञ्चवाद्यध्वनिभिरनुगतेन स्निग्धमधुरेण स्वरेण वैतालिका माधवं प्राबोधयन्—

जय जय यदुवंशपाथोधिपीयूषभानो जनो
गतरुचिरधुना विधौ बद्धतृष्णास्त्वदालोकने ।
अपि जहति दिशस्तवालङ्कृताः कीर्त्तिभिः कौमुदीं
किमपरमुपयाति यत् त्वाममुं मुञ्चती श्रीरपि ।।७८।

यामिन्या जित इव रूपकाणि ताराः स्वच्छन्दं सपदि निरम्बरीकृत ।
विच्छायो विवसुरसौ प्रयाति चन्द्रस्तं दृष्ट्वा सरसि हसन्ति पङ्कजानि ।।७९।

कृष्टानां करिभिः करालगतिभिः[१] क्वाप्यन्दुकानां स्वनै-
रुन्मीलत्सु सरोरुहेषु निनदैरिन्दीवराणां[२] क्वचित् ।
यान्तीनां रतिमन्दिरान्मृगदृशां मञ्जीरशब्दैरितः
कामं श्रोत्रसुखाकरोऽयमधुना कोऽपि क्षणं वर्त्तते ।।८०।

अन्तं यान्त्या निपतति निशः क्रोडतस्तिग्मतेजा
बालक्रीडा किमनुविदधत्पूतनां मथ्नतस्ते ।
पश्यन्त्यस्तद्विहगविरुतैर्गोपकान्ता इवाशाः
काकुग्रस्तं किमपि परितो व्याकुलं व्याहरन्ति ।।८१।

उच्छेत्ता तमसः श्रियः कलयिता चक्रस्य भर्ता जगत्
पादैः स्वैः क्रमिता द्रुतं च कमलामोदस्य कर्तानिशम् ।
चातुर्वर्ण्यमसौ भवानिव कृती स्वस्वक्रियां शासितुं
मन्देहान् द्विषतो विजित्य रभसा प्राप्तोदयो भानुमान् ।।८२।

पद्मिन्यः सवितुर्वियोगदहनस्येङ्गालराजीरिमा
निर्वाणस्य वमन्ति पङ्कजमुखै रोलम्बमालामिषात् ।
आर्द्रान्तःकरणो रथाङ्गरमणीकारुण्यधारोदयाद्
देवो रागभरेण भानुरपि ता गाढं करैः श्लिष्यति ।।८३।

शापात् कोकवधूजनस्य नियतं कान्त्या स्वया वञ्चितो
धत्ते हन्ति विधुः पुराणकठिनी पिण्डोपमानं वपुः ।

---

१. अयमंशो मातृकायां नास्ति । मयैष ऊहित इति वागीशः। २. रिन्दिवदिराणां ।

अश्वैश्चण्डकरस्य सैन्धवशिलाखण्डभ्रमाद् भक्षिता-
स्तारा: सत्यमहो विहायसि यतो नैता: स्फुरन्ति क्वचित् ।।८४।

अरविन्दद्वन्द्वपरिमलतुन्दपरिमृजः प्रगेतनः पवनः ।
श्वास इव पद्मिनीनां सुखाकरो भवतु भवतोऽयम् ।।८५।

अथोदतिष्ठन्मुकुन्दमामन्त्र्य तमेवार्थमनुचिन्तयन्तो गुरुजागरालसपक्ष्माणः स्वस्वसदनेभ्यः सभासदो जनार्दनोऽपि धरणितलविलम्बिमौलिभिः प्रधानपुरुषैर्वन्द्यमानः स्नानमन्दिरमाजगाम । तत्र रत्नपीठमधिष्ठितममुं शातकुम्भकुम्भादनुदस्य सुरभि-सुखोष्णैस्तीर्थतौयैः स्नानाधिकारिणः स्नपयाम्बभूवुर्जगुश्च कोकिलालापललितगीतयो गायकाः । ततः कमलकिञ्जल्कपिञ्जरं वासो वसानो मुक्तालतालङ्कृतविशालवक्षाः स्वर्णसूत्रासनमासीनः सवितारमात्मज्योतिः सावित्र्या भावयाम्बभूव । पुनरग्निशाला-मुपगम्य त्रेतामतर्पयद् धरामरेभ्यो यथेष्टं वसु विसृज्य गुरूणामनुरोधेन समं सुहृद्भिः किञ्चिदभ्यवजहार । रजतपत्रपाण्डुराः सुरभिताम्बूलवीटिका[1]: स्वीकृत्य सात्वतमुख्यै-रनुगम्यमानः सभामभ्यवर्त्तत वासुदेवस्तत्रोपविश्य च बभाषे ।

युष्माभिरभिसरैरुपेतस्य मम न कश्चिदजय्यः किन्तु कालस्य वैलक्षण्याद् बलवानपि क्वचिदवसीदति, यत्र पुरुषकारमुपालभमानो दैवमेव प्रशंसति । शोकस्रोतो-रयेण ह्रियत एव पण्डितस्यापि प्रज्ञा, किं पुनराजानमुग्धस्य नारीजनस्य । नाकर्णयि-तुमुत्सहे वधूनामनुक्षणमुदीयमानमाक्रन्दमनिरुद्धस्य हरणमुपेक्ष्य स्थितानस्मानन्तरात्मैव ह्रेपयति किमुतान्यस्तत्किमत्र प्रतिविधेयमिति ।

तदाकर्ण्य कोकनदानुकारिनयनयुगलः कालकोदण्डकुटिलभ्रुकुटिविटङ्कित-ललाटपट्टः सर्वाङ्गीणस्वेदबिन्दुकन्दलितकान्तिर्घूर्णमानपरुषतरतारं विष्वगवलोक्य प्रलयपरिवर्त्तमानपुष्करावर्त्तकध्वानधीरेण स्वरेण हलायुधः प्रणिजगाद—कृष्ण कृष्ण न प्रीणाति नस्तवेयमक्षमस्येव पुनः पुनरनुतापपरिपाटीपटीयसां कोपकृपीटयोनिज्वाला वैरिनारीनयननीरधाराभिः शाम्यति । न शोकेन क्षमामशक्तिं सौजन्यं क्लैब्यं दयामदाक्ष्यमुपकारं भीरुत्वमाकलयतां खलानामुपेक्षयोपचीयन्त उत्साहशक्तयः ।

कौटिल्यमेव साधीयो धिगनर्थकमार्जवम् ।
नमन्ति प्रतिपच्चन्द्रं न राकाशशिनं जनाः ।।८६।

भवन्नधस्तात् तुङ्गानामाक्रामश्च न तं नतम् ।
त्यजत्कण्टकिनो याति संसारगहने जनः ।।८७।

---

१. सुरभितां वलवीटिकाः ।

आरोढुमिच्छति बलादुपलालयन्तं दूरादपैति चकितो दृढदत्तदण्डात्।
क्रूरैः स्वरैः परमनुद्रवति त्रसन्तं कौलेयकश्च कुजनश्च समस्वभावः ।।८८।
गतरागरुषां तपोधनानामपि केचिद् यदि विघ्नमाचरन्ति।
न कुतः सकलेप्सितां धरित्रीमुपभोक्तुः किल वैरिणो भवेयुः ।।८९।
धिक् तद् बलं येन न निःसपत्नं धिक् तद् धनं येन न दानभोगौ।
धिक् तच्छ्रुतं येन गतो न मोहो धिक् तत् तपो येन मनो न शुद्धम् ।।९०।
यद्यायुधीयोऽपि जनः श्रयेत क्षमां हि कालेन फलप्रदात्रीम्।
धुरं दधानो विविधायुधानां तदा मुधा श्राम्यति किं वराकः ।।९१।

अस्वीकृत्य क्षतान्युग्राण्यकृत्वा साहसं महत्।
अनभ्युपेत्य हिंसां च राज्यं मध्विव दुर्लभम् ।।९२।
न हन्ति युगपच्छ्येनः शकुन्तानखिलान् भ्रमन्।
प्रभावः कोऽपि तस्याहो निपतन्ति यतः खगाः।।९३।
महोन्नतानविदधत्पादाक्रान्तान् धराभृतः।
नोदयं न प्रतापं च नृपो रविरिवाश्नुते[1] ।।९४।
राज्यं तेजः प्राणं तेजः शौर्यैकजीवातु।
शौर्यं स्वभावतीव्रं पराभिभूत्यक्षमाहृदयम् ।।९५।
उत्सारयन्नुदयते द्रुतमेव तारा-
श्चन्द्रश्च चण्डकिरणो गगनाङ्गनाद् यत्।
श्लाघ्यं तदस्य न मनस्विजनैः कथं वा[2]
तेजस्विनो हि न सहन्ति परस्य तेजः ।।९६।
उत्खाय विद्विषः स्थाणून् न यावद् भूः समीकृता।
कथं तावदनुद्घातमाज्ञाचक्रं प्रवर्त्तताम् ।।९७।
तेजस्विनामस्तु कुतो न मुख्यः कुतो न वन्द्येत जनैर्विवस्वान्।
अहो न तिष्ठासति तेजसा यो वियुज्यमानः क्षणमप्यनुग्रः ।।९७।
सन्धिं क्वचित् क्वचन विग्रहमागमज्ञः
कुर्वन्निपातमपि किन्तु न दीर्घसूत्रः।

---

१. रविरिवाश्रुते। २. वो।

आदेशतः प्रकृतिभावविचक्षणत्वात्
साध्नोति भूपतिरलं सकलान् प्रयोगान् ।।९८।

अस्मासु च नान्तरेण नित्यवैरिणो सुरानन्योऽपचिकीर्षतीति सुप्रकाशं तदलमनया प्रतिक्षणमुत्साहमपहरन्त्या दीर्घचिन्तया । किन्तु—

अद्यैवोद्दामदृप्यद्दनुजभटघटाकन्धरारन्ध्रनिर्यद्-
रक्तस्त्रोतःशतेन स्खलदसुरशिरोमल्लिमाल्याचितेन ।
स्नाता प्रत्यर्थिपृथ्वीपतिकमलमुखीनेत्रपाथःपृषद्भि-
र्हारं बिभ्रत्यदभ्रं त्यजतु वसुमती भूरिभारप्रयासम् ।।९९।

अपि च—

अन्त्रस्नाय्वस्थिमेदःपिशितलवलुलल्लोहितोल्लोलपङ्कै-
रादिग्धः स्निग्धभावाद्विषतिममकरादात्मनैवोत्पतिष्यन् ।
अद्यैवारभ्य मुष्णन्[१] क्षुधितवृकशिवाक्रव्यभुक्काककङ्कान्
सौनन्दो नन्दयन् वः परधरणिपतीन् कण्डयत्यप्रकाण्डे ।।१००।

संरम्भिणः सीरपाणेर्भाषितस्योत्तरं ततः ।
प्रावर्त्तन्त गिरः शौरेः केका इव घनध्वनेः ।।१०१।

[२]अत्रभवता सनाथस्य मे न कयापि चिन्तया भवितव्यम् । हताः परिपन्थिनस्तव किमपि लोहितायति नयनकाणे को नाम भवन्तमन्तरेणोत्साहवर्द्धिनीरोजस्विनीरीदृशीर्वाचोऽभिदध्यादहो नीतिसंवलितानां कापुरुषमप्युत्तेजयन्तीनां गिरां शैली । अहं तु निर्णिनीषुरर्थगौरवान्मुहुरनुयुनज्मि । विद्वद्भिराप्तैर्निपुणं विचार्य कार्यमुपक्रममाणो जनो न वाच्यतां विदति । दैवसहकारेण प्रारम्भानुरूपां सिद्धिमथ श्रुते शास्त्रं हि मोहसन्तमस्रे रत्नदीपज्योतिरिव निर्बाधमर्थप्रकाशकं तत्सहायेन सञ्चरमाणा मनीषिणां धिषणा किन्नोपलभते । न पण्डितम्मन्येन न दैवपरेण न साहसैकरसेन विजिगीषुणा भवितव्यमिति हि दण्डनीतिविद आमनन्ति । अवश्यभाव्यं च तेनार्थेन यत्र पञ्चषाणां सुमेधसां प्रज्ञासंवादः ।

निगदन्निति स्मितमनोज्ञया दृशा
मुखमुद्धवस्य समुदैक्षताच्युतः ।
अभिसन्धिविन्नरकवैरिणस्ततो
मितमर्थवत् स शनकैरभाषत ।।१०२।

१. युष्मन् । २. आर्षभवता ।

अर्थे हलधरेणोक्ते नार्थः कोऽपि परोक्तिभिः ।
जलदेनोक्षिते क्षेत्रे कुल्याकल्पनया कृतम् ।।१०३।
बोधितस्य निगमेन कर्मणो ज्यौतिषं समयनिर्णये यथा ।
अर्थवद् भवति तद्वदस्तु वा सम्मतस्य हलिनो वचो मम ।।१०४।
[1]तेन वेत्ति जनो निजानि कृत्यान्यपि यत्नं तनुते न ना प्रमत्तः ।
गहनत्वमहो महद्विधीनां श्रुतनिर्भेद्यमतो नयोपयोगः ।।१०५।

आमनन्ति समं शक्तित्रयं किन्तु मता मम ।
एकान्तमाद्यङ्करणी मन्त्रशक्तिर्महीभृतः ।।१०६।
[2]चतुष्टयीमधिगतो विद्यानां वृद्धसेवकः ।
आरुरुक्षुः पदं तुङ्गं [3]सपत्नान् षड् जयेज्जनः ।।१०७।
अविनीतात्मनः शास्त्रमरण्यरुदितं ध्रुवम् ।
भूयोऽपि जनुषान्धस्य [4]निध्यं जनमपार्थकम् ।।१०८।
दुर्मेधसि प्रभौ सर्वं राज्याङ्गमवसीदति ।
किं कार्यं करणैः सद्भिरात्मैव विगुणो यदि ।।१०९।

नृपतिः स्वयमक्रियोऽप्रबोधः सचिवानां करकन्दुकत्वमेति ।
नतिमुन्नतिमश्नुतेऽव्यवस्थां ध्रुवमन्योन्यजिगीषया प्रयुक्तः ।।११०।

मृदुर्वचसि कर्कशो धनुषि दुःसहस्तेजसि
क्षमी नमति लम्पटो यशसि दारुणो द्वेष्टरि ।
गुरुर्मनसि सुस्थिरो विपदि निर्मदः संपदि
श्रियो भवति भाजनं पुरुषपुङ्गवः कश्चन ।।१११।

हिताहितपरिच्छेदो मन्त्रगुप्तिरचापलम् ।
आकारगुप्तिरौदार्यं शौर्यं साम्राज्यकृद् गणः ।।११२।
अष्टवर्गे कृतमुखः सप्तव्यसनवर्जितः ।
प्रयुक्तषड्गुणो हन्यात् प्रतानां पञ्चधा भयम् ।।११३।
प्रयोगकुशलो यस्तु वैरिवृत्ते चतुर्विधे ।
अन्तमासादयत्येव द्विविधानां द्विषामसौ ।।११४।

---

१. तन । २. चतुष्ठयी । ३. सयत्नान्षड्: । ४. दुर्वीक्ष्यमिति भावः ।

भौजङ्ग्या द्वेष्यतां याति वैतस्या क्रमणीयताम् ।
अनित्ये तदिमे वृत्ती देशकालनिबन्धने ।।११५।
दानं साधयते शीघ्रं यथा साम्ना मृदूकृतम् ।
उपजापेन शिथिलं तथा दण्डोऽपि दुर्हृदम् ।।११६।
गिरः शुचीनामवधाय मन्त्रिणां
विविच्य चारैरखिलं च मण्डलम् ।
विचिन्त्य च स्वस्य परस्य विक्रमं
नृपोऽभियुञ्जीत सुहृद्बलान्वितः ।।११७।
बलवानहमित्यखर्वगर्वो न न याति[1] क्रममाचरेदभिज्ञः ।
नयविभ्रमवेदिनः प्रवीणा न निबध्नन्ति बलीयसोऽपि नागान् ।।११८।
बलादहंयुर्द्विषतां बहूनां मध्ये य आत्मानमनीतिरुज्झेत् ।
पिपीलिकासङ्घसमाकुलस्य दशामसौ विन्दति पन्नगस्य ।।११९।
[2]समूलकाषं कषितुं समर्थो यदा तदैव द्विषतोऽभियुञ्ज्यात् ।
त्यक्तो वरं दूरतरं भुजङ्गो हताहतस्तु प्रसभं भयाय ।।१२०।
[3]भवन्तमञ्जसाप्यर्थं नीत्या तन्वन्ति तद्विदः ।
प्रत्यक्षदृष्टोऽपि करी तार्किकैरनुमीयते ।।१२१।
अविलम्बितभक्तवेतनं सततं सत्कृतशूरपूरुषम् ।
ददती नवकीर्तिमालिकां विजयश्रीर्वृणुते जनाधिपम्[4] ।।१२२।
विश्लिष्टावयवस्यान्तर्घृष्टस्य बहुभिर्बहिः ।
तरोर्हि दुर्वारतरो [5]विष्वद्र्यङ् दावपावकः ।।१२३।
असुराः सुरराजवैरिणो हननीया भवतेति साम्प्रतम् ।
अपराधिषु दण्डमादिशेदिति वाचो विषयस्तु तेषु कः ।।१२४।
गुणिष्ववन्ध्योऽनुगुणः प्रसादो ममत्वमुच्चैः शरणागतेषु ।
विनिश्चितागस्सु जनेषु दण्डः प्रभुत्वमेतन्निगदन्ति सन्तः ।।१२५।
गोपितोऽपि रिपुभिः [6]प्रकाशितः शम्बरारितनयो गमिष्यति ।
संवृतोऽपि वसनैः प्रयत्नतः सत्वरं भवति नोच्छिखः शिखी ।।१२६।

---

१. पाति । २. समूलकाष– । ३. भवत- ४. जना धियम् । ५. विश्वग्रङ् ।
६. प्रकाश्तो ।

यदि च सुरवैरिणां कृत्यमेतत् तदा सुरेष्वेव कश्चित् प्रणिधीभूय सर्वमावेदयिष्यति । अहं तु भवदुक्तमेव निश्चिनोमि । कथितमेव मेऽनिरुद्धस्य सवयोभिरेषु दिवसेषु [1]प्रकृतेरयाप्यरिपुर्यं दृष्टश्च स केनाप्याधिनाऽभितप्तचेताः । तत् क्षमस्व कतिपयान्यहानि विदितवृत्तान्तो यथोचितं विधास्यसि ।

सम्मतां मतिमतामिति वाणीमुद्धवस्य सुनिशम्य मुकुन्द[2]ः ।
एवमित्यभिदधौ सचिवानामाननेषु नयने निदधानः ।।१२७।

पञ्चास्या इव करिणः परस्य गन्धं
ये सोढुं क्षणमपि जित्वरा न शेकुः ।
वृत्तान्तश्रुतिसमयं प्रतीक्षमाणाः
कोपाग्निं कथमपि तैः स्थिता निगृह्य ।।१२८।

अपवर्जिततूर्यनिःस्वना रहिता मङ्गलमञ्जुगीतिभिः ।
रुरुचे कतिचिद् दिनानि नो नगरी सा मलिनाननैर्जलैः ।।१२९।

अभ्यस्यतां तत्र पुरे वटूनामहर्मुखे ऋग्यजुषप्रणादः ।
कृतः कुमारैः खुरलीषु घोषो न सायमश्रूयत शिञ्जिनीनाम् ।।१३०।

सायाह्नेषु लोहितोष्णीषा लोलकुण्डलाः सुरभिवाससो रथवारणवाजिभिर्बाह्योद्यानविहारिणो नागरा न समचरन्त प्रतोलीषु ।

वाराङ्गनानूपुरशिञ्जितेन छात्रा इवाभ्यासपरा गृहा ये ।
सङ्गीतशून्यासु निशासु नूनं तूष्णीमनध्यायधियाऽभवंस्ते[3] ।।१३१।

अतन्द्रचन्द्रोज्ज्वलशीतलासु न चन्द्रशालासु महाकवीनाम् ।
काव्यानि तृष्यन्नपि निर्मनस्त्वाद् विदग्धलोको रसयाम्बभूव ।।१३२।

[4]रहःस्थितानामपि दम्पतीनामन्योन्यकण्ठग्रहकेलिकाङ्क्षा ।
अभून्न गुञ्जन्मधुपासु किञ्च पिपासुता किञ्चन वारुणीषु ।।१३३।

प्रतिक्षणं तस्य गुणानुदारानाकृष्टचेतांसि समालपन्ति ।
न लेभिरे शर्म [5]मनोजसूनोर्मित्राणि कुत्रापि वियोगभान्ति ।।१३४।

एवमनिरुद्धस्य हरणादस्वस्थचित्तः समस्तोऽपि नगरवास्तव्यो जनो नितान्तमतप्यत ।

---

१. प्रकृतेरपाथरयु- । २. मुकुदः । ३. –धियार्भवस्ते । ४. रहस्थितामामपि । ५. मनोज सूनो ।

परितापाकुलं लोकं शीतलीकर्तुमञ्जसा ।
तत्राजगाम शुभ्रांशुरकस्मान्नारदो मुनिः ।। १३५।

स सात्वतपतेर्भुजवीर्यादकुतोभयां भोगवतीमिव स्फुरन्महामणिप्रवेकाम-तुलविभूतिभिर्वस्वेकसारामभिभवन्तीमनवद्यनिषद्यां नगरीमीक्षमाणो राजमन्दिर-द्वारमाससाद । तत्र शिविकासहस्रसंबाधे कथञ्चिदश्ववारवार्यमाणचपलतरतुरगखुर-चन्द्रकचिह्नितपरिसरे मदोत्कटद्विरदवृन्ददानधारासमुक्षितक्षितिमण्डले चित्रास्तरण-निषादिभिर्वासुदेवदर्शनावसरप्रतीक्षैरनेकनृपैरुपसेविते द्वीपान्तरागतैरुपायन-पाणिभी राजदूतैरधिगते सौवर्णदण्डधरैः परःशतैर्दौवारिकैः परिवृते[२] प्रतिक्षणमधिज्यधन्वना कावचिकेनाभिरक्षिते ससम्भ्रममुत्थाय सर्वैरभिवन्द्यमानः किञ्चिदवातिष्ठत । अथ मुकुन्दस्य निदेशमादाय प्रधावितैः प्रतीहारैरुपनीयमानो जाम्बूनदमयीरुदारतोरणाः कतिचन कक्ष्याः समतिलङ्घ्य विश्वकर्मणः कौशलं श्लाघमानो वायुना भुवमानीतामत्यद्भुतां सुधर्मां नाम सभां न्यभालयत् ।

आकृष्टाः किल चुम्बकोपलबलाद् व्योम्नि स्थिता गौरवा-
न्मूर्तीर्लोहमयीर्विचित्ररचनाः पश्यन् प्रफुल्लेक्षणः ।
तस्यां यन्त्रवशैः प्रणम्य कृतकैर्दौवारिकैः सादरं
पृष्टः पाणिविधूननेन कुशलं स्मेराननोऽभून्मुनिः ।। १३६।

मरकतमणिस्तम्भैरभ्रङ्कषैरुपशोभितां
शशधरशिलाबद्धां मुक्तालताकृततोरणाम् ।
मृदुलसिचयास्तीर्णं चन्द्रोदयैरतुलैर्वृतां
समितिमविशत् तुङ्गैः वर्णासनैर्ज्वलितामृषिः ।। १३७।

शारिकाः कारिकास्तत्र [३]पेठुरौशनसीर्मुहुः ।
अन्वकूजंश्च ताः कीरा धीरा वाचस्पतेर्नयम् ।। १३८।

गारुत्मतमया वृक्षा वज्रपुष्पविभूषिताः ।
कुरुविन्दफलास्तत्र नीलोपलखगैर्बभुः ।। १३९।

सा बभौ निर्मलच्छायैरादर्शैरन्तरान्तरा ।
विशन् द्वारभ्रमाद् यत्र जनो हासमजीजनत् ।। १४०।

शोभितां दशभिर्नित्यं सचिवैरुद्धवादिभिः ।
जगतीमिव दिक्पालैरालुलोके[४] मुनिः सभाम् ।। १४१।

---

१. -वस्वोकसारा- । २. परिवृत्ते । ३. पेटु- । ४. दिक्यालैरालुलोलैरालुलोके ।

सा दृष्टाऽपि सभोपविश्य बहुधा देवर्षिणा मन्दिरे
गोविन्दं दधती सयादवगणं विस्मापयामास तम् ।
आधो यस्य गुणात् क्वचित् कलयते लक्ष्मीं परामाश्रयो-
[1]द्रेकेवोज्ज्वलजातरूपरचिता माणिक्यसौभाग्यतः ।।१४२।

हैमे सिंहासने तत्र नृपं श्वेतशिरोरुहम् ।
वीज्यमानं चामराभ्यामुग्रसेनं ददर्श सः ।।१४३।

हिमकररोचिषमेककुण्डलाढ्यं[2]
मधुमदघूर्णितरक्तनेत्रपद्मम् ।
परिषदि स प्रथितप्रभावमुग्रं
शितिवसनं बलभद्रमालुलोके ।।१४४।

अतसीसुमनोमनोज्ञलक्ष्मी-
र्मुनिना शारदपूर्णचन्द्रवक्त्रः ।
ददृशे तपनीयगौरवासा
नयनानन्दकरः पतिर्यदूनाम् ।।१४५।

अथ कुन्दसन्दोहसुन्दरद्युतिमिन्दुकलाभिरिव कलितकलेवरं तुषारगिरिगौरं गौरीरमणरमणीयच्छविमापिञ्जरजराकलापलम्बिसुरतरुकुसुमप्रभ्रष्टकामोदलम्पटषडङ्घ्रिगणगीयमानमुज्ज्वलोपवीतमाच्छादितकृष्णसारकृत्तिमंसावसक्तदिव्यदुकूलोपसंव्यानममरमत्तकाशिनी[3]करकिसलयार्पितमन्दारमालां महतीं वहन्तमतिशान्तेन वात्सल्यमुद्रिरतेवावलोकितेन लोकमातर्पयन्तं दृष्टानुश्रविकविषयवैतृष्ण्यजन्मना सुखेन दूरादुदस्तदैन्यं मुकुन्दसन्दर्शनस्मेरमुखसरोरुहं धवलधामधारावदातपरिषदं मुनिमवलोक्य सह यादवगणेन ससम्भ्रमं शौरिरुदतिष्ठत् ।

सकौतुकोदञ्चितचारुलोचनं
प्रणम्य सस्नेहमुदीतसम्मदम् ।
वितीर्य गामर्घ्यमुदग्रमासनं
सभाजयामास मुहुर्मुनिं हरिः ।।१४६।

पुलकितवपुषः स्मिताननेन्दो-
रमरमुनेरवलोकनान्मुरारेः ।

---

१. देवोज्ज्वलजातरूप- । २. कुंडलाद्यं । ३. मतकाशिकी ।

प्रमदजलनिधेरभूदमातो
हृदि परिवाह इवाथ सुप्रलापः ।।१४७।

जन्मान्तरेषु सुकृतेन कृतेन लभ्यं
यस्मिन् समागमसुखं सुमहात्मनां स्यात् ।
संसारिणः सकलदुःखशमैकहेतुं
दैवेन हन्त सुदिनाहमहो[१] लभन्ते ।।१४८।

सन्तोषः क इव प्रफुल्लकमलस्तोमस्पृशो मारुता-
दिन्दोः पर्वणि शारदस्य किरणैरानन्दथुर्वा कियान् ।
सर्वाङ्गीणसुधाभिषेकरचनामोदोऽपि नूनं लघु-
स्तस्मात् कस्य भवत्समागमभवं शर्मोपमामञ्चतु[२] ।।१४९।

दलयति महद् दैन्यं तोषं तनोति विशङ्कटं
प्रथयति परां [३]कीर्तिं पूजां जनेषु च पुष्यति ।
अनुदिनमहो सर्वैरभ्यर्थितोऽप्यतिदुर्लभः
सुचरितफलं पुंसां युष्मत्समागमशेवधिः ।।१५०।

त्वमात्मविश्रान्तिरगाधबोधो
विधूतचिन्तोऽपि कृताकृतेषु ।
स्वदर्शनेनैव जनं पुनानो
भ्रमस्यनुक्रोशवशस्त्रिलोकीम्[४] ।।१५१।

जगद्गुरोर्जन्महिरण्यगर्भाद-
खण्डचिद्बोधमयं तपश्च ।
परोपकारैकरसा प्रवृत्ति-
स्तव स्तवं नार्हति किं सुमेधाः ।।१५२।

असरोजभवस्य वेधसस्तव साक्षादवलोकनान्मुने ।
दलितं सकलैः शिवेतरैरुदितं सम्प्रति मङ्गलैर्नवैः ।।१५३।

अमृतवीचिचयैरिव सिञ्चती-
रिति निशम्य गिरो मुरवैरिणः ।

१. मदो । २. –मचतु । ३. कीर्ति । ४. -वशवशस्त्रिलोकीम् ।

परमसम्मदगद्गदमुत्सुकः
कमलभूतनयो मुनिरब्रवीत् ।।१५४।
गुणाः कतिपये यस्य तस्य स्तोत्रापरं जितम् ।
स्तुत्योऽनन्तगुणो यस्य प्रतिष्टौतु[1] कथं नु सः ।।१५५।
अशक्नुवाना गणने गुणानां
वदन्ति वेदाः किमु निर्गुणं त्वाम् ।
पारं महिम्नो गदितुं न शक्ता-
स्तदाहुराहो[2] परिमाणशून्यम् ।।१५६।
रुद्धप्राणमनोभिरिन्द्रियगणं निर्जित्य चित्तं चिरं
मैत्र्याद्यैः परिकर्म्यलीनसकलस्मृत्यङ्कुरैःशीलनात् ।
रुद्ध्वा हन्त ऋतम्भरामपि धियं यश्चिन्त्यते योगिभिः
सोऽसि त्वं प्रणवाभिधेयमहिमा क्लेशादिशून्यः पुमान् ।।१५७।
वात्सल्यं खलु भवतः प्रसिद्धमेत-
न्नामोक्तौ सपदि हरस्यमङ्गलानि ।
औदार्यं तव कथयाम किं महात्मन्
यो ज्ञातो दिशसि निजं पदं प्रसद्य ।।१५८।
त्वं वामनीभूय बलेर्धरित्रीं
प्रत्याहरः सौम्य पुरन्दराय ।
परोपकारे रसिकाः स्वकीयं
न विन्दते लाघवगौरवं हि ।।१५९।
लघूभवन् भूमिमयाचथास्त्वं बलिं बलस्य द्विषते द्रुतं यत् ।
महानभूस्तत् किमु बोधयिष्यन् परोपकारस्य फलं जनानाम् ।।१६०।
सामाजिकानां हि स वासनानां गुणैर्वितन्वन् सुखदुःखमोहान् ।
अहो जगन्नाटकसूत्रधारो न लक्ष्यसे त्वं बहुभूमिकाभृत् ।।१६१।
त्वदीयवात्सल्यवशेन तावकीर्विलोक्य मीनादितनूः सुखाभवम् ।
परन्तु गोविन्द न तृप्यतो दृशौ तवास्य रूपस्य पिबे कथञ्चन ।।१६२।

---

१. प्रति + ✓ स्तौतु । ष्टुञ्धातोर्लोट्लकारस्य प्रथमपुरुषैकवचनम् ।
२. 'आहो' इत्यव्ययम् ।

तवावतीर्णस्य भुवं रमापते मनुष्यचेष्टानुकृतौ प्रवीणताम् ।
विलोक्य नाल्पं विहसामि वीणया विशिष्य गायामि च तावकं यशः ।।१६३।

कर्पूरैरिव कैरवैरिव दलत्कुन्दैरिवेन्दुप्रभा-
संदोहैरिव दुग्धवारिधिवलद्वीचीवितानैरिव ।
त्रैलोक्यं सुयशोभिरुज्ज्वलतरैः प्रक्षालितं तावकैः
[1]श्वेतद्वीपमपेतगौरिभमदं निर्माति किं वर्ण्यताम् ।।१६४।

नखनिस्तुषीकृतसुधांशुदीधिति-
द्युतिभिस्त्वदीयसुयशोभिरावृतम्[2] ।
रजताचलं किमपि नन्दिहुङ्कृतै-
र्द्युसदो विदन्ति[3] गिरिशं दिदृक्षवः ।।१६५।

शालूकं कमठपतिर्बिसं फणीशी
पातालं जननजलाशयश्च यस्य ।
आकाशं कलयति चञ्चरीकलीलां
तस्मिंस्ते यशसि विनिद्रपुण्डरीके ।।१६६।

त्वं दीनबन्धुश्च न दीनबन्धुर्न तावकस्तावक उद्भवोऽयम् ।
नरोपगीतोऽपि चरोपगीतो नेतासि विश्वस्य तथाप्यनेता ।।१६७।

आज्ञेव कीर्तिः क्रमते त्रिलोक्यां प्रकाशते कीर्तिरिवोज्ज्वला धीः ।
विशङ्कटा धीरिव भाति विद्या विद्येव ते स्फूर्त्तिमती वपुःश्रीः ।।१६८।

रूपेण दुर्लक्ष्यतमोऽसि सर्वैर्गुणैरसंख्यैरतिविश्रुतोऽसि ।
किमुच्यतां चित्रनिधे त्वदीयं नाम्नासि कृष्णो यशसा सितोऽसि ।।१६९।

काव्यस्य काव्यमतिवृत्य जगद् भ्रमन्तो
वागीशया नवनवोक्तिभिरीड्यमानाः ।
चित्रं चमत्कृतिभुवश्चतुराननस्य
चेतस्त्यजन्ति न लयेऽपि गुणास्त्वदीयाः ।।१७०।

जिगणयिषुः परमाणून् प्रतितीर्षुः सागरं दोर्भ्याम् ।
अञ्जलिना च पिधित्सुर्व्योम जनस्ते गुणी स्तौति ।।१७१।

---

१. श्वेतद्वीपमयेतगौरिममदं । २. त्वदीयसुमशोभिरावृतम् । ३. विन्दति ।

विलोक्य नयनानन्दं त्वामाम्नायशिखाशयम् ।
वाचामगोचरं शर्म को न गोविन्द विन्दति ।।१७२।

किन्तु चिन्तामलीमसायां संसदि किञ्चिदनुशयानमिव भवन्तमवलोक्य जातकौतुको वितर्कयामि नाल्पेन शरत्सुधानिधेरप्रसादेन भवितव्यं तन्निदानमावेदयत्वायुष्मान् । एवमुक्तवति सुरमुनौ मुकुन्दो जगाद । अभूदनल्प एवानुतापः किन्तु न साम्प्रतं किमपि ।

तापत्रयी कथं तिष्ठेत् त्वयि लोचनगोचरे[1] ।
का नाम हन्त दैन्यस्य चिन्ता चिन्तामणेः पुरः ।।१७३।

विदितमेव भवतो यथा तैस्तैर्गुणः सकललोकहृदयङ्गमत्वमभूदनिरुद्धस्य । स एकदा स्वभवनमधिशयानो मध्येनिशमकस्मादपहृतः केनापि । प्रयत्नतो मृग्यमाणोऽपि न लभ्यते तन्मूलमाभीलमखिलानेव नः किंकर्त्तव्यतामूढमनसोऽनुतापयति।

कालस्य क्रीडितं मन्ये सर्वेषामपि मूर्द्धनि ।
भूयते यत्र वज्रेण तृणादपि लघीयसा ।।१७४।

तद् भवान् करतलामलकीकृतत्रिलोकवृत्तान्तः सुरासुराणां रहस्येष्वन्तरङ्गोऽनुकूलेन विधिनेवोपनीतश्चिन्तामिमामास्माकीमपनयतु । तन्निशम्य सस्मितं मुनिरवोचत् । अलमनुतापेन श्रृणुत सकलं प्रत्यक्षदर्शिनो मत्तो वृत्तान्तं पुरुषकारातिशयं च युग्मम्—

देवानां द्रुहिण इवाखिलासुराणां
कूटस्थः कशिपुरभूद्धिरण्यपूर्वः ।
यस्याज्ञां लवमपि नोदलङ्घतेयं
साध्वीव प्रतिदिनमुन्मुखा त्रिलोकी ।।१७५।

व्यापित्वं द्रढयितुमप्रबोधभाजां
स्तम्भाग्रान्नरहरिणा त्वयोदितेन ।
वात्सल्यं प्रकटयता निजेषु यस्मि-
स्तीक्ष्णत्वं किमपि परीक्षितं नखानाम् ।।१७६।

तस्यैव कुलतिलकस्त्रिलोकीगीयमानदानमहिमा महाहवेषु बहुकृत्वो विबुधराजविजयावर्जितानाममरवैतालिकानां विरुदावलीः शुश्रुवान् बलिरभवत् ।

कथयानि कथङ्कारं शौर्यमस्य महात्मनः ।
याचकायैव यः पृष्ठं तुभ्यमप्यददात् प्रभुः ।।१७७।

---

१. लोचने गोचरे ।

देवराजानुरोधेन त्वयानीतोऽप्यधस्पदम् ।
आरूढ एव यशसा सर्वेषां स शिरस्पदम् ।।१७८।

ज्यायानस्य शते सुतेषु दिविषत्प्रत्यर्थिमौलिस्थल-
स्थास्नुस्थूलमणिप्रणीतचरणोपान्तार्चनोऽनुक्षणम् ।
वक्षःपीठविकुण्ठितामरकरप्रक्षिप्तकौक्षेयको
बाणो नाम सुरेन्द्रसिन्धुरशिरःप्रत्युप्तबाणो बली ।।१७९।

डिण्डिमाडम्बरैस्ताण्डवे [1]तोषितस्तस्य चण्डीपतिः खण्डयन्नप्रियम् ।
मौलिखण्डेन्दुना मण्डयत्यन्वहं चण्डदोर्दण्डभाजः पुरं स प्रियः ।।१८०।

ज्वलदनलपरिवेषविषमे शोणितपुरे नाम नगरे वसन्नसौ भवभवान्योः[2] पुत्रीभवनादकुतोभयः कुलक्रमप्राप्तमसुराणामाधिपत्यमधिगतो[3] दुर्वारबाहुवीर्यः परस्य वीरशब्दं न सेहे ।

गर्जद्भिर्गजवाजिवेसरगतैर्नासीरसंस्थैर्भटै-
[4]र्धाटीं दैत्यपतेः स्मरामि विकटां लोकत्रयत्रासिनीम् ।
भाराक्रान्तनतोन्नता हिमफणापट्टेषु[5] लेभे परं
यस्यां क्षोणिरियं तरङ्गपतितप्राचीनपत्रोपमाम्[6] ।।१८१।

इन्द्रे मेरुदरीं सुरैः कतिपयैराशंसमाने[7] द्रुतं
दैत्येन्द्रेष्वमरावतीमतिबलेष्वस्य प्रविष्टेषु च ।
कश्चित् कामदुघानिधीनपि परश्चिन्तामणिं चापरो
हस्ताहस्ति जहार कश्चन सुधामन्यश्च देवाङ्गनाः ।।१८२।

स च शिवाभ्यां क्रौञ्चदारणादन्यूनमवलोक्यमानो मयूरवाहनस्तृणराजवनेनेव बाहुसहस्रेण दिशो व्यजिगीषत न तु कश्चित् तमभिस्थातुमशक्नोदथासुरवरो भक्तानुकम्पिनं पिनाकिनं प्रणिपत्य व्यजिज्ञपत्—भगवँस्त्रैलोक्यकल्पपादपं तव पादपद्ममाश्रितस्य मे न किञ्चिदभिलषितमवशिष्यते । किन्तु [8]तस्य दोष्णां सहस्रस्य कण्डूतिं न सोढुमुत्सहे । बहुधा विनिर्जिताः ससाध्याः समरुद्गणास्त्रिदशाः शोणितपुरे वसन्तः परिजननिर्विशेषमुपचरन्ति । गन्धर्वास्तु वादित्रमात्रपाणयो बाणयोग्यामुदस्य बाणयोग्यां स्वक्रियामभ्यस्यन्ति । असकृद् विजित्य वासवः स्थायुक[9] इव त्रिविष्टपे स्थापितस्तत्रत्यैरुपायनैरनारतं वरिवस्यति ।

सद्यः शीर्णशिलासहस्रगहना निर्वर्णनादेव मे
ग्रावाणो वसुधाविकम्पसदृशीं व्यालोलतां बिभ्रते ।

---

१. तोपित- । २. भवभवान्यौः । ३. माधिप्रत्य- ४. धाटी । ५. पठेषु । ६. यत्रोपमाघ, ७.-रासंसमाने । ८. इतः पूर्वं 'त्वयाद' इत्यधिकः पाठः । ९. स्थापुक ।

भुग्नग्रीवतया दयां जनयति क्षोणीं दधानः फणी
शार्यारोपणपात्रमेव तु परं दीना दिशां दन्तिनः ।।१८३।

इत्थमप्रतिरथस्य व्यर्थमिव मे बाहुसहस्रं न क्वचिन्मृधमन्तरेण विश्रान्तिमधिगच्छामि तल्लोकगुरोरनुग्रहादनुरूपं प्रतियोद्धारं लभेय । एतदाकर्ण्य भगवानपर्णापतिः सस्मितमवोचत्—अचिरादेव बाण स्वानुरूपं प्रतिभटमवाप्नोषि पूर्यत एव ते रणाभिलाषः । यदा स्वस्थानस्थितस्य मयूरलाञ्छनस्य ध्वजस्यास्य च्छायाभङ्गो भविष्यति तदा समरमासन्नमवगच्छेः ।

एवमुक्तो महेशेन दैत्यराजः सुपिप्रिये ।
इष्टसाधनताबुद्धिरनिष्टे मुह्यतां किल ।।१८४।
जनानुकम्पिनस्तस्मिन् शूलिनः सोऽप्यनुग्रहः ।
नुदन्ति हि मदं त्वेषां[1] प्रभवोऽनुजिघृक्षवः ।।१८५।

ततः सुकृतसहस्रोपनतमीश्वरस्य[2] चरणसरसिजयुगं किरीटमणिमयूखनिकुरम्बेन संभाव्य विकसितवदनारविन्दः प्रसादविपुलविलोचनोऽसुरसार्वभौमः सभामभिगम्य कुम्भाण्डं नाम मुख्यमन्त्रिणमवोचत्—उपेहि सौम्य सुप्रियं किञ्चिदुच्यमानमाकर्णय । अद्य प्रसद्य चन्द्रशेखरेण चिरन्तनो[3] मम मनोरथः साफल्यमुपनीतो ध्वजनिपातमात्रान्तरायः समबलेन सार्द्धं युद्धमहोत्सवः किल निर्दिष्टो दिष्ट्या कालदण्डदुःसहानां दोष्णामुपयोगमवलोकयिष्यसि । दिष्ट्या त्वया नीयमानेन रथेन वैरिणो विजित्य वन्दिनामालोकभङ्गिभिर्मुदमुपैष्यामः ।

तन्निशम्य विस्मयवदनः[4] कुम्भाण्डो बभाषे—महाराजे वक्तुमुद्यते कतिचन कल्पना[5] मनसि ममाभूवन् । तथाहि—किं त्रैलोक्यस्य साम्राज्यमस्मै देवो दिदेश । उत विष्णुचक्रादभयमसुरैरलभ्यत । अथ पातालमिन्द्रो गमिष्यति । मुक्तबन्धनं वैरोचनिमहाराजमिन्द्रासनासीनं दिव्यमाल्यानुलेपनं पुनर्द्रक्ष्यामः । भवता तु विपरीतमेतदावेदितमनेन दूषितायतिना तव [6]बुद्धेर्विपर्ययेण सोत्कम्पमिव मे हृदयम् । औशनस्यां दण्डनीतावधीतिनः साक्षादुशनसा विनीतस्य च [7]तेनैतदौपयिकं को ह्यनुमतः प्रसेदुषो लोकत्रयगुरोरखिलं वितरीतुमुद्यतान्मदविस्फूर्जितमीदृशं वरं वृणुयात् । सत्यमेव स्मरन्ति नयविदः—

सुहृदामपरागकारणं सहसोद्दीप्तिकरौ बलीयसाम् ।
बलकोशविनाशकौ मुधा मदमानौ नृपतेः परं रिपू ।।१८६।

अत्रान्तरे च शतह्रदा हतः शाल इव सहसा शिखिलाञ्छनः केतुरपतत् । तदनु देवः शोणितं शोणितपुरे ववर्ष । मार्त्तण्डमण्डलादुल्का निपपात । चैत्यवृक्षेभ्यः सुस्रुवुः सहस्रशो रुधिरधारा ववुश्च शर्कराकिरः क्रूरस्पर्शाः प्रभञ्जना बाणजन्मनक्षत्रं

१. मदस्वेषां । २. सुकृतसहस्रोपनप्रमीश्वरस्य । ३. चिरतनो । ४. विषस्मवदनः । ५. कतिन कल्पना । ६. बुद्धे-। ७. तेनैदौपयिकं

पापग्रहैरविध्यत। तदवबुध्य विमनायमानः कुम्भाण्डो मनसि विममर्श— 'नियतमेव किं राज्ञो दोषेण[१] दैत्यदानवानामप्रतीकारः प्रमाथ उपस्थितः। कथमिव गुरूणामग्रतः कृतस्य [२]दुर्विनीतप्रलापस्य सपदि फलं नोपतिष्ठेत[३]। अहो अजितेन्द्रियाणां [४]प्रतीपपरिणामाः संपदः। सेनानीः शङ्करश्च स्वस्ति कुर्यात्'।

बाणस्तु ध्वजनिपातेनातितरामुन्मनायमानः पानगोष्ठीमध्यतिष्ठत्[५] तस्य दैत्यपतेरसमुद्रोत्थितं रत्नमुषा नाम कन्या हैमवत्या वरेण[६] प्राद्युम्निमपश्यत्। सोऽपि भाविनोऽर्थस्य गौरवात् स्वप्न एवं तामिन्दुमुखीमवलोकयाञ्चकार। परस्परानुरागप्रतिष्कशश्च[७] मीनकेतनो यूनोरतनोत् तास्ता दशाः।

अथ स्वसख्या चित्रलेखया सानुनयं तमानाय्य गान्धर्वेण विधिनाऽऽत्मानमुपयम्य रहसि रममाणा राजकन्या रक्षिभिरलक्ष्यत। ते च तत्क्षणमुदीयमानमदं राजानमभ्युपेत्य तमर्थमचकथन्। मदरोषरक्ततराक्षः स च तद्वधाय योधान् व्यादिदेश—

किं ब्रूमो वयमत्र यादवपते पौत्रस्य ते पौरुषं
स्मारं स्मारमहो वहामह इमे रोमाञ्चमानन्दजम्।
आदाय द्रुतमायसं सपरिघं यत्कालरुद्राकृति-
दैत्यानीकमचूर्णयच्चटचटच्चुर्यत्करोटिक्षणात्[८] ॥१८७॥

अथ बाणः स्वसैन्यस्य महान्तमुन्माथमसहमानः कुम्भाण्डानीतेन रथेनानिरुद्धमभ्यधावत्।

पश्याम्यद्यापि वात्यामिव दितिजपतेर्बाणधारामपारां
तस्यां निष्कम्पमुर्वीधरमिव[९] तनयं शम्बरद्वेषणस्य।
उत्प्लुत्योत्प्लुत्य वेगादसुरवरतनुं कृन्ततः खड्गपाणे-
र्धीरोदात्तस्य तस्य स्मितलवसुभगा वक्त्रकान्तिर्धिनोति[१०] ॥१८८॥

बाहूनां पञ्चशत्या युगपदुपहितैर्बाणजालैर्विदीर्णः
फुल्लाशोकस्य शोभामलभत समितावेकवीरो यदूनाम्।
दैत्यानामीश्वरोऽपि प्रसभमभिपतच्चन्द्रहासक्षताङ्गः
शृङ्गं बालातपेन च्छुरितमतितरामन्वकार्षीन्महाद्रेः ॥१८९॥

करालां प्राहिणोच्छक्तिं बाणस्तस्य जिघांसया।
तयैवोत्प्लुत्य धृतया वक्षस्तस्याभिनद् बली ॥१९०॥

यस्मिन्निर्जरनायकेन रभसान्मुक्तस्य गाढं पवेः
प्रत्यावृत्तिरभूत् परं प्रवमतो दीप्ताः स्फुलिङ्गावलीः।

---

१. दोषेणे। २. दुर्विनीत। ३. नोपतिष्टेत। ४. प्रतीय। ५. पानगोष्टीमध्यतिष्टत्। ६. वेरेण। ७. प्रतिस्क्रशश्च। ८. -च्चुयत्करोटिक्षणात्। ९. मुर्वोधरमिव। १०. धिनेति।

शक्त्या हन्त ततोऽमुना बलवता बाणोरसो विक्षता-

च्छैलेन्द्रादिव गैरिकद्रवनदीकीलालधाराऽचलत् ।।१९१।

गाढप्रहारनिर्मथितमर्मा दैत्यराजो मुमोह मुहूर्त्तोत्तरं चेतनामापन्नः कुम्भाण्डोपदेशान्मायया तिरोहितः[1] शरेणानिरुद्धमबध्नात् ।।

सहस्रशो दानवकामिनीनां क्षणेन वैधव्यकरः कुमारः ।

प्रकुप्य बाणेन जिघांसितोऽपि सता स तावत् सचिवेन गुप्तः ।।१९२।

स क्षेत्रज्ञ इव क्षेत्रे शरबन्धे नियन्त्रितः ।

अज्ञानेनेव बाणेन मुच्यते तव दर्शनात् ।।१९३।

देदीप्यमानमहनीयमहाजगत्यां

दीनां दशां विधिवशादसुरेण नीतः ।

सोपप्लवो रविरिव प्रभया कियत्या

न भ्राजते पुरुषपुङ्गव सोऽतदर्हः ।।१९४।

सफलीकुरुष्व वचनं पिनाकिनो बलवैरिणो हृदयशल्यमुद्धर ।

लघयस्व भारमवनेर्दुरुद्धरं मम नेत्रयोरतनु कौतुकं दिश ।।१९५।

तदलं विषद्य, त्वरस्व साङ्ग्रामिकेण सम्भारेण शोणितपुरमभिषेणय सेनान्या शम्भुना च। बाणसहायेन सह भावि भवतो युद्धमहं पुनः पूर्वमेव व्रजामि त्वदागमनमाख्याय कुमारमुपसान्त्वयितुम्। तन्निशम्य परं प्रसन्नैर्यदुभिर्जनार्दनेन च स्तुतः प्रणामाञ्जलिकमलकोरकैः पूज्यमानो[2] मुनिः प्रतस्थे ।

अहृष्यन्नथ रोमाणि वीराणां बाहवोऽस्फुरन् ।

न ममौ च महानन्दो हृदि युद्धाभिकाङ्क्षिणाम् ।।१९६।

ततो मुकुन्दस्य मुखारविन्दमभितो विलोकयत्सु विकसितवदनतामरसेषु सकलमन्त्रिमतेन सङ्कर्षणः सेनान्यमादिदेश। अनाधृष्टे किमधुनाऽवतिष्ठसे। ननु सांवत्सरैर्विमृश्य दण्डयात्रां नः सैन्ये समुद्घोषय। कालातिक्रमं न सहन्ते समरलालसानि यदूनां मनांसि । अथ परममित्यभिधाय वाहिनीपतिरुदतिष्ठदन्ये च प्रत्यासन्नसङ्ग्रामरसाविष्टचेतसो यादवाः स्वस्वसदनान्यगच्छन् । आगच्छच्च पवनधूयमानधवलतूलराशितुलितजलदावलीमनोहरा रुचिरराजहंसावतंसविकचपुण्डरीकपुरुषरागपिञ्जरितपल्वलोदरा रुक्मिणीरमणकीर्त्तिराजिरोचिष्णुचन्द्रिकावदातजगत्सकलजनमनोनयननन्दिनी शरत् ।

---

१. शरोरनिरुद्ध- । २. पूज्यमामो ।

मेघान्माघवनं धनुः क्षणरुचिं धारा नभोमण्डला-
दुत्सार्य द्रुतमिन्दुमुज्ज्वलरुचं तारावलीं चन्द्रिकाम् ।
व्यातेने स्फुटमैन्द्रजालिक इवातर्क्यप्रभावः प्रभुः
कालः स्वैः किल कौतुकैः कलयिता मोहं मुहुः प्राणिनाम् ।।१९७।
निर्धौतासिसमानकान्तिगगनं कामं प्रसन्ना दिशो
वाहिन्यो घनसारगौरपयसो निष्कर्दमा मेदिनी ।
वाताः पुष्पितसप्तपर्णरजसामुद्धूलनात् पाण्डुरा
लोको लोचनलोभनीमकलयत् स्वच्छां श्रियं शारदीम् ।।१९८।
तारागणैराभरणैरुपेता प्रसन्नशीतांशुमुखी नभःश्रीः ।
आकस्मिकीं म्लानिमुदस्य रेजे शुद्धाम्बरा स्त्रीव ऋतोरपाये ।।१९९।
समुल्लसद्देवपथं सचन्द्रैश्चन्द्रोपलाभैरुडुभिर्मनोज्ञम् ।
व्यैक्षन्त विस्फारितकैरवाक्ष्यो नूनं नभो रात्रिषु कैरविण्यः ।।२००।
लोपामुद्रा कान्तस्यासीत् प्रादुर्भावात् किन्त्वेकान्तम् ।
उद्धृतानां सिन्धुस्त्रीणां भीत्या मान्द्यं सौम्यत्वं च ।।२०१।
मरालमिथुनैः क्वचित् क्वचन चारुकारण्डवैः
क्वचित् प्रियतमासखश्चटुलचक्रवाकैर्युताः ।
ससारसशरारिभिर्मधुरकूजितैः सङ्गताः
प्रफुल्लकमलावृता मुदमदुर्दृशो दीर्घिकाः ।।२०२।
परिस्फुरत्खञ्जनमञ्जुलोचना[1] मनोज्ञशिञ्जानमरालमेखला ।
शरत्स्मिताम्भोजमुखी शुभाम्बरा जहार यूनां हृदयान्युपागता ।।२०३।
घनान्धकारापगमादजायत प्रभातमुन्मीलितहेलिदीधिति ।
अनन्तपल्यङ्कमुदस्य सम्भ्रमादतो जजागार रमासखः पुमान् ।।२०४।
विलिप्य धाराधरकर्दमैश्चिरं प्रतापितैर्वैद्युतजातवेदसि ।
घनाम्बुसिक्तैः कृतपानकर्मभिर्विदिद्युते तिग्मतरैः करै रविः ।।२०५।
अलिप्यतेव स्फटिकोपलद्रवैर्जगत्सुधादीधितिना निजैःकरैः ।
तथाहि नागृह्यत हंसकाकयोर्भिदा जनैः काचन शङ्खकाचयोः ।।२०६।

१. मञ्जलोचना ।

रतावसानश्रममान्द्यनोदिनीं नवोदितां स्वादुमयत्नशीतलाम् ।
पुरः प्रियां चञ्चुपवित्रतां पपुर्भृशं चकोराः खलु सान्द्रचन्द्रिकाम् ।।२०७।
निलीनभृङ्गैः रसनैर्वनीसखीः शरत्सनीलोपलहेमभूषणैः ।
अभूषयत् तूर्णमुदीय बन्धुभिः सहोपभुक्तः फलवान् किलोदयः ।।२०८।
अधारि माधुर्यमनल्पभिक्षुभिः क्रमेण ताम्बूलदलैर्जलैरपि ।
अकारि यात्रा पथिकैश्चिरोत्सुकैर्हरित्सु हंसैरपि भूमिवल्लभैः ।।२०९।

अपेतबर्हान् परुषीकृतस्वरान्
शिखावलान् विस्मृतलास्यलाघवान् ।
अतानि [१]चोदैक्ष्यनुबाणलोचनै-
र्दिशोऽहसन् काशविकासकैतवात् ।।२१०।

शालीनां समुदीक्ष्य सन्नतिमतीरापिञ्जरा मञ्जरीः
शालीनां नवयौवनेन तरलां [२]तद्गोपिकाया दृशम् ।
पान्थाः संस्मृतबन्धुजीवविरहव्यामोहशूलाहता-
श्चेष्टन्ते भुवि बन्धुजीवकुसुमैर्नीताः स्म रागं गुरुम् ।।२११।

प्रसूय याभिः सुचिरेण योषितं
धृतः प्रसादश्च विलोक्य सम्पदम् ।
अपेयुषीः कालवशादपो नुता
मुहुः स्मरद्भिः कलभैरशुष्यत ।।२१२।

पृथुस्तनीः श्रोणिभरेण मन्थराः
कृशावलग्नाः किल शालिगोपिकाः ।
अखेदयद् व्रीहिविलोपलम्पटा
पुनः पतन्ती परितः शुकावलिः ।।२१३।

नियम्य याप्यस्य खिलेन्द्रियक्रियां
चिरं वकस्य प्रणिधानशालिनः ।
कटाक्षलेखा इव सिन्धुयोषिता-
महो शफर्य्यश्चलचित्ततां व्यधुः ।।२१४।

---

१. वोदीक्ष्यनु- । २. तद्गोपिका यादृशम् ।

सलीलमुद्भ्राम्य[1] विषाणमण्डलं
समुच्चलत्सास्नमुदस्तवालधि ।
प्रधावितैः पूर्णककुद्भिरुक्षभिः
परस्परं केलिकलिर्व्यतन्यत ।।२१५।

क्वचिल्लघीयःप्लुतिलङ्घ्यपाथसः
क्वचित् समासादितपङ्ककर्दमान् ।
क्रमेण सांमुख्यमुपेयुषो ययु-
श्चिरात् कथञ्चित् पथिकाः स्मृतान् पथः ।।२१६।

समूढकर्चूररुचिर्निरन्तरा विनोदयन्ती वनिताः स्मरातुराः ।
जहार चेतांसि शणस्य वाटिका दिशः पिशङ्गीरुचिरेव शाटिका ।।२१७।

प्रह्लन्नानां भ्रमरविरुतं श्रावं श्रावं श्रवणसुखदम् ।
अध्वन्यानां मुदमजनयन् स्थाने स्थाने कमलमरुतः ।।२१८।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनामकेन
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽ-
निरुद्धचरिते नारदसंलापो नाम षष्ठ उच्छ्वासः ।।६।।



१. -मुद्धाम्य ।

## अथ सप्तम उच्छ्वासः

उदघोषयन्नथ चमूषु चक्रिका
विजयप्रयाणमहमिन्दिरापतेः ।
हृदयानि वैरिधरणीभृतां भृशं
पवमानलोलतृणतुल्यतां दधुः ।।१।

पत्तीनां परिधावतामित इतः सन्नह्यतां सादिनां
मातङ्गेषु निषादिनां रचयतां शृङ्गारभङ्गीश्रियम् ।
कीलस्तम्भगुणान् स्थुलानि शतशो हृणां बहिष्कुर्वता-
मासीत् सम्भ्रमतो विशेषसुभगः सेनाप्रयाणोत्सवः ।।२।

सा नासीद् विशिखा पुरे प्रवितते या वारणैः स्यन्दनै-
रश्वैरश्वतरैर्नरैश्च करभैर्नीता न सम्बाधताम् ।
नाभूत् सोऽपि भटो न यस्य वदने प्रत्यूषपूषं प्रभा-
स्फूर्जत्कोकनदद्युतिप्रणयिनी लक्ष्मीः समालक्षिता ।।३।

अथ रामसत्त्वनयश्रुतोपपन्नः
सुभटसुहृद्वत्सलानुजीविबन्ध्युः[1] ।
पुरुषमतङ्गजवाजिशीलनाम्नोः
प्रहरणयुद्धविभेदयोः प्रवीणः ।।४।

स्वपरचराचरणप्रयोगदक्षः
प्रविदितदूतगतिर्जितश्रमश्च ।
वनजलदुर्गविगाहनेष्वभीरुः
प्रियकटकोऽतितरामदीर्घसूत्रः ।।५।

धृतकवचः कृतखड्गचर्मबन्धः
सशरशरासनशोभमानपाणिः ।
प्रतिभयकान्तवपुःप्रसन्नवक्त्रः
पवनजवं हयमाश्रितो महान्तम् ।।६।

१. सलानुजीविबन्धुः ।

[१]अभिहरिसद्ममनीकपैरनेकै-
गजघटया रथकथया समेतः ।
प्रचलति सादिबले विशिष्य सज्जे
कटकपतिः पुरतः पटुः प्रतस्थे ।।७।

चतुर्भिः कालापकम् ।

सशेखरपरागेण पिञ्जरीकृत्य भूतलम् ।
उवाच वाचं मधुरां मधुराधिपतिं सुधीः ।।८।
सर्वं हस्तिनखे सज्जं सज्जनानन्दवर्द्धन ।
प्रतीक्षते तव बलं बलदेवप्रियानुज ।।९।

समयश्चायमुपशमितकर्दमः स्वादुसलिलः सुतरतरङ्गिणीकः सम्पन्नव्रीहियवसेन्धनः सरलसरणिर्नातिशीतोष्णो विजययात्रायै त्वरयति । तन्निशम्य स्मितमधुरं मधुसूदनो नृपतिमुग्रसेनमिदमगदद् द्वितीयो भवान् पुरीं परिरक्षतु मामार्यं प्रद्युम्नं च। यद्यनुमन्यसे तदाऽनिरुद्धमानेतुमिच्छामः । ततो राजा जगाद—कृष्ण त्वामन्तरेण क्षणमपि लङ्घितुं नोत्सहावहे । किन्तु कार्यमेव तथाविधमिति शिवाः सन्तु पन्थानः ।

नेदुर्दुन्दुभयोऽथ मङ्गलरवाः पुण्याहमूचुर्द्विजा
लाजैर्मौक्तिकमेदुरैः सकुसुमैरभ्याकिरन्नङ्गनाः ।
कन्या भूमिसुरान् सुरान् ससुरभीनभ्यर्च्य दामोदरः
शस्त्रग्राममपूजयच्च जगृहे प्रास्थानिकं मण्डनम् ।।१०।
रराज मूर्द्धन्यधिकं मुरारेर्मौलिर्मणिव्रातमयूखदीप्रः[२] ।
उदीय वैदूर्यमये मनोज्ञे शृङ्गे सहस्रांशुरिवोदयाद्रेः ।।११।
रेजे चलत्कुण्डलमौक्तिकं तन्मुखं विशेषात् परमस्य पुंसः ।
कोजागरे कैरवबान्धवस्य प्रकीर्णपीयूषपृषन्नु बिम्बम् ।।१२।
आकाशकान्ते शुशुभेवदाता मुक्तावली वक्षसि विस्तृतेऽस्य ।
मध्ये स्थितं कौस्तुभमुष्णरश्मिं विष्वग्ग्रहश्रेणिरिव श्रयन्ती ।।१३।
केयूराभ्यां कङ्कणाभ्यामभातां बाहू रत्नैरुज्ज्वलाभ्याममुष्य ।
स्थाने स्थाने कोरकैः शोभमाने नूनं दीर्घे कल्पवृक्षस्य शाखे ।।१४।

---

१. सप्र- । २. दीप्र ।

विद्युत्पिशङ्गं वसनं वसानः सपाञ्चजन्यस्तनितप्रणादः ।
ववर्ष पीयूषमपूर्वरूपः कृष्णाम्बुवाहो जनलोचनेषु ।।१५।

अथ शैव्यसुग्रीवमेघपुष्पवलाहकैः पवनपातिभिरश्वैरुपेतं सजलजलदानीकमन्द्रमधुरध्वनिं मणिकनककृतभक्तिविविधशालभञ्जिकामनोहरं[1] महार्हक्षौमवितानव्यवहिताम्बरमुल्लसद्वैनतेयकेतनमनेकायुधाद्यमाभरणमिव वसुन्धराया मध्याह्नमिहिरमण्डलमिव [2]व्योम्नश्च तमसतामुज्जासयितुं वासवेन विसृष्टं वज्रमिव दुर्निरीक्षं वैरिनरपतीनां दारुकेणोपनीतं शतानन्दं नाम रथं नरकरिपुरारुरोह ।

अधारि तस्योपरि पार्वणस्य च्छायां दधच्छत्रमनुष्णरश्मेः ।
मयूखपुञ्जाविव शारदेन्दोस्तं चामरे चोभयतोऽश्रयेताम् ।।१६।
अस्फुरद्धृदयमिन्दिरापतेः खात् पपात कुसुमोत्करो महान् ।
पश्चिमः सुरभिमारुतो ववौ प्रासदन्मनुजनागवाजिनः ।।१७।
आजानेया दारुकेण प्रणुन्ना निन्युः कूजत्किङ्किणीकं रथं तम् ।
अभ्रे हंसैर्नीयमानस्य वेगस्तत्तुल्यः स्यात् किं विमानस्य धातुः ।।१८।
कुन्तैश्छायां मेदुरैरासृजन्तो विष्वद्र्यञ्चः[3] सादिनश्चक्रपाणेः ।
अन्योऽन्येन श्लिष्टजानूरुजङ्घा[4] वाहान् निन्युर्मन्दमाकृष्टवन्तः[5] ।।१९।
अन्वव्रजन् माधवमद्भुतास्ताः परःसहस्राः शिविका यदूनाम् ।
भास्वत्प्रभाविच्छुरितासु यासु दृष्टिर्जनानां स्थिरतां न भेजे ।।२०।
मित्राणि कृष्णस्य महीमहेन्द्रा मतङ्गजैः प्रांशुभिरन्वगच्छन् ।
नानोदयोदीतसुधाकराणां छत्रैर्भ्रमो येष्वभवज्जनानाम् ।।२१।
उष्ट्रे भारं धारयन्नप्रदान्ते कर्षन् क्लान्तो नासिकारज्जुमस्य ।
कर्त्तारं तं जन्तुमत्यन्तवक्रमुष्ट्रारोहः[6] पद्मयोनिं निनिन्द ।।२२।
गुर्वीर्गोणीर्बिभ्रतः पश्य पूर्णा घण्टानादैर्दूरतो लक्ष्यमाणाः ।
पश्चादेव स्थौरिणामप्रयासादुक्षाणोऽयुः सार्थवाहव्रजस्य ।।२३।

स्प्रष्टुं प्रभूणि न रथानतियत्नतोऽपि
चेतोहरानहह वारविलासिनीनाम् ।
तासां श्रियं किमितरेतरमालपन्ति[7]
शब्दैर्गभीरमधुरैः शकटान्यगच्छन् ।।२४।

---

१. शालंजिका । २. व्योम्नश्च्य । ३. विश्वग्रंच । ४. जानूनुरुजंघा ।
५. माकृष्टवलाम् । ६. मुष्ट्रग्रेहः । ७. मालयन्ति ।

दृष्ट्वा दिग्भ्यः स्वस्वकेतून् पतद्भिर्नानारूपैः सैनिकैः पूर्यमाणः ।
सेनौघोऽभूत् तारकोलाहलाढ्यो[1] भिद्यस्येव[2] प्रावृषेण्यः प्रवाहः ।। २५ ।
असङ्कुचनागाश्वरथं महीपो रराज तद्राजपथे प्रचक्रम् ।
भास्वन्ति रत्नानि विलोक्य पुर्या गतो ग्रहीतुं ध्रुवमम्बुराशिः ।। २६ ।
कुसुमायुधकोटिमञ्जुकान्तिं नयनेन्दीवरदामभिस्तरुण्यः ।
प्रतिसौधगवाक्षमीक्षमाणाः कमलावल्लभमर्चयाम्बभूवुः ।। २७ ।

अन्योऽन्यमङ्गुलिदलैरुपदर्शनानि
सव्रीडहासमवलोकनकौतुकानि ।
प्रागल्भ्यतः कुसुमलाजनिपातनानि
तासां मनो मुररिपोरहरन् प्रसह्य ।। २८ ।

यथा यथा दारुकवाहितो रथो मृगीदृशां नेत्रपथानलङ्घत ।
तथान्वधावन् हृदयानि सस्पृहं जिघृक्षया किं कमलाविलासिनः ।। २९ ।
[3]आशासताम्नायपदैः प्रणम्रं स्वस्वप्रतोलीष्वभिगम्य शान्ताः ।
पञ्चाग्नयश्छत्रमुपेयिवांसस्तं सोमपाः सोमकुलप्रदीपम् ।। ३० ।
हित्वा दूरात् स्वस्वकृत्यानि तूर्णं श्रेणीभूताः श्रेणयस्तं प्रणेमुः ।
लीलालोलल्लोचनं [4]रम्यवक्त्राः सभ्रूभङ्गं वारमुख्या गणाश्च ।। ३१ ।

उद्वृत्तदैत्यदलनोपचितैर्यशोभि-
स्तं वन्दिनः पथि पथि प्रथितप्रभावम् ।
अभ्यष्टुवन् सरसभङ्गिमनोहराभि-
र्भोगावलीभिरतुलोर्जितमालपन्तः ।। ३२ ।

उत्तुङ्गस्तम्भरम्यामभिनववलभीश्रेणिरुद्धाभिमार्गां
पश्यन् नानानिषद्यानिहितमणिगणां तां पुरीं सोऽभ्यनन्दत् ।
यस्यामस्याज्ञयासीन्न किमपि निधिना शङ्खनाम्ना समन्तात्
पूर्णायां हेमरत्नैः प्रतिसदनमहो दैन्यचिन्ता जनस्य ।। ३३ ।

जलनिधिपरिखासुवर्णक्लृप्त-
प्रविततवर्त्तुलशालशोभितायाः ।

---

१. तारकोलाहहिलायो । २. भिद्योद्ध्यौ नदे (पा. ३,१,११५) । ३. ताम्रापपदैः ।
४. र वक्रा ।

स्मृतिमुपनयति प्लुतं पयोधौ[1]
कनकमयं जगदण्डमादिसृष्टिम् ।।३४।

तिग्मांशोः करनिकरेण बाध्यमानो
मन्वानः कनकगिरिं सखायमस्य ।
प्राकारं परिवृणुते प्रसह्य यस्या
जानीमो जलनिधिमूर्तिरन्धकारः ।।३५।

निरन्तरोत्तालतरलकल्लोलमालाभिरभि-
षिञ्चन्विमुक्तमुक्तालिकुसुमाञ्जलिर्जलनिधिः ।
काञ्चन काञ्चनमयीं देवतामिव यामर्चय-
न्ननवरतस्तुतिपाठमुखर इव शब्दायते ।।३६।

लावण्यभाजो धृतरत्नसञ्चयाः परापतन्त्योऽपि पयोधिवीचयः ।
शालस्य यस्याः स्खलनाय नेशते समाधिसुस्थस्य मुनेरिवाङ्गनाः ।।३७।

हरिमणिवलभीनां बिभ्रती श्रेणिमन्तः-
स्फटिकनवनिशान्तैः प्रान्ततो या चकास्ति ।
अविकचसमुदञ्चन्नीलपङ्केरुहाली-
परिगतकलहंसा काञ्चनी दीर्घिकेव[2] ।।३८।

अभ्रङ्कषेषु बलभिन्मणिनिर्मितेषु
कामं गतेषु नववारिधरैरभेदम् ।
हर्म्येषु यत्र निकषेष्विव हेमरेखा
वर्षागमेऽचिररुचः परितः स्फुरन्ति ।।३९।

यस्यामभ्रंलिहबहलमहानीलहर्म्यशिखरसञ्चरदभिसारिकाशताभरणमणि-मयूखमञ्जरीपिञ्जरीकृतवियति विद्योतमानविद्युदकालजलदोदयविनोदमनुदिन-मनुभवन्तो मण्डलीकृतकलापाः कलापिनो निर्विशन्ति प्रियानुरागरभसरमणीयानि लास्यलीलासुखानि ।

पद्मरागमणिमण्डपजाले सुन्दरीवदनकान्तिकलापः ।
उद्यदुष्णकरमण्डलमध्ये चन्द्रबिम्ब इव यत्र चकास्ति ।।४०।

यत्प्रासादप्रमदवनलताश्लेषसुरभिमकरन्दबिन्दुसन्दोहसम्भारमन्थरसमीरसम्बन्ध-वाञ्छयेव विपुलवियदङ्गनाभोगभ्रमणखिन्नो मध्यन्दिने मनाग् विश्राम्यति मयूखमाली ।

---

१. प्लुतं ययोधौ । २. दीर्घिकेन ।

आमन्त्रिता लालनलोहहस्तैर्धात्रीजनै रात्रिषु यत्र ताराः ।
अत्युन्नताट्टालकवेदिकासुखं प्रहस्तलभ्याः शिशवोऽध्यगच्छन् ।।४१।
उष्णीषमाक्रम्य निजं करेण प्रासादमुत्कन्धरमीक्षमाणाम् ।
यात्रागतान् यत्र विलोक्य दिश्यांश्चित्रीकृतान् नागरिकान् हसन्ति ।।४२।

शरदि मुदिरमालाः सौधमूले लगन्त्यः
किमिति न नवचूर्णा लेपलीलां लभेरन् ।
कलयति किल यस्यां पूर्णिमापूर्णबिम्बः
स्फटिककलशकेलिं चन्द्रशालासु चन्द्रः ।।४३।

गोलागमे गणितजालविडम्बनाभिः
स्पष्टीकृता अपि परोक्षतयैव बुद्धाः ।
यस्यामदूरशिशुमारमुपेत्य सौधं
प्रत्यक्षयन्ति गणका ग्रहराशितारा: ।।४४।

यस्याः प्रासादमूर्द्धन्युडुपमणिशिलाबद्धवापीस्त्रुताम्भः-
स्त्रोतः सप्तर्षिसन्ध्यासमयसमुदितश्लाघनायोपयोगम् ।
कान्तानां निःसहानां निशि सुरतभरश्रान्तिभाजां प्रभाते
स्नानक्रीडाकृतार्थं सपदि नवनवं निर्वृणोत्यङ्गमङ्गम् ।।४५।

अनिर्णयन्त्यः प्रतिमाः स्वकीयाः[१] कुड्येषु यद्दर्पणमन्दिरस्य ।
अपत्रपन्ते रमणेषु रागान्नवाङ्गनानीविमपाहरत्सु ।।४६।

या च तुङ्गतरदेवतायतनशतशेखरीभूतलौहितकेतुकैतवादुद्बाहुराह्वयतीव वातायनकपोतकुलकुहरितेन विविधदिग्देशवास्तव्यजनतासमीहितवितरणाय[२] ।

अष्टापदाकारसदापणायां विशालरथ्याङ्गनचत्वरायाम् ।
यस्यां मणिस्तम्भमहोज्ज्वलायां मनः प्रसीदत्यखिलाद्भुतायाम् ।।४७।

मुक्ताप्रवालनिवहेन समं[३] विमुक्तान्
प्रत्यापणं मणिगणानवलोक्य यस्याम् ।
ईर्ष्यन्निवोच्छ्वसिति[४] कुप्यति[५] चानुवेलं
रत्नाकरः परमभूतिभिरात्तगन्धः ।।४८।

तुङ्गगोपुरशिरोगृहगर्जद्यामदुन्दुभिनिनादभरेण ।
या महेन्द्रनगरी प्रतिगर्जत्यप्रमेयविभवा प्रतियामम् ।।४९।

---

१. स्वंकीया । २. -जनताः समीहित-। ३. सम । ४. वोच्छ्रिमिति । ५. कुंपति ।

या च [1]वाणिज्याधिदेवतेव देशान्तरानीतनानापण्यविपणलाभलुभ्यददभ्र-सार्थवाहसार्थैरनुदिनं घण्टापथधावद्धौरेयवृषभकण्ठघनघनायमानघण्टाभिरभिष्टूयते।

तोरणैरुपनिबद्धतोरणैर्धामभिर्ललितरत्नधामभिः ।
केतनैर्गगनलङ्घिकेतनैर्भासुरैर्लसति या सभासुरैः ।।५०।

उदारदारविभ्रमभ्रमन्मनोमनोहरा
हराट्टहासहासका यदालपालयाधिका
विचित्रचित्रनिर्मितिर्विशालशालञ्जिका
प्रभूतभूतमोहनी जगत्कृताकृता नु या ।।५१।

या च विनतादास्यमुक्तिरिव गरुडपर्यालोचितभूमिका जामदग्न्यस्थितिरिव समुद्रत्यक्तमही विहिता नर्त्तकीवानर्त्तनिष्ठा द्यौरिव पीतसोमैः सुमनोभिर्निर्षेविता सञ्ज्ञेव सूर्यानन्दकरी [2]वाराणसीव भद्रश्रेण्याश्रिता मथुरेव शूरसेनाधिष्ठिता माहिष्मतीव सन्निहितनर्मदा कुरुपुरीव भीमसेनाहृतवैरिसम्पत्, मिथिलेव दृष्टजनकार्यसिद्धिः पुष्पपुरीवोषितपरन्तपा काञ्चीवालङ्कृतदक्षिणाशा कौशाम्बीव शतानीकशोभिता चन्दनावतीवोद्घुष्टचन्द्रहासमहिमा, अलकेव न किंपुरुषैर्युता नाप्येकधनदा, अमरावतीव वासवप्रधाना गोत्रभित्परिग्रहश्च लङ्केव न विभीषणेन पत्याधिष्ठिता, किष्किन्धेव वानरहितभूतिर्विशालाऽपि न महाकालभयोपेता, अयोध्यापि न विरहितरामलक्ष्मणा भोगवत्यपि न साहिभया, अज्ञानाश्रिताऽपि हृताज्ञाना जडपरिवारिताऽपि पण्डितप्राया, अक्षिगताऽपि प्रिया क्षेत्रं क्षत्रियाचारस्य संहिताऽतिथिसत्कारसूक्तिसूत्राणामभिजनः सभ्यजनमर्यादायाः पारायणशाला परगुणानामाकरः पुरुषरत्नानां चिन्तामणिश्चा-तुराश्रम्यचारित्र्यस्य विश्रामभूमिर्मल्लविद्यायास्तप्तरहसं परप्रणिधीनां पद्धतिर्मनोजपूजाया उपनिषद्विलासिनीविभ्रमाणां मञ्जूषा मञ्जुभणितीनां कौतुकं कटाक्षक्रियाणां विपणिर्वारवधूवैदग्ध्यीनां वाटिका विटचेष्टितं विटपिनां हसितं श्रियः साम्राज्यं शृङ्गारस्य जीवितं सौभाग्यस्योर्जितं मकरकेतोः । या च कामधेनुरित्यर्थिभिःसंयमिनीति[3] वणिग्भिर्जननीति पान्थैर्वज्रमयीति शरणागतैर्बुद्धिस्तम्भविद्येति[4] कुहकैर्धनक्रीतेति विप्रैः परदेवतेति राजभिरवगम्यते ।

यत्र गजा एव मन्दा वृक्षा एव कुणयोऽभिसारिकाचरणनूपुरा एव मूका मूषिका एव दीना वन्दिन एव नग्ना गुणा एव निर्गुणा जातिरेवाजातिः । यत्र रवेरेव सङ्क्रमो न शत्रूणां वंशजीविष्वेव वंशच्छेदोऽग्निहोत्रधूमेष्वेव मालिन्यं मृगयावनेष्वेव पापर्द्धिः कापालिकेष्वेव नरकपालदर्शनं दौवारिकेष्वेव दण्डधारणं नितम्बिनीष्वेव नयनरागो मानिनीष्वेव कलहावमानाः कण्ठेष्वेव निष्कासनं कामिनीकुचकलशेष्वेव हारावस्थितिः शाब्दिकेष्वेव [5]परापवादचर्चा मीमांसकेष्वेव कृत्वाचिन्ता ।

१. वणिज्य- । २. वाणसीव। ३. संयमनीतिः प्रत्यर्थिभिरलकेति– । ४. विधेति । ५. पण्यवाद-।

यत्र चापशब्दो रणेषु न वैयाकरणेषु शूलिन एव ब्राह्मणवधाभिनिवेशः[१] शशिन एव गुरुदारपरिग्रहश्च श्रूयते । यत्र [२]चारित्रक्षेपो नौकासु न कुलकामिनीषु जनस्तापसहितो न तापसहितो जनतापहो न जनतापहो वीरहा न वीरहा परमोहकरो न परमोहकरः । यत्र च औषधी ऋष्यप्रोक्ता गृह्यते न स्मृतिर्व्रतिनस्तन्वन्ति पराकं न पराकं यतिनः काङ्क्षन्ति भूतिं न भूतिं रमन्ते भवे ।

नरो दयिता न रोदयिता, न रोगा न मूर्च्छना नरो गानमूर्च्छनाकुशलः स्वरहितोऽप्यनिःस्वो ग्रामनिष्ठोऽप्यग्राम्यस्तानरुचिरपि वितानरुचिस्तालसहितोऽपि नतालसहितः । यत्र मानिन्य इव कृतकवियोगाः सभा अपरुषो वादः पुरुषाश्च विदितमरमायाः कर्मारोगा गराश्च धृतवलयो वधूजनो दासाश्च कृतकलयो भटा न योगी । यत्र चापत्यं पौत्रप्रभृति गोत्रं भूषयति भ्रातरि च ज्यायसि कनीयान् पितृवद् वर्त्तते तत्र[३] कलिर्न द्वापरः सत्यं त्रेता च सेव्यते शिष्टैः ।

या वेष्टिता वनगता गिरिभिश्चतुर्भि-
जुष्टा सदैव विजयेन मखप्रसूतिः ।
आभाति पाण्डुतनयैः परिरक्ष्यमाणा
कृष्णेव कृष्णभुजवीर्यनिवारिता यत् ।।५२।

[४]रथनेमिरवैरतीवतारैः परितो ह्रेषितबृंहितैरुदारैः ।
पदध्वनिभिः प्रसह्य निन्ये प्रथिमानं विपणौ भवन्निनादः ।।५३।

अथ पुरीमवगाह्य मनोहरां बहिरभूद् ध्वजिनी मधुवैरिणः ।
हिमवतो बहुधातुविचित्रतां समतिलङ्घ्य तटीमिव जाह्नवी ।।५४।

सहस्रशः प्रोन्नतकेतनानि ददर्श देवायतनानि कृष्णः ।
पुनन्ति लोकस्य विलोचनानि प्रभूतहर्म्यां परितः पुरीं ताम् ।।५५।

निकषा नगरीं विकस्वराणां कमलानां सरसि प्लुतः समीरः ।
धृतपुण्यलताप्रसूनगन्धो मधुविध्वंसिनमर्चयाञ्चकार ।।५६।

स्वबाहुवीर्यादकुतोभयेषु प्रफुल्लनानाविधभूरुहेषु ।
शुश्राव [५]बाह्योपवनेषु रम्यं सशिञ्जितं पौरविलासिनीनाम् ।।५७।

अथ सुखसुप्तं महानगरमिव महानीलमणिमयं द्वीपमिव नीलनिचोलमिव वसुमतीविलासिन्या बलिदमनदीर्घीभवदिन्दिरारमणचरणचूर्णितं क्षितिपतितमम्बरमिव दर्पणमिव दिग्वधूनां [६]संगरसुतनखकोटिकृतकुक्षिवैपुल्यं क्षणानुभूतकुम्भसम्भवकर-

---

१. ब्रह्मणवधा । २. चारित्रक्षे योनौ कासु नकुलकामिनीषु । ३. त । ४. रथनेनि ।
५. बाह्योपनेषु । ६. सागरसुतमस्व ।

कमलमकरन्दलीलं भगीरथानीतजह्नुकन्याप्रवाहपिहितावटं समीरतनयोत्पतनसाहसैकसाक्षिणं प्रायोपविष्टदाशरथिशरानलैककृतसम्भ्रमं नलनिहितशिलासहस्रसन्धारणस्वीकाराश्रवं रघुनाथचरणरेणुजनितमहिमानं देवासुरप्रणीतमन्दरान्दोलनव्यथयेवाद्यापि कृतार्त्तनादं नानारत्नहरणचिन्तयेव फणिफुत्कृतैरनिशमुच्छ्वसन्तं[१] श्रियो वात्सल्यादिव विदीर्णहृदयमुत्प्लुतप्रवालकन्दकैतवेन कदाचिद् दर्शयन्तं गिरिशाय गरलं प्रदाय गूढमुद्दीपितेन वडवानलेन प्रायश्चित्तमिव चरन्तं दुर्गं दैत्यानां शरणं शिखरिणां शयनगृहं श्रीपतेर्दण्डकारण्यमिव सीताराघवाभ्यामुपेतं वृद्धमिवाङ्कविलुठद्वाहुपोतं धार्मिकमिव वाडवोपगतं राजानमिव वाहिनीशतसेवितं नीतिनिपुणमिव वेलामलङ्घयन्तं कृपणमिव पान्थैरपीततोयं वदान्यमिव जीवनार्थिभिर्जलदैर्निषेवितं नारायणमिवाप्रतर्क्यमहिमानमम्बुराशिं ददर्श वासुदेवः ।

डिण्डीरपिण्डपिहितैः पृथुलैस्तरङ्गैः
सौधैरिवात्र शुशुभे वरुणस्य राज्ञः ।
उन्मुक्तमौक्तिकरुचः किल शुक्तिमाला-
स्तत्रोहिरे तरलतोरणदामलक्ष्मीम् ।।५८।

एषा जडस्य विषयं बत दुर्विपाका
लक्ष्मीः कुतोऽगमदिहानुपभोगशोच्या ।
माणिक्यमौक्तिकमुदीक्ष्य कृतोत्प्लवोऽत्र
यादोगणोऽश्वसदितीव विवृद्धचित्तः[२] ।।५९।

राशीकृतं क्वचन लावणिकैर्विधाय
वेलोदरे लवणमुज्ज्वलमुल्ललास ।
[३]अब्धेर्मदे सुरगजं पुनरेव धात्रा
सन्तन्वता किमु धृतः परमाणुपुञ्जः ।।६०।

नित्यप्रवासरसिकानपि पोतनाम-
ग्रामालयान् प्रियतमाविरहानभिज्ञान् ।
द्वीपान्तराद्भुतपदार्थकृतोपहारान्
सांयात्रिकान् प्रणमतो हरिरालुलोके ।।६१।

ततस्तरलतरङ्गरिङ्गत्कपर्दकगणमुच्छलच्छङ्खकुलाकुलं द्वीपक्रोडक्रीडन्नक्रचक्रं क्वचिद् [४]गण्डशैलकटिकटपृष्ठसङ्घट्टचूर्णितमहोर्मिमालं क्वचित् पीनपाठीनविहतवहित्र-

१. मुच्छसन्तं । २. चित:- । ३. आधेर्म दे । ४. गण्डशैललकटितकठ ।

सञ्चारं क्वचिज्जलकरिचित्कारचकितधीवरकुमारं क्वचिद् गरुडगृह्यमाणमहोरगक्षुभिततीरतोयं[1] क्वचित् कुररनखखण्ड्यमानकुलीरकृतकेङ्कारं क्वचिज्जलमानुषमिथुनमैथुनमृदितवेलावकुलसंस्तरं क्वचिन्निमज्जदुन्मज्जन्मद्गुरगणानीयमाननानारत्नं क्वचिदुत्तीर्णपृथुपृथुरोमकृतद्वीपशङ्कं शङ्कुशिशुमारमकरनिकटघोरमर्णवमुदीक्षमाणो मुररिपुर्वेलावनमाससाद ।

लीलालोलितसिन्धुवीचिरुचिरस्मेराः शनैः केतकी-
राधुन्वन् वकुलावलीपरिमलासङ्गात् प्रियम्भावुकः ।
आलिङ्गन् लवलीलवङ्गलतिका भेजे मुकुन्दं रसा-
देलामर्द्धपचेलिमां परिमृशन् वेलावनस्यानिलः ।।६२।

अथ लवणोदयपवनप्रेङ्खोलनमर्मरितपुराणतालीदलं परिणतखर्जूरफलास्वादलुब्धपुलिन्दबालबहुलं [2]नवजलदनिविडतमालतलनिषण्णसार्थवाह[3]वधूगणगानश्रवणसुखितहरिणकुलं मन्दमारुतव्यतिकरकुहकुहायमानपयःपूर्णफलनालिकेरनिकरमक्षीणद्राक्षामण्डपमध्यबद्धसमाधिमौनमुनिजनं क्वचिदक्षोटनिचुलचाम्पेयप्राचीनामलकपूगपुन्नागमातुलुङ्गशालहिन्तालदेवदारुदुर्लभीकृततरणिकिरणं क्वचिदुपकुञ्चिकानिकुञ्जजेगीयमानकिन्नरयुगं क्वचित् किरातकामिनीसन्धुक्षित[4]गुग्गुलुनिर्यासवासितं क्वचिद् वनकरिकृष्टशाखर्जसन्धिस्रवद्रसासेकसुरभिभूतलं क्वचिद् दावानलदह्यमानकालागुरुधूमधूपितं दत्तात्रेयमिव सहस्रार्जुनोपसेवितं महिषासुरसैन्यमिव विडालभीषणभारतमिव सञ्चरद्धीमनकुलं मधुवैरिवाहिनीवेलावनमुल्ललङ्घे ।

चचार कामं चतुरङ्गरम्या सेना सुपन्थानमुपेयुषी सा ।
उल्लङ्घ्य वेलां प्रविसृत्वरस्य रूपं वहन्ती प्रलयाम्बुराशेः ।।६३।

चित्रैः कुथैरुभयतः परिवीतपार्श्वा
रेजुर्गजा गगनमण्डलमुल्लिखन्तः ।
इन्द्रादभीरव उपेन्द्रसमाश्रयेण
किन्निर्गता जलनिधेर्गिरयः सपक्षाः ।।६४।

विन्ध्यं निनम्रयिषुभिर्विबुधैर्मुधैव
काशी व्ययोजि मुनिना कलशोद्भवेन ।
अद्रक्ष्यदेषु यदि कञ्चन वारणेषु
[5]सव्रीडपाणिनिवरः स्वयमह्नसिष्यत् ।।६५।

---

१. तीरतोव्यं । २. नवजलदनीरविउतमाल- । ३. निषस्मसार्थ्ववाह- । ४. संघुक्षित । ५. सव्रीडपाणिरिवरः ।

शृङ्गारितायतकरा विलसद्भुजाग्रा
दानाम्बुभिर्धरणिमण्डलमार्द्रयन्तः ।
सेन्द्रायुधां सचपलां च घनाघनानां
मुहुः श्रियं करटिनः किल वार्षिकाणाम् ।।६६।

स्तम्बेरमान् मुररिपोरतितुङ्गगात्री-
नालोक्य पुष्करपथं [1]परिदृप्यतस्तान् ।
व्यद्रोष्यतैव विपथं तरणेस्तुरङ्गै-
र्यन्ता[2] नितान्तनिपुणो यदि नाभविष्यत् ।।६७।

गात्रोच्छ्रितैरपरमानतमुद्वहद्भि-
रेकान्तशुभ्रदशनैर्मधुपिङ्गनेत्रैः ।
वेशैरधिज्यधनुराकृतिभिर्मनोज्ञै-
र्भद्रैरलङ्कृतमभूद् बलमेव भद्रम् ।।६८।

ईषादन्तैरुल्लसद्दीर्घकर्णैर्मध्ये क्षीणैर्दानधारां स्रवद्भिः ।
स्वैरामोदैर्वारणान् वारयद्भिर्निःसम्बाधं सिंहलीयैर्विचेरे ।।६९।

आधोरणे शृणिमुपेक्ष्य सुखं निषण्णे
यान्ती पुरः सभयकौतुकमीक्षमाणा ।
गम्भीरवेदिनमपि [3]स्मरनाथवन्तं
कल्याणमागमयति स्म जवात् करेणुः ।।७०।

दन्तौ वहन् मृदुलमूलककन्दकान्तौ
चामीकरेण कुथकेन विरोचमानः ।
[4]शुण्डारकुण्डलनया कलभोऽनुगच्छ-
न्नाधोरणं मदयति स्म मुदोपहूतः ।।७१।

घण्टाशतैः प्रणदितैः करटेषु लग्नै-
र्झङ्कारिभिर्मधुकरैर्निगडैर्नदद्भिः ।
सान्त्वैर्निषादिनिवहेन मुहुः प्रयुक्तै-
र्ज्ञाता जनैर्व्यवहितैरपि वारणेन्द्राः ।।७२।

---

१. परिवृणुतस्तान् । २. यं तानितान्त- । ३. स्मरे । ४. शुण्डारकुण्डलनपाकं लभोऽनु- ।

किरणा इव कल्पसप्तसप्तेर्नयनान्ता[१] इव वारवाणिनीनाम् ।
विशिखा इव रोषितस्य जिष्णोरधिबाह्यालितुरङ्गमाविसस्त्रुः ।।७३।
सावर्त्तं विततं ललाटमधुरः शोणः सुतीक्ष्णे श्रुती
ह्रस्वे केसरकुन्तलाश्च[२] विपुला ग्रीवा दृढा कुञ्चिता ।
वक्षो विस्तृतमुन्नतौ च मसृणौ पार्श्वौ च जङ्घाः कृशा
[३]वाहानामभवन्निरामविषयः प्रायः पदानां गतिः ।।७४।
काम्बोजिताजिकवनायुजपारसीकाः
सौराष्ट्रवाह्लिकसमुद्रजसैन्धवाश्च ।
वीथीरुपेत्य भरता इव रङ्गभूमीः
कौतूहलं परमकुर्वत तद्विदानाम् ।।७५।
आलोलचामरचयेन विशोभिपार्श्वः
साटोपमम्बरपथप्रहृताङ्घ्रियुग्मः ।
किं शालिहोत्रकरुणापुनराप्तपक्षो
द्यामष्टमङ्गल उदञ्चितुमाचकाङ्क्ष ।।७६।
कलभतुलितदेहैश्चञ्चलप्रोथदेशै-
र्विधृतकनकभाण्डै रत्नपर्याणरम्यैः ।
अजनि सबहुमानं वल्लभैर्नीयमानैः
पथि पथि मिलितानां कौतुकं प्रेक्षकाणाम् ।।७७।
धनुः समुल्लास्य करेण सादी कश्चित् कशामश्वतरे प्रयुज्य ।
पूर्वाचलं यावदितः कियत् स्याद् व्योमेति किं मातुमनाः प्रवृत्तः ।।७८।
प्रधावितो गाढकशानिपातान् मुहुर्विचित्रैर्भ्रमणैर्विनीतः ।
विचक्रमे सादिमनोऽनुरूपं नीतो विविक्ते पथि पञ्चभद्रः ।।७९।
अचलाधिरोहणजितश्रमैर्नवैः
कलकिङ्किणीनिनदमाशुगामिभिः ।
अधिरोढुमक्रियत टङ्कनैः क्रमः
शिखरोपमानुपनिशम्य दन्तिनः ।।८०।

---

१. नमनां ता इव । २. केसरकुँजलाश्च- । ३. वाहानामभवन्निरामविषयः । 'निराम' इत्यस्मिन् स्थाने 'विराम' इति भाव्यमिति वागीशः ।

रथेषु हैमेषु निबद्धजालिका यदुप्रवीराः शतशश्चकाशिरे ।
सुमेरुश्रृङ्गेषु तपात्यये[1] यथा धृतोदभाराः परितो घनाघनाः ।।८१।

महाकुलाः करितुरगप्रहारिणः
सहस्रधा समितिषु लब्धकीर्तयः ।
मधुद्विषो विजयमभीप्सवः[2] सदा
पुरोऽसरन्न लघुपदाः पदातयः ।।८२।

क्षुण्णक्षोणीखरतखुरैर्वाजिसङ्घे समन्तात्
पांशुव्याजादहिमकिरणं तद्गुरुं किं रुरोध ।
क्रुद्धे किञ्चिद् दितिजपृतनाम्भोधिकुम्भोद्भवेऽस्मि-
न्नाख्यातुं वा प्रियमुपगता कौतुकाद् देवतानाम् ।।८३।

सैन्ये [3]स्यन्दनदन्तिवाजिमनुजैरच्छिन्नधारे चिरं
नानावर्त्मभिरापतत्यविरतं देवस्य दैत्यद्रुहः ।
शत्रुक्ष्मापहृदीव भूरितरले शश्वद् धरामण्डले
योगीन्द्रस्य शिरःसहस्रकलनाकालादुपायुज्यत ।।८४।

अतीत्य शाखा नगराणि कृष्णस्तदाश्रया द्वीपवतीः सुतीर्थाः ।
निवेद्यमानान् खलु दारुकेण ग्रामानपश्यत् शतशः समृद्धान् ।।८५।

महाजनालोकनजातसम्भ्रमैर्विचित्रवेषाभरणैर्जनैर्नतः ।
अनल्पवात्सल्यविलोकनामृतैरतर्पयच्छीतकरः सतां स तान् ।।८६।

ग्राम्यमण्डनभृतो मनोरमा नव्ययौवनकृतस्तनोद्गमाः[4] ।
तं वराशिवसना व्यलोकयन् लोलकातरविलोचनाः स्त्रियः ।।८७।

प्रक्रान्तातिथिपूजनैर्मखविधिव्यग्रैर्गणैर्यज्वना-
माम्नायध्वनिधूतसर्वदुरितैः केचिद् द्विजैर्भूषिताः ।
केचिद् गोमहिषीमहोक्षवडवावृन्दैर्वृताः सर्वतः
शुष्यच्छालिपलालपुञ्जबहुला ग्रामास्तमातोषयन् ।।८८।

---

१. तपात्ये । २. -मभीक्षव: । ३. स्यंदनंदति । ४. स्तनोद्रुमा: ।

खर्जूरक्रमुकरसालनालिकेरैः
पुन्नागैरपगमितातपान्निरीतीन् ।
आनर्त्तान् निजपालितान् स पश्य-
न्नध्वानं सहपृतनः पृथुं ललङ्घे ।।८९।

अन्विच्छतः शिशिरवारिकृतातपत्रा-
नाताम्रपल्लवदलैः सरजःशिरस्त्रान्
खिन्नार्वतस्तरुतलस्थितिसाभिलाषान्
सैन्यान् [1]व्यलोकयदमीन् स गुरुः समन्तात् ।।९०।

ततो निदिदेश निवेशाय सेनाध्यक्षानथ निखायमानकीलमानरश्मिवितन्यमानपटमण्डपमास्तीर्यमाणास्तरणमासिच्यमानधरणिविस्तीर्यमाणतिरस्करणिच्छिद्यमानतरुतृणं विधीयमानकायमानं क्रियमाणकरितुरङ्गमस्थानं वाहिनी निविविशे ।

[2]उच्चैराह्वयतां स्वस्वार्थिसुहृदः पूर्वं गृहीते स्थले
तिष्ठासून् प्रतिषेधतां रचयतां दीर्घोपकार्या द्रुतम् ।
मुक्तानुष्ट्रतुरङ्गमान् प्रहरतां [3]पण्यग्रहे क्रुध्यता-
मन्योन्यं दिवमस्पृशत् कलकलः सेनाचराणामुरुः ।।९१।

पण्यैः पुरेऽप्यस्तु लभैर्विविधैरशून्यां
तूर्णं विधाय विपणिं वणिजो निषेदुः ।
चेतांसि सैनिकजनस्य विलोभयन्त्यो
[4]दूष्येयुरप्यवपुषोऽपि च वारमुख्याः ।।९२।

गिरिमयीव गजेन्द्रैस्तरुमयीव महाध्वजैर्मृगेन्द्रमयीव योधमुख्यैः सौधमयीव[5] पटमण्डपैश्चन्द्रमयीवातपत्रैर्मरालमयीव चामरैरमरमयीव यदुभिरप्सरोमयीव वारविलासिनीभिरुद्भूतोद्भटा सा चमूर्विमानमारूढैः सुपर्वभिरवालोक्यत ।

क्वचिद् वीणानादैः क्वचन मृदुमञ्जीररसितैः
क्वचिद् गीतै रम्यैः क्वचिदपि च कोदण्डनिनदैः ।
भटानामाटोपै रुचिरममलैश्च प्रहरणै-
र्विरेजे गान्धर्वं नगरमिव कंसारिशिविरम् ।।९३।

---

१. व्यलोकगुरुः समेंतात् । इह चतुरक्षराणां हानिर्लेखकस्य दोषात् मयेह पाठपूर्तिरित्थं कृता–'व्यलोकयदमीन् स गुरुः समन्तात्' इति । २. उच्चैराहूयतां । ३. परापग्रहे । ४.दूष्येप्यवपुषोऽपिच । ५. सौधयीव ।

प्रफुल्लपङ्कजावृता मनोहरास्तरङ्गिणीः ।
पथि [1]क्लमापनुत्तये चमूचरा जगाहिरे ।।९४।

पीतामृताः कलितपङ्कजकोरकास्ता
दूरीकृता विरलशैवलगुण्ठनाश्च ।
आक्रान्तरम्यपुलिना बलसागरेण
नद्यो मरालनिनदेन चिरं चुकूजुः ।।९५।

निघर्षजन्येन सुखेन कामं
प्रसारिताशेषतनुप्रसुप्तैः ।
प्रक्षाल्यमानैर्द्विरदैर्निरुद्धाः
प्रतीपधाराः सरितो बभूवुः ।।९६।

स्नातोत्थितैर्विततबालधिबिन्दुवर्षै-
रश्लिष्टकेसरकवैर्बहुभिर्विरेजुः ।
उच्चैः शिरोधिभिरलं परिपूर्णपाश्वैं-
रश्वैर्विशेषविशदैः सरितां पदव्यः ।।९७।

इयत्यः पर्याप्ता न खलु कटकस्यास्य सरित-
स्तदेता नेतव्या सपदि महतीं विस्तृतिमिति ।
विचिन्त्य स्वच्छन्दं खरतरविषाणैः किमु मृषै-
स्तटानामुत्क्षिप्ताः सरसमुभयेषामपि मृदः ।।९८।

नीत्वा तत्र निशां सुखेन पृतना प्रातः प्रतस्थे पुन-
र्भेरीनाददलद्धराधरदरिक्षुभ्यत्क्ष्मामण्डलम् ।
पुर्याः पन्नगवैरिलाञ्छनमभूद् यावद् बहिः केतनं
शत्रूणां तु पुरे पलायनकथास्तावन्मिथो जज्ञिरे ।।९९।

स्वोपकाराय प्रयान्तीं वासुदेववाहिनीमवलोक्योदारशारदातपनिवारणायोद्धूत-कपिलधूलिपटलव्याजेन व्योम्नि विडौजसा वितानमिव वितेने । यावन्न निवेशस्थल-माससाद न तत्याज तावत् पूर्वशिविरमगणितकरितुरगनरपरम्परांशुध्वजा मधुरिपुध्वजिनी ।

---

१. क्रमापनुत्तये ।

नगरे नगरे नृपैरुपेतैर्मणिमुक्ताकनकोत्करैः प्रपूज्य ।
निजमौलिषु पूर्वपुण्यपक्तेर्निदधाते चरणौ जनार्दनस्य ।।१००।

अविलङ्घ्य शासनतया मुरशत्रोः
कटकादपीड्यत न कोऽपि जनेषु ।
सरितः सरांसि विपिनानि परं तु
स्मृतिशेषतां प्रतिदिनं पथि भेजुः ।।१०१।

नगर इव निवासाः सर्वकामोपभोगै-
रधिविपिनमभूवन् सैनिकानां प्रसत्त्यै[1] ।
कथमिव यदुनाथं सेवमानो जनो हि
व्रजति किमपि कष्टं जातुचिद् यत्र तत्र ।।१०२।

आक्रामन्ती भूभृतस्तुङ्गश्रृङ्गानत्युद्धता वाहिनी लङ्घयन्ती ।
[2]दुर्गाणां सा भञ्जिनी भूरिशक्तिः शक्या सेनाऽभून्न केनापि रोद्धुम् ।।१०३।

क्वचिद् धर्मत्राणपरानजातशत्रून् सत्पुरुषान् क्वचित् परिणामविरसेषु विषयेषु निर्वेदवतो विदुरान् क्वचिन्नदीमातृकान् शान्तनुतनयान् देवव्रतान् जनपदान् क्वचिद् धृतराष्ट्रसम्पदोपचितान् दुर्योधनान् राजनिवासान् क्वचित् पांशुचामरोपविष्टग्राम्य-गोष्ठीसंलापबहुलान् ग्रामान् क्वचित् [3]प्रासादवातायनप्रसूतपेचकान् स्ववैरिणां शून्यप्रदेशान् क्वचिन्नेदिष्ठरसालवनविश्राम्यद्धारीणि शिशिरवारीणि चतुष्पथानि क्वचिद् विविधवेषाभरणभाषानकर्कशकेशान् श्वापदनिर्विशेषान् खसपुलिन्दपुक्कसान्[4] विलोकयन्नितरत्र[5] तारचीरिकारवरणितकन्दराणि शार्दूलगन्धविद्रवत्कुरङ्गकुलानि क्रूरकण्ठीरवनखनिर्भिन्नकरिकुणपपूतिगन्धीनि जरदजगरनिगीर्णार्द्धवनमहिषभीषणानि [6]तरक्षुचर्व्यमाणाप्रेयकाननानि काननानि देवकीसूनुर्ददर्श ।

उच्चैर्बद्धकुलायपत्रिपृथुकव्याहारवत्त्वाक्तिभिः[7]
क्रीडन्तीः शिखरेषु देवललनाः[8] सम्भाषमाणानिव ।
श्यामानम्बरपारमीक्षितुमिवोन्नीतैःशिरोभिर्द्रुमान्
द्यावाभूमिविचुम्बिनीमकलयन् कादम्बिनीं सैनिकाः ।।१०४।

---

१. प्रसत्यै । २. दुर्गाण । ३. प्रासार्द । ४. पुस्तकसान् । पुक्कसः = चण्डालः । ५. विलोकयन्नतरत्रतार । ६. प्रेयोपत्यको नाम तरक्षुः । ग्रन्थकार इह संक्षिप्तरूपं प्रेयकं गृहीत्वा 'चर्व्यमाणानि तरक्षुतदितराण्याननानि यत्र तानि' इति विभाव्य संदृब्धवान् समासम् ।७. व्याहारवत्वाक्तिभिः । ८. देवललनासंम्भाष- ।

अपि च

नानाधातुविचित्रितैर्मणिमयैरभ्रंलिहैर्भूरिभिः
शृङ्गैः प्रस्तुतकिन्नरीसुरवधूविद्याधरीगीतिभिः ।
रम्यान् निर्झरवीरशीकरपिबैर्हारीतहंसप्लवै-
र्मत्तैः कूजितकाननान् शिखरिणः पश्यन् जनः प्रासदत् ।।१०५।
जटाधरान् पुष्कलकाजिनाम्बरान् [1]बृसीषु भूर्जप्रभवासु पावनान् ।
क्वचिद् दरीद्वारि तपस्यतो द्विजान् विलोक्य लोकः प्रणनाम सादरम् ।।१०६।

मध्येऽरण्यमाकर्ण्य सैन्यस्याऽऽकस्मिकं निनादमापित्सुं क्रुद्धकण्ठीरवगणं धन्विनां पत्रिणस्तृणमिव चिच्छिदुः । विविधवन्यकुसुमकृतावतंसा नवनिकृत्तचमरधारिणः सङ्गृहीतमृगमदाः करकलितदन्तिदन्ता विहितनूतननमेरुफलमालाः श्वापदानपि भापयमानास्तुहिनशीतलास्तटीर्लङ्घयन्तः कनककलधौतताम्रलोहाकरानवलोकयन्तः कान्तारमतिवृत्त्य चमूचराः सुरसञ्चारपूतं प्रदेशमानशिरे । तत्र मनोहराङ्गहारतरलमञ्जीरशिञ्जितानुमेयानि मृदङ्गवल्लकीनिनादानुगतगीतिहृदयङ्गमानि तिरोहितानां सुरसुन्दरीणां लास्यकुतूहलान्यवबुध्य [2]चित्रीयमाणमणिप्राकारतोरणानि दिव्यकुसुमसौरभोद्गारगरीयांसि नानोद्यानानि व्याकोशकुशेशया बह्वीर्विलासपुष्करिणीर्विलोकयन्तो लोकान्तरमिवावतीर्णाः परस्परमीक्षमाणाः सर्वेऽपि सैनिका झटिति पीतप्रभा बभूवुस्तन्निशम्य बलभद्रो मुकुन्दमाबभाषे—

कृष्ण केन हेतुना वयमाकस्मिकं पीतिमानमुपेयिवांसः, किं सुमेरोः पार्श्वमागताः स्मः[3] । तं हरिर्व्याजहार -नूनमार्यशत्रोरावासः संन्यधत्त । शोणितपुरं परितो हुताशनस्य रक्षेति किल नारदेन न्यगादि । सदा प्रदीप्तस्य तस्य प्रभाभिरनुविद्धदेहद्युतयो ध्रुवं सर्वे [4]पीततामगमंस्तदिह वाहिनी निविशताम् । विश्राम्यतु दूरतः सम्भवति सन्धौ न विग्रहः श्रेयान्, यादृशो यत्सहायो यदाशयः शत्रुस्तत् सर्वं चानेन विज्ञास्यते' ।

अथ यथानीतिज्ञसम्मतमनुष्ठीयतामिति माधवेनाभिहिते विकटवर्मबाणासुरं प्रयाहि । यथाप्रस्तावमभिधाय सत्वरं निर्वतस्वेति मन्त्रिणा प्रतिशिष्टः स प्रतस्थे प्रविवेश च दूत इति दत्तमार्गः शोणितपुरस्य गोपुरम् । ततः सिंहशार्दूलबलैरसुरपतिभिः परिवृतं राजद्वारमासाद्य वेदितप्रयोजनो दौवारिकैर्बाणासुरस्याज्ञामधिगम्य सविधमनीयत ।

प्रातः सूर्यसमप्रभैर्मणिमयैः स्तम्भैः कृतामुन्नतै-
श्चित्रैरास्तरणैर्वृतां सुरभिभिर्धूपैर्मुहुर्धूपिताम् ।
आदर्शैः परिपूजितां शकुनिभिर्हृद्यस्वरैः कूजितां
सोऽपश्यन् मतिमद्भिरूर्जिततरैर्दैत्यैः सभां शोभिताम् ।।१०७।

---

१. पृषीषु । २. चित्रीयमाणा । ३. मागमास्म । ४. पीततामगमंस्तदिह ।

तस्यां रत्नसिंहासनासीनमतुलवर्चसा किरीटेन विभ्राजमानमुभयतश्चलच्चामरमुदारसहस्रबाहुं विशालवक्षसमत्युदात्तप्रकृतिं कर्त्तारमनेकसंयुगानां हर्त्तारममरसम्पदां दातारमभिलषितस्य त्रातारमसुरवर्गस्य दनुजराजं निशम्य सावधानः स च बभाषे । सकलशिष्टपरित्राणप्रसङ्गेन द्वारवतीमधिवसन् वासुदेवस्त्वां कुशलिनमाशास्ते समदिशच्चेदं न युज्यते त्वयि यदर्द्धरात्रं प्रसुप्तमनिरुद्धमाहृत्य चिरं स्वायत्तमकरोः । नेदृशैः कर्मभिर्यशांसि विदन्ति वीरत्वाभिमानजुषः । क्षान्तमथ च[1]परममाहेश्वरस्य भवतो रभसकृतमेतत् प्रह्लादसन्ततिषु विषमं न व्यवस्यामि विशेषतस्त्वयि साक्षाद् बलेरात्मजन्मनि । तद्बहिर्नगरं निविष्टस्य मम सविधमेहि तावदनिरुद्धेन सार्द्धं यदि युक्तमुत्पश्यसि ।

तन्निशम्य कटुभ्रुकुटिविकटनिटिलपटलश्चलदरुणलोचनः सावहेलयोपहासममसुरपतिर्विप्रललाप— 'कुम्भाण्ड श्रुतमस्य दुर्मुखस्य प्रलपितम् । आः पापीयसां धार्ष्ट्यमिमे हि स्वमन्तुमितरत्र वाचोयुक्तिभिः संक्रमय्य पुष्पितानि वचांसि वदन्तो न त्रपन्ते । अहो बाणासुरेण यशांसि वेत्तव्यानि । [2]महेशादरसपर्यायाः प्रह्लादकुलप्रसूतेश्च चिरादिदं फलमधिगतं यद् भवान् मम क्षमते ।

अज्ञातप्रसवं शिशुं विधिवशान्नन्दाभिधो पालयद्
गोपोऽयं यदुभिश्च बान्धवतया ख्यातो बली दुर्बलैः ।
कंसादीन् कतिचिन्निहत्य विविधैर्व्याजैरसौ मायिकः
कृष्णोति प्रथितः स मेऽतिदयते[3] दूतस्ततः प्रेषितः ।।१०८।

[4]यदसारमवेत्य सूरतो न निगृह्णाति लघुं महाजनः ।
अबुधोऽयमुपेक्षितोऽस्य तत् सहसा मस्तकमारुरुक्षति ।।१०९।

कैश्चित् पाण्डुसुतादिकैरशरणैः स्वार्थोपपत्त्यै धिया
गोपाले बहुविप्रलम्भकुशले विष्णुत्वमारोपितम् ।
तच्चान्यैरनुमोदितं कतिपयैस्तच्चाटुकारैस्ततः
केयं नाम बिभीषिका जनयतां बाणासुरे सम्भ्रमम् ।।११०।

कामं [5]वक्रबलः श्येन उदाकुर्वीत वर्त्तिकाः ।
पराक्रमिष्यत्यहहो हन्तैवं पन्नगाशने ।।१११।

अथवा विष्णुरेव का मात्रा वाराहनरसिंहवामनादिबीभत्सोपहसनीयनानाविधभूमिकास्वीकारनिर्घृणेन तेन क्वास्मद्दंश्येभ्यःसाक्षात्सङ्ग्राममूर्द्धनि यशोधिगतं सर्वथा ।

---

१. चापरमयाहेश्वरस्य । २. महेशारसपर्यायाः । ३. समेति दयते । ४. यदसारमये स ।
५. वकुवलः ।

गोपो वा यदुवंशजो भवतु वा वैकुण्ठनाथोऽथवा
सैको वा बहुदन्तिवाजिमनुजैरावेष्टितो वा भवेत्।
प्राप्तो दृष्टिपथं कथञ्चन मम प्रोद्दामदोर्मण्डली-
चञ्चच्चण्डचपेटपातसमये प्राणान् कथं धास्यति ।।११२।
क्षणं प्रतिध्वनिमुखरीकृतान्तरा
विघूर्णितादरसभयेव[1] सा सभा।
अथासुरे विरमितवाचि दुर्वचः
परैः पुनर्यदुपतिदूत उक्तवान् ।।११३।
अनिरीक्ष्य गिरिक्रमेलकः प्रमिमीते न परत्र तुङ्गताम्।
अनुपेत्य महानदीरयो गिरिणद्या न च हीयते निजः ।।११४।
अनपह्नुतवैभवोऽप्यहो स्मयमूढस्य [2]महत्तरः कियान्।
पटलावृतचक्षुषो यथा भुवनध्वान्तहरः प्रभाकरः ।।११५।
लघवो लघयन्त्यहो गुरून् गुरुतामात्मन [3]इच्छवो गिरा।
लघुतां दधतेतरां ततो न च जानन्ति विमूढमानसाः ।।११६।
[4]गौभरिण भवादृशामतितरामापीडितेयं ययौ
धातारं शरणं स सर्वविबुधैः[5] सार्द्धं [6]हरिं तुष्टुवे।
अङ्गीकृत्य धुरोऽवतारणमसौ मायामनुष्योऽभवद्
गोपालोऽपि च मायिकोऽपि च ततः सत्यं त्वया कीर्तितः ।।११७।
न बोधिसत्त्वं बहु मन्यते जनः कृपाभरेणास्य कृतात्मतेजनः।
विभाविता चेददसीयधीरता तदा भवत्यम्बुनिधौ न धीरता ।।११८।
उशन्ति ये नीतिविदग्धबुद्धयो निजत्रिलोक्या महिमानमुन्नतम्।
महीक्षितस्ते खलु तन्वते सकृन्मुकन्दपादाम्बुजयोर्नतं शिरः ।।११९।
सुदर्शनं वारयितुं य ईहते सुदर्शनं तस्य स याचते रिपुः।
बिभेति यो नन्दकतः स नन्दकं तदङ्घ्रिपद्मं[7] स्पृशति स्वमौलिना ।।१२०।
प्रकाममागांसि शतं वितन्वतामभीप्सतां[8] त्राणमथ द्विषां पुनः।
तदीयपादाम्बुजयोः शिरःस्रजां रजोभिरुद्धूलनमेव निष्कृतिः ।।१२१।

---

१. -दरसमयेव। २. महतरः। ३. इछवी। ४. गौर्भरिण। ५ विधुधै। ६. हरि।
७. पद्म। ८. -मभीक्षतां। ८. -मभीक्षतां।

वृष्णीनां प्रवरस्य दानववधूवैधव्यदीक्षागुरो-
ब्रध्नं पेचकवन्निभालयसि नो जाज्वल्यमानं महः ।
दुर्दैवादरिभूभृतां हतधियां संवर्तवैश्वानर-
क्रूरे यत्र पतङ्गवन्निपततां नामापि न श्रूयते ।।१२२।

सिन्धोरुत्थितमापिबन्ति गरलं शेषानने शेरते
प्राहन्ते प्रलयानलार्चिरनिशं द्रुह्यन्ति दुर्वाससे ।
उन्निद्रं मुचुकुन्दमाविदधते चुम्बन्ति मृत्योर्मुखं
ये स्वप्नेऽपि वितन्वते सुरभिदो वैरं विधेर्व्यत्ययात् ।।१२३।

एषोऽभ्येति मधुं द्विषन्निति मृषा सञ्जल्पिते केनचिद्
दूरात् कौतुकिना कुतोऽपि सहसा प्रत्यर्थिपृथ्वीक्षितः ।
वेश्मस्था विपिनं विशन्ति विपिनावासा द्रुतं पर्वता-
स्तूर्णं पर्वतवासिनोऽपि विवशाः [1]वारीन्द्रपूर्णा दरीः ।।१२४।

वैरिव्रातविमर्दनिर्दयचलद्दाशार्हसैन्यस्फुर-
ल्लुण्टाकैर्विधृतासु या विगलिता दैवाद् दरीः संश्रिताः ।
रूपिण्यो वनदेवता इति धिया प्रह्वैः पुलिन्दैः परं
पूज्यन्ते भयशोकशून्यमनसा ताः शत्रुवामभ्रुवः ।।१२५।

गर्भस्रावकरं सुरारिसुदृशामाकर्ण्य कंसद्विषः
शङ्खध्वानमधीरधीभिरहितैरुन्मीलदत्याहितैः ।
शक्यः शैलशिरःप्रपातरभसो वक्त्रे प्रवेशः शयो-
रावेगात् सुसहो दवानलशिखाश्लेषस्तथेषत्करः ।।१२६।

[2]दोषादुरुच्छेद्यतमास्त्वदीयाः स्थास्यन्ति नूनं दितिजेन्द्र तावत् ।
विभुं गुणारोपणवीततन्द्रं यावन्न तं द्रक्ष्यसि सम्पराये ।।१२७।

साम्राज्यसम्पदमिमामव दानवानां
तद्दण्डनीतिविदुषां मतमाश्रयस्व ।
मा मत्तभद्र इव शैलतटे प्रहृत्य
पश्चात्तपाधिगतकेवलशृङ्गभङ्गः ।।१२८।

---

१. परीन्द्र- । २. दोषदुरुच्छेद्य- ।

बद्ध्वा पाणिसहस्त्रमद्यसहितं बद्ध्वाऽनिरुद्धं वहन्
पादाब्जे प्रणतार्तिभञ्जनपटोः कोटीरकोट्या स्पृश।
आक्रान्तः शिशुपालशाल्वनरकैः कारूषरुक्म्यादिभि-
स्तुभ्यं रोचत मा स्म दानवपते पन्थाः परं सङ्कटः ॥१२९॥

इति दूतवचो[1] निशम्य बाणो द्विगुणोद्दीपितरोष[2]रूक्षमूचे।
हितमप्यहितं विदन्ति चित्रं हृतचित्ताः प्रतिलोमया नियत्या ॥१३०॥

अपेहि जाल्मक [3]द्वन्द्वदूत्यकञ्चुकच्छन्नोऽसि न चेदधुनैव भवसि कृतान्तनिकेतन-प्राघुणिकः।

आयान्त्वद्यैव ये ये दिवि भुवि च भुवोऽध[4]: पराक्रान्तिभाज-
स्ते सर्वे शस्त्रहस्ता ननु कुकुरकृमीन् स्वैः प्रयत्नैरवन्तु।
मांसासृक्क्लोममज्जामयमहमसकृत् प्लावयिष्यन्नमीषां
पूरैः क्षोणीं क्षणेन क्षतकरितुरगः कालमामन्त्रयामि ॥१३१॥

गते दूते यदुपतेस्ततो दानवनायकम्।
सान्त्वयन् स्निग्धया वाचा कुम्भाण्डो मन्दमालपत् ॥१३२॥

येन मन्दाकिनीकूले निखातो विजयध्वजः।
[5]सत्यमस्ति कथङ्कारं तव तिष्ठासवः पुरः ॥१३३॥

किन्तु कृष्णोऽयमचिन्त्यपराक्रमः सामैवास्मिन् शोभते गान्धर्वपरिणयपुरःसरः शैलसुताभिप्रायमनुरुन्धन्नुभयान्वयानुरूप्यरमणीयः सम्बन्धश्चायं श्लाघनीय एव।

सुरासुरशिरोरत्नं तातस्ते चन्द्रशेखरः।
सम्बन्धी यदि गोविन्दः किमतः परमीहितम् ॥१३४॥

इदमभिहितं यस्मान्मन्त्रीति मामभिमन्यसे
न खलु सचिवः श्रेयान् मन्त्रे प्रियं वदतां वहन्।
यदि तु नियतेरेतत् तुभ्यं न सम्प्रति रोचते
प्रथममयमुत्तिष्ठेद् राजन् रणाङ्गनमीक्षकः ॥१३५॥

अथ दनुजराजः सप्रणयकोपमलपत्—

कुम्भाण्ड त्वयापि कापुरुषेणेवेदमुदीर्यते, जिह्रेमि सन्धिसम्बन्धिनीं वार्तामप्याकर्णयन् न खल्वहं दुर्योधनः।

---

१. दूतवचचो। २. -रोपरुक्ष-। ३. द्वद। ४. भुबोधः। ५. मत्पस्तिस्य।

हलिना हलेन परिवर्त्तिते पुरे
तनयां प्रगृह्य सहसा स्वबन्धुभिः ।
उपदीकृतप्रचुररत्नमौक्तिकः
पदयोरमुष्य निपपात यः स्वयम् ।।१३६।
अनयः सुनयो वा स्याज्जीवितं वा तथेतरत् ।
बाणस्य कं नमेन्मूर्द्धा विना शीतांशुशेखरम् ।।१३७।

तत् सज्जीकुरु साङ्ग्रामिकं मे स्यन्दनं यावदेतान् मनुजपशून् प्रेतपतेरुपहरामि ।

इत्याकर्ण्य स्फुटमभिहितं दैत्यराजेन दैत्याः
सान्द्रानन्दोच्छ्वसितवपुषो गाढरोमाञ्चभाजः ।
शस्त्राणि स्वान्यमलगगनश्यामलान्याददाना
बिभ्राणाश्च स्फुरदुरुरुचो [1]बाणबाणान् विरेजुः ।।१३८।
दूतोऽथ दैत्यमथनं प्रणमन्नवादीत्
सन्धिं विभो न रिपुरिच्छति गाढदर्पः।
साहायकं च सगणोऽस्य शशाङ्कमौलिः
कर्त्ता पुरं च परितोऽनलकीलदुर्गम् ।।१३९।
अपहृत्य दानवपशोंऽशुकं बलादरिदुर्गशः कचय प्रसारिणः ।
उपभुञ्जतां तव सुखेन सैनिका दितिजेन्द्रसौधकलशस्तनीं पुरीम् ।।१४०।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनामकेन
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते
शोणितपुरप्रयाणं नाम सप्तम उच्छ्वासः ।।७।।



१. मातृकायां 'बाण' इति पाठो नास्ति ।

# अष्टम उच्छ्वासः

अथ प्रचचाल चतुरुदधिवीचिविक्षोभकारिणी करितुरगरथपादातबहल-कोलाहलाकर्णनचकितदिग्दन्तावलाबलवदभिहन्यमाननिःशाणनिःस्वननिर्दलितकुल-शैलकन्दरा वीरपाणमतविश्रृङ्खलविस्फुरद्घोरवीरभटा यादवध्वजिनी ।

भ्रश्यन्त्यामवनौ मुकुन्दपृतनाभारेण भूधारिणा-
माक्रोशे सकलैः कृते फणिपतेरश्रोत्रताऽभूद् गतिः ।
शृण्वन्तो यदि[1]दिग्गजा न बिभृयुस्तां खिन्नगण्डा अपि
ख्यातं सर्वधुरीणतामदमिमे किं धारयेयुस्तदा ।।१।

अनुलोममारुतसमुल्लसिता
ध्वजवल्लयोऽरुणरुचो व्यरुचन् ।
प्रजिघत्सतः सुरविरोधिगणान्
शमनस्य किन्नु रसना वितताः ।।२।

उत्तेजिताश्वैः कृतसिंहनादैरुल्लास्यमानाः परितोऽश्ववारैः ।
कुन्ता विरेजुर्वितताः शिताग्राः[2]कालस्य दन्ता इव दुर्निवाराः ।।३।

रथनेमिवाजिखुरनिर्दलितै रथरेणुभिर्दिनमणिः पिदधे ।
त्यजतामसूनभिमुखं किमसौ निजबिम्बभेदभयतोऽस्तमगात् ।।४।

अतिदूरादुदीक्ष्य प्राकाररक्षिणां तत्क्षणमाग्नेययन्त्रैर्निवारयतामप्येकार्णवप्रवाह-दुर्निवारा वरूथिनी गोपुरमभिचक्राम । निर्गत्य गोपुराद् युध्यमानानप्रमेयपराक्रमान-सुरपतीनग्रेसराः शरव्रातैस्तरलतरवारिपातैरपातयन् । ततः क्रुद्धेन रसानलेन व्यादिष्टा विद्युज्जालविकटार्चिषः कृपीटयोनयो [3]यादवीं चमूमधाक्षुः[4] । ध्वजेषु नरतुरगश्मश्रुके-सरेष्वाग्नेयोपकरणेषु च क्षिप्रकारिणा क्षणं वीतिहोत्रेण वाहिनी व्याकुलाऽक्रियत ।

दीर्घेषु कूर्चवलयेष्वनलावृतेषु
दौवारिका [5]विगतवेत्रलता व्यधावन् ।
दासेरका ज्वलितवालधयो नदन्तः
कण्ठागतश्लथधुराः स्म समुच्छलन्ति ।।५।

---

१. दिगाजा । २. कालस्यदंना । ३. यादवीचयू- । ४. मधाक्षुब्धजेपुनर- । ५. विगतरेत्र ।

विहस्तां वह्निना सेनां समवेक्ष्य जनार्दनः ।
सहायं सर्वसंख्येषु सस्मार विनतासुतम् ।।६।

प्रतप्तजाम्बूनदशैलसुन्दरो बृहद्बलो वज्रवपुस्त्रयीमयः ।
गरुन्मरुत्क्षिप्रमहाशिलोच्चयः पुरो गरुत्मान् हरिमभ्यवर्तत ।।७।

तमवलोक्य [1]जनार्दनो जगाद—स्वागतं तव कश्यपकुलोत्तंस विनतानन्द-वर्द्धन, बाणोऽनिरुद्धमाहत्य नागपाशैरबध्नादिति युद्धमस्माभिरुपक्रान्तमेतर्हि[2] गिरिव्रजवह्नयः सेना नः प्रदहन्त्यह्नाय प्रतिविधेहि[3] । ततो वैनतेयो व्याजहार—

भवत्प्रतापसंवर्तवैश्वानरशिखाशते ।
लीयन्ते वह्नयः क्वापि तूर्णं बाणस्तृणायते ।।८।

ततः खगेश्वरो मुखसहस्रं विधाय पक्षवातेन बलाहकान् विक्षिपन्नाकाश-गङ्गामुपेतो महतीं वृष्टिमन्वतिष्ठत् । तेनाकालवर्षेण वह्नीनुपशमय्य सर्वान् विस्मापयमानो मुकुन्दस्य पार्श्वे युयुत्सुरदृश्यत । अथाङ्गिराः कल्माषकुसुमशोषणपिठरप्रभृतिभिर्वह्नि-भिरनुगतो रोषद्विगुणदीप्तिर्वारणवर्षेण दाशार्हसेनामाच्छादयत् । यदवोऽपि विस्फारित-महेष्वासाः शिलाशितैः शरशतैः सर्वतो वह्नीनवाकिरन् । अत्रान्तरे च नासीरमासाद्य स्मयमानो मुकुन्दो जगाद—

अनलाः साधु युध्यध्वे[4] शार्ङ्गज्याजन्मनस्त्विमान् ।
शस्त्रानलान् सहध्वे चेत् स्तौमि युष्मन्महो महत् ।।९।

तदाकर्ण्य ज्वालजालदुर्निरीक्षो ज्वलन्तं त्रिशूलमादायाङ्गिराः प्रजिहीर्षुर्हृषीकेश-माप्रधावत्[5] । कालानलस्येवाऽऽपततस्तस्य त्रिशूलमर्द्धचन्द्रेण निकृत्य वक्षसि स्थूणाकर्णं केशवो निचखान । तेन मर्मप्रहारेण शिथिलसन्धिबन्धो विवर्त्तमाननयनः पावकप्रवरो निपपात । शेषाः शुष्माणोऽभिशोणितपुरं व्यद्रवन् ।

निर्गमावधि विदन्नपि बाणश्चारचक्षुरखिलं हरिकृत्यम् ।
दुर्निवारभुजपौरुषवित्तं[6] यन्न [7]तस्य सचिवैर्ज्ञपितोऽपि ।।१०।

अथ मुकुन्दमुपगम्य परमानन्दगद्गदं नारदो जगाद—'वासुदेव तदिह शोणितपुरमिह बाणतस्त्रिपुरमर्दनः स प्रमथसैन्यो युयुत्सुर्भवन्तमभिवर्त्तते[8] । तं हरिर्व्याजहार—'सुरमुने यदि देवः पिनाकपाणिर्युयुत्सयोपैति तर्हीतोऽपि यथाशक्ति प्रत्युपस्थास्यते' ।

परे वह्नीन् विनिर्जित्य प्रविविक्षन्त्यमी पुरम् ।
सम्भ्रान्तमिति बाणस्य चारैरुपनिवेदितम् ।।११।

---

१. जगार्दनो । २. रुपक्रांतमेंतगिरि- । ३. प्रतिविवेहि । ४. युध्यब्ध्वे । ५. माप्रधावत्।
६. दुर्निवारभुजपौरुमतोचितं । ७. इदं पदं पुस्तके नास्ति । ८. भरतमाभिवर्तते ।

तदाकर्ण्य रोषारुणलोचनो दानवेन्द्रः सर्वाभिसारमाज्ञापयत् स्वयं च कृतस्वस्त्ययनः साङ्ग्रामिकं रथमारुरोह ।

प्रतिनादयन्नखिलमेव तत् पुरं
दनुजैरताड्यत मनस्विदीपनः[१] ।
हृदयानि कातरजनस्य कम्पय-
न्नथ दुन्दुभिः प्रलयमेघनिःस्वनः ।।१२।

मातङ्गांस्तुरगान् रथान् खरवरान् व्याघ्रान् वराहान् रुरून्
नागानश्वतरान् लुलायशरभानारुह्य दैत्योत्तमाः ।
नर्दन्तोऽसिगदाभुशुण्डिपरिघप्राप्तायुधाः सर्वतो
माद्यत्सिन्धुरदुर्निवारगतयो जग्मू रणायोत्सुकाः ।।१३।

विद्युत्पुञ्जनिकाशकेतनपटा कादम्बिनी श्यामला
वर्षन्ती विशिखावलीमविरतं सेनाऽगमद् दानवी ।
वादित्रस्तनितेन कर्णविवरं गाढं तुदन्ती नृणा–
मिष्वासैर्विमलैस्त्रिवर्णललितैरुद्भासमाना भृशम् ।।१४।

न न्यवर्त्तत सुरारिवाहिनी गोपुरादभिविनिर्यती चिरम् ।
श्यामला किल कलिन्दनन्दिनी पर्वतादिव कलिन्दतः पुरा ।।१५।

वारणैः पर्वताकारैर्हयैर्वारणसन्निभैः ।
[३]रथैरशनिनिर्घोषैः क्रान्ता भूमिरकम्पत ।।१६।

एधाञ्चक्रे पांशुपुञ्जः पुरस्ताद् व्योमाभोगे तारकोलाहलो नु ।
योधेन्द्राणां सेनयोः सन्निपाते पश्चान्मोदो मानसेष्वप्रमेयुः ।।१७।

सा राजति स्म पृतना समरे मुरारे-
रारेचितोत्तमतुरङ्गततिर्विशाला ।
शालानलङ्कृत पुरस्य रिपोरुदारान्
दारानकम्पयत या च गभीरसारा ।।१८।

दूराददृश्यत परस्परमेव योधैः
सायन्तनातपरुची रजसां वितानः ।
चिह्नैर्युता बहुविधैश्च ततः पताका
युद्धोत्सुकानि ललितानि ततो मुखानि ।।१९।

---

१. -रताड्य तमनरिव दीपनः । २. मातंगास्तु- । ३. रथैरसनि- ।

तुल्ये सेने तुल्यकोलाहलाढ्ये संरम्भेणाभिप्रयान्त्यौ रयेण।
भीतिं लोकस्याकृषातां यथोग्रे वेण्यौ सिन्ध्वोः संबिभित्सू युगान्ते ।।२०।
भेरीमर्दलशङ्खतारनिनदैः संभिन्नयोः सेनयो-
घर्ण्टाघोररवैर्मदान्धकरिणां ह्रेषास्वनैरर्वताम्।
आध्माताः ककुभो विमाननिवहैर्व्योमाङ्गने प्रेक्षकाः
कर्णानङ्गुलिभिर्निपीड्य[1] पिदधुर्लोको जुघूर्णेऽखिलः ।।२१।
अनीकिन्योरेकीभवदपरजो जिज्वलिषतो
भटानां [2]क्रोधाग्नेर्बहल इव धूमः समुदितः।
विलुम्पन् मार्तण्डं सलिलमुदधीनां कलुषयद्
विधातुः पद्मस्य व्यधित महदावालवलयम् ।।२२।
सिन्दूरारुणरोचिषः करिघटाः स्फूर्जत्पताकाशताः
शुण्डाशृङ्खलपातपातितजना दानाम्बुधाराकिरः।
सन्ध्याशोणरुचेः प्रदीप्ततडितो घोरान् किरन्त्यः [3]पवीन्
कल्पान्तोत्थिकालिका इव महावर्षा रणे बभ्रमुः ।।२३।

अत्रान्तरे च

जटाधरः शिशिरमयूखसुन्दर-
स्त्रिलोचनोऽलिकलसदर्द्धचन्द्रमाः।
महोरगैः स्फुरितफणामणिप्रभै-
रलङ्कृतो विधृतगजाजिनाम्बरः ।।२४।
वहन् शिरस्यमरतरङ्गिणीं वशी
गलोल्लसद्गरललवो विभूतिभृत्।
वृषं श्रितो हिमगिरिगौरतेजसं
[4]त्रिशूलधृग्गगनसदां गणैः[5]स्तुतः।।२५।
षडाननद्विपवनादिभिर्वृतो
वृषध्वजः प्रमथबलेन वेष्टितः।
परिस्फुरद्डमरुरवः स्मिताननो
धनुष्मतां प्रथम उपागमद् रणे ।।२६।

---

१. निषीद्य। २. क्रोधाग्रे। ३. पर्वान्। ४. त्रिशूलधृगागन। ५. सदांगणै स्तुतः।

त्रिभिर्विशेषकम्—

कपिसिंहसूकरश्रृगालमुखैरहिकाकवदनैरसुरैः ।
प्रमथैरनेकचरणैरपदैर्बहुभिर्बहुमुखैःप्रसृतम् ।।२७।

उदायुधा दितिदनुनन्दनास्ततो
महारथाः प्रमथवराश्च किङ्कराः ।
अनीकिनीं यदुवृषभेण पालितां
युयुत्सवः प्रविविशुराशुकारिणः ।।२८।

अनाधृष्टिः सेनापतिरथबलं षड्विधमपि
प्रकर्षन्निर्भीकः सपदि मकरव्यूहविधिना ।
भटानामानन्दात् त्रुटितकवचग्रन्थिनहतां[1]
निदेशं प्रोत्क्षिप्य स्वभुजमदिशद्धं प्रहरत ।।२९।

अथ रणावेशमतमहायोधकृतसिंहनादं प्रति गजगन्धक्रुद्धदन्तावलविपोथ्यमान-नरतुरगं कृष्यमाणसहस्रशः शिञ्जिनीगुञ्जितगगनाङ्गनं विकोशीक्रियमाणकृपाण-कोटिकान्तिप्रतिहतचक्षुश्चयं सनसनायमानविशिखव्रातपिहितव्योमवलयमपरिज्ञायमान-स्वपरसैनिकमसुरनरकरितुरगशरीरशिराशतस्यन्दमानरुधिरधारं[2] क्षणविखण्ड्यमान-मुण्डमण्डलीमण्डितखण्डपरशुमूर्त्तिमहीतलं समरमहोत्सवः प्रावर्त्तत ।

रथस्थिताः कवचविचित्रवर्चसु[3] श्रवः—
स्फुरद्गुणलतिकास्तरस्विनः ।
शिलीमुखैरविरतपातिभिः परा-
नपातयन् क्षरदसृजो रणक्षितौ ।।३०।

तनूरुहैर्भुजगभुजामलङ्कृताः
सपक्षकाः फणिन इवाभ्रचारिणः ।
[4]सकृच्च्युतास्त्रिचतुरभेदिनः शरा
नृणामसून् बत परिवीय नातृपन् ।।३१।

वमन्त्यमूः किमु ककुभः शरावलीं
किमम्बरं विकिरति सर्वतोयताम् ।
व्यकल्पयन्निति समरक्षितौ स्थिता
धनुर्भृतां रणरभसे विजृम्भिते ।।३२।

---

१. नदतां । २. स्पन्दमानरुधिरधारं । ३. वर्चसुः । ४. सकच्च्युता- ।

धनुर्धरैः शरनिकरेण संवृते
पतत्त्रिणो नभसि न पेतुरित्यदः ।
किमुच्यतां रविकिरणैरधस्तनं[१]
निबर्हितुं न तिमिरमैशि तन्वपि ।। ३३ ।
करिस्थितः करिणि निषीदता हत-
स्तुरङ्गगस्तुरगगतेन पातितः ।
रथी क्षतो रथिकरविच्युतैः शरैः
पदातिना सपदि पदातिरर्दितः ।। ३४ ।
विपाटिता विकटविपाटपातनैः
परिक्षरत्क्षतजसमुक्षितक्षमाः ।
गदामरेरुरसि निपात्य वेगतः
परासवः सममुनाऽभवन् परे ।। ३५ ।
प्रतीच्छ भोः प्रहर न मुच्यसेऽधुना स्थिरीभव प्रजहि ततो निपात्यसे ।
इति श्रुताः प्रहरणपाणिभिर्भटैरुदीरिता रणभुवि दुःश्रवा गिरः ।। ३६ ।
निपातितः शिरसि शिरस्त्रवेष्टिते बलादसिः समुदितकांस्यनिस्वनः ।
द्विधा वपुः सपदि विधाय वैरिणो धरां विशन् प्रसभममूमुदद् भटम् ।। ३७ ।
शरैः शरा नभसि निवर्त्तिता भटैः
[२]शराः समं परिदलितं परस्परम् ।
रथात् प्लुतैः कलितगदैरकातरं
विचूर्णिता लवलवमस्थिसन्धयः ।। ३८ ।
कुन्ते निखातफलके फलके कयोश्चि-
दन्योऽल्पकर्षणपरिश्रमशेषभाजोः ।
हित्वा हयौ [३]स नयतोरभवज्जनस्य
युद्धं कचाकचि तलातलि कौतुकाय ।। ३९ ।
महोन्नतं पदमधिगम्य माद्यतां
वृथा मदः क्षणपरिणामि यज्जगत् ।
समच्छिदन् हयमधिरोह्य सादिनो
मतङ्गजान् नृपतिशिरांस्यतर्कितम् ।। ४० ।

---

१. किरणैरस्तनं । २. शरा । ३. सजतो- ।

अधिमध्यमरेरसिः प्रयुक्तो बलिना तं विदधे द्विधा क्षणेन।
किमसौ न मनागपि क्षतोऽभूदिति चिन्तामकरोत् स्थिते स तस्मिन्॥४१॥

परस्परं निशितकृपाणपातितै-
रदूषितैः पिशितभुजां गणैर्भयात्।
जिगीषतां भ्रुकुटिविटङ्कितैरभू-
न्न मूर्द्धभिः क्वचिदपि वर्जिता मही॥४२॥

विशेषकैर्युवतिर्जनस्य लाञ्छिता
द्विजन्मनां सुरभिसहस्रदायिनः।
तरस्विनां परिपतिताश्चकाशिरे
रणक्षितावजगरपीवरा भुजाः॥४३॥

विबाहवो दलितपदा विमस्तकाः
क्षतोरसो जठरविनिर्गतान्त्रकाः।
प्रदेहि मे जलमिति वादिनो मुहु-
र्विलोकिता गलविलुठत्कृशासवः॥४४॥

परस्परं सुभटगणैर्निपातितैः
शरोत्करैः क्षतवपुषः क्षणे क्षणे।
यतस्ततश्चकृषुरवाप्तविक्रिया
विसारथीन् हतरथिनो रथान् हयाः॥४५॥

द्रुतमर्द्धचक्रकृतमूलकर्त्तनान्
न्यपतन् विषाणमुसला विषाणिनाम्।
परिपीय निर्झरपयांसि तुङ्गतो
गिरिशृङ्गतः किमु मरालपङ्क्तयः॥४६॥

छितध्वजाः [१]परिपतितातपत्रका
विमस्तकै रथिभिरतीव भीषणाः।
उदश्रुभिः शरनिचितैर्नियन्तृभिः
क्वचिद् रथाः समरभुवोऽपनिन्यिरे॥४७॥

---

१. परिषति तानपत्रकाः।

मतङ्गजैर्दलितपदैर्निपातितैः
समन्ततः प्रतिभयतामगान्मही ।
प्रजाक्षयक्षुभितनृपानुतापिनी
पृथोः पुरः पृथुभिरिवाचलैर्वृता ।।४८।
विभूषिताः कनकमयैर्विभूषणैः
सितप्रभैश्चमरचयैरलङ्कृताः ।
स्वसादिनां परिलुठतामनन्तरं
परासवः परिपतितास्तुरङ्गमाः ।।४९।
पताकिनो दृढमुपगूह्य शिश्यिरे
शराचिता ध्वजलतिकाः प्रिया इव ।
ह्रदस्त्रवद्विदलितवाद्यभाजना
जना मृताः क्वचन च वाद्यवाहिनः ।।५०।
[1]असृक्स्त्रुतिस्तुपितविलम्बिकूर्चकाः
प्रधाविनो विरचितभैरवा रवाः ।
तरस्विनस्तरलकृपाणपाणयः
सहस्त्रशो व्यजनिषतोन्मदिष्णवः ।।५१।
प्रकोपनाः कतिचन खड्गपाणयः
समाश्रिताः कुपितकृतान्तघोरताम् ।
हयद्विपद्विषदसुरोष्ट्रमारणे
विनिर्घृणाददधुरसुमोचनव्रतम् ।।५२।
खड्गाखड्गि गदागदि क्वचिदपि क्रोधोद्धुरं धावतां
बाहूबाहुवि सङ्गरे प्रसजतां वक्षोघ्नतां वक्षसा ।
वीराणां सुयशः शशाङ्कविमलं प्राणैः पणैः क्रीणता-
मासन् वासकसज्जिकाः सुरपुरे कालप्रतीक्षाः स्त्रियः ।।५३।
विमानगा विबुधवधूकरार्पितैः
प्रसाधिताः सुरतरुदिव्यदामभिः ।
मनस्विनः समरभुवि न्यभालयन्
निजास्तनूरतनुवृकैर्विलोठिताः[2] ।।५४।

१. स्तुप् ४/११९ समुच्छ्राये (प) । २. विलोटिताः ।

क्षपाचराः पटुकटपूतनावृताः
पिशाचकाः सहचरडाकिनीगणाः ।
सबुद्बुदं सपदि निपीय लोहितं
करोटिभिर्व्यदधत कन्दुकक्रियाम्[१] ।।५५।
नवं नवं पलमुपभुज्य देहिनां
निपीय च क्षतजनिपानमुन्मदाः ।
मुखोल्मुकप्रकटितदन्ततालवो
विवाशिरे भृशमशिवाः शिवागणाः ।।५६।
परिभ्रमत्करिपदनक्रभीषणा
नृबाहुभिस्तिमिरफल्गुभिर्वृताः ।
समाकुलाः सुररिपुमूर्द्धकच्छपै-
र्मनस्विनां मुखकमलैरलङ्कृताः ।।५७।
समुल्लसच्चिकुरकलापशैबला
बलद्वसापिशितनिकायकर्दमाः ।
उपाश्रिताः शुनकशृगालवायसै-
रसृग्जलाः परमवहन् महापगाः ।।५८।

युग्मम्

समन्ततो बहलकरङ्कसङ्कुले
नृमध्यमद्वयसपलौघपिच्छिले ।
रणाङ्गने प्रतिपदमग्रनेमयो
रथा हयैः कथमपि कष्टमूहिरे ।।५९।
गलोच्छलत्क्षतजमहोन्नतच्छटा
स्फुटार्जिता लघुजलयन्त्रकौतुका ।
महाभयं व्यधित जनस्य डामरा
प्रधाविता दिशि दिशि रुण्डमण्डली ।।६०।
भयङ्करे स्मृतिसमयेऽपि सङ्गरे
शरानलज्वलितनभोदिगन्तरे ।

१. कंटुकक्रियाम् ।

जयश्रियः परमभिको मनस्विनां
न पृष्ठतः पदमपि कोऽप्यपासरत् ।।६१।

नीता व्योमनि गृद्धचिल्लकरटैश्चञ्चोश्च्युता[1] गौरवा-
न्मुण्डश्रेणिरितस्ततोऽतिचकिताश्चक्रे चमूचारिणः ।
अन्योऽन्यं [2]कलहेऽम्बरान्निपतितान्यन्त्राण्यहो पत्रिणा-
मास्येभ्यो गलमाश्रितानि च नृणां पाशभ्रमं निर्ममुः ।।६२।

एवं घोरे सम्प्रहारे प्रवृत्ते क्रोधान्धानां त्रासतो [3]यादवानाम् ।
क्षीणां सेनां [4]स्वामवेक्ष्यापयान्तीमीषत्स्मेरस्तारकारातिरूचे[5] ।।६३।

किमपयाथ प्रमथपुङ्गवाः शुक्रशिष्याश्च शारदकौमुदीसदृक्षामनपायिनीं कीर्तिमुपेक्षमाणाः । क इव पक्षपातः क्षणविनश्वरेषु प्राणपवनेषु । ननु भोस्तिष्ठत मनुष्यकैर्धर्षिताः कथमिव दर्शयिष्यथ स्वस्वदारान् । मन्दाक्षमलिनान्याननानि । एवमभिधाय शिखिध्वजं रथमारूढोऽसुरसैन्यस्याग्रेसरन्नुत्पातवात्यामिवारातिषु नाराचवृष्टिममुचत् । न सेहिरे तस्य नरकरितुरगप्लीहकालखण्डखण्डिनः संसक्तधारान् शरान् दाशार्हसैनिकाः । उत्तेजिताश्च तेनाविकृताकारा विविधप्रहरणा गणा दानवेन्द्राश्च संशप्तकीभूय भूयः परिपन्थिनां प्रमथनमन्वतिष्ठन् । प्रमथेषु दानवेषु च प्राप्तपाशमुद्गर-तोमरत्रिशूलधारां विसृजत्सु रणक्षितौ क्षणमपि स्थातुं न कश्चिदक्षमत । किङ्करकर-निर्गतशरनिकरनिकृत्तकण्ठनालनिर्गलितकीलालकुल्याभिः समन्ततः समरभूमिरसिच्यत व्यद्रवच्चार्द्धच्छिन्न[6]कण्टकदलक्षरितलोहितक्षालितो रसः । प्राणत्राणप्रवणाः कतिचन सात्वतचमूचराः ।

पराङ्मुखीं निजपृतनां विलोकयन्
नवोदयद्युमणिसमानद्युतिः ।
विजित्वराः प्रहरत कीटकानमू-
निति ब्रुवन् यदुपतिसैन्यपोऽभ्ययात् ।।६४।

तमन्वयुर्गदसाम्बसारणनन्दोपनन्दभद्रचारुदेष्णचारुचन्द्रसुचारुपृथुविपृथु-कृतवर्माक्रूरचक्रदेवसुदेवनिवृत्तशत्रुभङ्गकारविदूरथकङ्कशतद्युम्नराजाधिदेवमृदुरचित्रक-बृहदुग्रगवेषणप्रभृतयश्चक्रीकृतचापाः पुङ्खितशराः सात्वतप्रवराः ।

अनाधृष्टिर्वृष्टिं व्यरचयत भाल्लीमरिगणे
प्रयोगादाग्नेयात् प्रतिभयललज्ज्वालजटिलाम् ।

---

१. चंवोश्च्युता- । २. कलहेंव । ३. पांध्वानाम् । ४. स्वामवेक्ष्याय यान्ती-। ५. रातिरुचे । ६. कंटकं ।

तनुत्राणि च्छित्वा प्रमथदनुजान् किङ्करवरा-
नधाक्षीत् क्षेपीयःप्रलयहुतभुग्घेतिरिव या ।।६५।

जलधरानिव मन्द्रध्वानमुचः सांयुगीनान् स्यन्दनानधिष्ठिताः सात्वतमहारथाः सर्वतो विशिखव्रातैः कालरात्रिकल्पां तमिस्रामकल्पयत् ।

नासुरो न च गणो न कोणपः किङ्करो न तुरगो न न द्विपः ।
पर्यलक्ष्यत निरन्तरैः शरैर्भूरुहो व शलभैः[२] समाचितः ।।६६।

[३]शरश्रेणीं घोरामशनिमिव विष्वग्विकिरता
यदूनां व्रातेन प्रलयमयुगान्ते कृतवता ।
विविक्तत्वं नीते समरवलये यः क्षणमपि
स्थिरोऽभूत् तं व्योमन्यमरमुनयो वीरमनुवन् ।।६७।

अश्रान्तं विनिपातिता यदुभटैर्भल्लावलीभिर्[४]द्विषां
मुण्डश्रेणिरनर्घकुण्डलकृताभिख्यानसङ्ख्यामगात् ।
प्रोतां स्नायुगुणेन रक्तरुचिरां तामुद्वहन्ती स्रजं
[५]मत्ता दानवशोणितासवरसैर्नृत्ता[६]चिरं कालिका ।।६८।

अपसरति बले दितेः सुतानां प्रसरति सर्वत एव वृष्णिसैन्ये ।
दनुतनुजमहारथाः प्रकोपात् समुपगता वरणीबभूवुरन्ये ।।६९।

ते च प्रत्यग्रसमरोत्साहसमुन्नद्धमनसः कुम्भाण्डकूपकर्णबाणतनयप्रधानास्त्रिदोषदुःसाध्या व्याधय इव जनान् बबाधिरे ।

प्रत्येकं यदुपुङ्गवेषु किरतस्तूर्णं सहस्रं शरान्
कुम्भाण्डस्य विदाञ्चकार समरे सन्धानमोक्षौतु कः ।
बाणैर्बाणसुतस्य शाणनिशितैः प्राणग्रहप्रेप्सुभि[७]-
स्त्राणा वैरिवरूथिनी बत यथा प्राणान्[८] द्रुतानाविदत् ।।७०।

तापैरिव त्रिभिरमीभिरतीव लोका-
नापीडितान् प्रमदयन्नथ निर्विकल्पः ।
तत्त्वावबोध इव योधवरान् विभिन्दन्
बाणैर्बभूव पुरतः कृतवर्मवीरः ।।७१।

---

१. सैन्ययोऽभ्ययात् । २. भूरुहोवशलमैः । ३. शरश्रेणीघोरामसनिमिव । ४. भल्लावल्लीभि- । ५. माना । ६. नृता- । ७. प्रेक्षुभि- । ८. प्राशां ।

कार्मुकं प्रविदलय्य लस्तके सोऽर्धचन्द्रविशिखेन वेगतः ।
सप्ततिं प्रनिचखान सायकान् दैत्यराजसचिवस्य वक्षसि ।।७२।

कृतवर्मणः सपदि मर्मभेदिना
विशिखेन बाणतनयः शिरस्यहन् ।
स ललाटनिर्गलदसृगुरो बभा-
वुदयद् दिवाकर इवोदयाचलः ।।७३।

क्रोधाध्मातेन तेन व्रणमविमृशता शिञ्जिनीघोरघोषा-
मास्फाल्याशीतिसङ्ख्यास्तमभिमुमुचिरे कङ्कपत्राः पृषत्काः ।
आकाशे तान् निकृत्त्य स्वविशिखविसरैर्बाणसूनुस्तरस्वी
चापं छित्त्वास्य चक्रे शरनिकरमहावर्षमव्याकुलात्मा ।।७४।

दृष्ट्वेदं चारुदेष्णः प्रजविरथगतस्तिष्ठ तिष्ठेति जल्पन्
भल्लेनाच्छिद्य चापं दितिजपतिसुतस्यापतन्नातिदूरात् ।
बाणानां द्वे सहस्रे द्रुतमुरसि शिरस्यानने कण्ठदेशे
कुक्षौ जङ्घायुगेऽङ्घ्रिद्वयचरणतले मग्नपुङ्खं न्यखानीत् ।।७५।

लाघवं तदवलोक्य दुष्करं वासुदेवतनयस्य संयुगे ।
सिद्धचारणमहर्षिमण्डली साधुवादमतनोन्नभःस्थिताः ।।७६।

कुम्भाण्डो गतवेदनोऽथ कलयन् कोदण्डमन्यत्कृती
चण्डो भूरि विखण्ड्य काण्डनिकरैः क्षत्रस्य मुण्डं क्षणात् ।
स्थूलाकर्णविपाटकर्णिनिकरैर्गोपुच्छभल्लैरलं
रथ्यान् [1]सारथिमाहनन्नभिययौ कंसारिसूनुं रुषा ।।७७।

प्राक्षिपच्छतमजिह्मगानथो चारुदेष्णमभिमन्त्रिपुङ्गवः ।
ताँस्त्रिधा विदलितानपातयन्[2] मध्य एव यदुवंशवर्द्धनः ।।७८।

कूपकर्णः किरन् वत्सदन्तान् बहूंश्चारुदेष्णस्य केतुं चकर्तोन्नतम् ।
सारथेस्तस्य कायाच्छिरोऽपातयत् पक्वमालूरवद् रुक्मिणीनन्दनः ।।७९।

गदामुदारामादाय कूपकर्णो ज्वलन् रुषा ।
भिद्यमानोऽपि विशिखैश्चारुदेष्णहयानहन् ।।८०।

---

१. सारथिमाहजन्नमिययौ । २. विददितान्मपातयन् ।

रथादथादाय गदाङ्गदः प्लुतः प्रतीच्छ भो देवरिपो इति ब्रुवन्।
न्यपातयच्चोरसि तस्य मारुतिर्यथा [1]दशास्यस्य गुरुं गिरेस्तटीम्॥८१।
तं प्रहारमविचिन्त्य कोपनः कूपकर्ण उरुकण्टकां गदाम्।
प्राक्षिपच्छ्रवणभेदिनिस्वनां शक्तितो यदुवरस्य वक्षसि॥८२।
वक्षोवहद्बहलशोणितशोणगात्रस्तत्र क्षणेन स विनीय महाप्रहारम्।
अभ्याजघान गदया द्विषतो [2]ललाटे रक्तं वमन् स परिघूर्णितदृष्टिरस्थात्॥८३।
महाघातघोरध्वनिप्राणवेतौ गदायुद्धमुग्रं चिरं चक्रतुस्तौ[3] ॥८४।

धनुर्धुन्वन्[4] दीर्घं दनुजसुभटांस्त्रीनपि रणे
क्षरद्रक्तासिक्तानकृत कृतवर्मा शरशतैः।
निखाय प्रत्येकं यदुषु निशितं बाणनिकरं
तनूजो बाणस्य व्यनददसुरेन्द्रान् प्रमदयन्॥८५।

प्रौढिं बाणसुतस्य सोढुमनलं सेनापतिः क्रोधनः
शक्तिं वक्षसि विस्तृतेऽस्य निजया शक्त्या द्रुतं मुक्तवान्।
भित्त्वा वर्ममहोत्कटेयमविशत् तस्योत्तरेण स्तनं
वामं काममघूर्णयच्च सुचिरं व्यामोहयच्चासुरम्॥८६।

आश्वस्तो दनुजवरोऽथर्वाणमाया-
मातेने यदुपतिवाहिनीपतीनाम्।
आयस्तः सपदि यया स न प्रपेदे
शिञ्जिन्याः क्षणमपि कर्षणेऽवकाशम्॥८७।

रथ्यान् विमथ्याशु विखण्ड्य केतुं चकर्त्त सूतस्य शिरः शरेण।
स बाणवर्षैस्तृणराशिरूपं रथं चकारातिरथः क्षणेन॥८८।

विदीर्यमाणो बाणौघैर्वल्मीक इव वृष्टिभिः।
रथं कथञ्चिदारोहच्चारुदेष्णस्य सैन्यपः॥८९।

सव्यापसव्यं किरता शरौघान् स चारुदेष्णेन रिपुर्निरुद्धः।
कलम्बपूगैः [5]परिमर्दयन्तं सेतुं तरङ्गैरिव तोयपूरः॥९०।

तुमुलं निशम्य समरं महाबलो
बलदेव एवमसुरांश्च दारुणान्।

---

१. दशास्यगुरुं। २. लुलाटे। ३. इह पद्ये चरणद्वयहानिः। ४. धन्वन्। ५. परमर्दयतं।

वरुणात्मजारुणविघूर्णितेक्षण-
स्तुरगान् नुदेति[1] निजगाद सारथिम् ।।९१।

कूजत्काञ्चनकिङ्किणीकृतरुचो ह्रेषास्फुरद्दैवता
रथ्याः सारथिसंज्ञया समचलन्नुत्पातवातस्पदाः[2] ।
भीतिं भूरिजनस्य भूरि जनयन् रेजे चलच्छैलवत्
संक्रीडत्पृथुचक्रचूर्णितशिलस्तालध्वजः स्यन्दनः ।।९२।

शुशुभे नीलवसनः शारदेन्दुप्रभः प्रभुः ।
हिमाचल इव श्रीमान् प्रावृषेण्यैर्घनैर्वृतः ।।९३।

स्थितं समरमूर्द्धनि प्रलयरुद्ररौद्राकृतिं
स्फुटभ्रुकुटिभीषणं तमवलोक्य दैत्येश्वराः ।
गदापरिघपट्टिशान् मुसलमुद्गरान् बिभ्रतो
[3]युगान्तजलदोल्बणाः प्रसभमभ्ययुः सङ्घशः ।।९४।

ताडितो हेतिततिभिर्युगपतैः स भूरिभिः ।
न चकम्पे हतो बालैरिषीकाभिरिव द्विपः ।।९५।

सहस्रशो दैत्यधनुःप्रणुन्नास्तस्मिन् निपेतुर्युगपत्पृषत्काः[4] ।
क्रोधानलं दीपयितुं धृतानां तादात्म्यमूहुः खलु ते तृणानाम् ।।९६।

अथ परिपततस्तान् सङ्घशः शस्त्रपाणीन्
प्रमथदनुजदैत्यानाशु कर्षन् [5]हलेन ।
रिपुपिशितवसाभिर्विस्रगन्धं महान्तं
मुसलमुपनिपात्योज्जासयामास रामः ।।९७।

दिशि दिशि शरजालान् न्यस्यतां[6] दानवानां
परिकलितगदानां धावतां च प्रगल्भम् ।
न किमपि बलभद्रं रोद्धुमासीत् प्रयत्नः
क इव करिणि मते विक्रमो जम्बुकानाम् ।।९८।

असुरशरनिपातैर्दीप्यमाने समन्तात्
प्रलयदहनकल्पे क्रोधवैश्वानरेऽसौ ।

---

१. तुरगालुदोति । २. वातस्यदाः । ३. युगात । ४. र्युगपत्य- । ५. हेलेन ।
६. -पस्यतां ।

रथकरितुरगौघान् प्रेक्षकान् पत्तिसङ्घान्[१]
युगपदसुरवीरांश्चूर्णयामास घोरम् ।।९९।

बलमुसलनिपातैः कण्ड्यमाने प्रतीके
विगलति [२]घृतधारं मुण्डतो गोर्दपङ्के ।
शवशिव स उदीये प्राणिनामार्तनादो
य उरुनरकभाजां पातनाज्जर्जराणाम्[३] ।।१००।

चीत्कुर्वन्तः कुञ्जराः षष्टिवर्षास्तुद्यद्दन्ता[४] भज्यमानोत्तमाङ्गाः ।
घोराघाते मौसले संप्रवृत्ते पेतुः[५] शैला वज्रपाता दिवोच्चाः ।।१०१।

पोत्रस्फोटितकुक्षिनिर्गतयकृत्प्लीहान्त्रबुक्काः परे
केचिच्चोर्ध्वपदाः प्रलम्बिशिरसः कच्चित् तथा वाङ्मुखाः ।
संवर्त्तेन महानदस्य [६]जनुषाकृष्टा रयाद् दानवा
वर्षास्विध्मचया इव प्रवितता यत्र क्वचिद् बभ्रमुः ।।१०२।

नष्टोपाये निःशरण्ये सुराणां तस्मिन् घोरे संक्षये सम्प्रवृत्ते[७] ।
आस्तां वार्ता प्रत्यवस्कन्दनस्य प्राणत्राणं भूर्यभूत् पौरुषं तु ।।१०३।

रामे कुर्वति सिंहनादमुदयत्संवर्त्तधाराधर-
ध्वानस्पर्द्धिनमुद्धरं गिरिदरीकुक्षिम्भरिं[८] भीषणम् ।
नागाः प्राच्यवनोद्भवा नवमदा येऽबालकोपाः सदा
त्रस्तास्ते कटके स्व एव दधिरे कुट्टाकतां दुर्धराः ।।१०४।

परिपतितधुरो विनष्टचक्रा विदलितकूबरबन्धनाः क्षताङ्गाः ।
अपहतरथिनः प्रमीतरथ्याःप्रमृदितसारथयो रणे विशीर्णाः ।।१०५।

करकानिपातपरिपिष्टमूर्त्तयः
शकुना इवावनितले सहस्रशः ।
परिचेयवक्त्रनयनादिदुर्विधाः
पलपिण्डमात्रमसुरा विलोकिताः ।।१०६।

असुरसुभटक्षरितरक्तधाराशत-
प्लुतसकलकायकृतघोररूपोत्कटः ।

---

१. पतिसंघान् । २. धृतघारं । ३. पातानाजर्जराणाम् । ४. वर्षास्नुघदंता । ५. येभुः ।
६. दजषा । ७. संप्रवृतो । ८. कुक्षिम्भरि । ९. शताङ्गाः।

पृथुपिशितपङ्कभवविस्रगन्धाकुलो
रणभुवि बलः पिहितवक्त्रनासोऽभ्रमत् ।।१०७।

तस्मिन् सञ्जातमृत्यौ प्रचलति परितोऽकालकल्पान्तकल्पे
[1]क्षिप्त्वा शस्त्राण्यधावन्नसुरपरिवृढाः [2]पृष्ठतोऽनीक्षमाणाः ।
पुत्राः [3]सम्भ्रान्तिभाजो रणभुवि पितरो भ्रातरो भ्रातरं च
त्यक्त्वा भृत्याः प्रभुं च प्रसृमरपुलका व्यद्रवन् भीतभीतम् ।।१०८।

गज इव नलिनीवनानि [4]मृद्नन्नसुरबलानि बलो विलोक्यमानः ।
रिपुरुधिरपृषन्निषक्तवक्त्रो [5]भयमतनोदतनुद्वयोर्ध्वजिन्योः ।।१०९।

एकः सङ्कर्षणस्तस्थौ दैत्यसैन्येऽमृते द्रुते ।
वने दवानलप्लुष्टे तुङ्गशृङ्गो गिरिर्यथा ।।११०।

अत्रान्तरे च त्रिपात् त्रिमूर्द्धा षड्भुजो नवनयनः सहस्रमेघगम्भीरनिर्ह्रादो भस्मप्रहरणः कालकल्पो निद्रालीढलोललोहिताक्षो मुहुर्मुहुर्निःश्वासजृम्भाव्यादीयमानवदनो हृष्टरोमा विघूर्णमानः सर्वप्राणिभीषणो विमुक्ताट्टहासः क्रोधबद्धभ्रुकुटिरभिक्रामन् [6]स विषपतिर्ज्वरः सीरपाणिं सापेक्षमिदमवदत्—'बलभद्र, बलमत्तोऽसि, मन्ये विजेष्यसे । न मां जानासि सर्वप्राणिनां प्राणग्रहणगृध्नुम् । तिष्ठ तिष्ठ नन्वनुतिष्ठामि दैत्यदाराणामश्रुमार्जनं त्वामुन्मथ्य । हन्त भोः केसरी परेषां साध्वसा यशस्यस्य पुरो वराक एव' एवमुक्त्वा[8] प्रलयानलज्वालैरिव मुष्टिभिर्हलायुधं निहत्य घोरं ननर्द ।

स भस्मना वक्षसि ताडितो बली करीव सीदन् रवकूटपाकलः[9] ।
मुहुर्जजृम्भे विकृताकृतिः स्खलन् भृशं निशश्वास विकासिताननः ।।१११।

बलस्य चस्खाल करादथायुधं प्रसह्य जज्वाल वपुर्विरूपितम् ।
चिरं चकम्पे जललालसः प्रभुः पतन् धृतः सारथिना बलीयसा ।।११२।

दशामिमां वीक्ष्य बलस्य दुर्बलामशीतगोरस्तमनक्रियामिव[10] ।
चमूः समस्ता विषसाद यादवी चकार हा हा दिवि देवसंहतिः ।।११३।

ततो मुकुन्दः सहसा समागमत् सदा स्ववर्गं विषमेषु रक्षिता ।
हृदा समालिङ्ग्य बलाद् बलायुधं चकार तूर्णं च विकारवर्जितम् ।।११४।

जेता जनार्दनो ज्वरमाजुहाव— 'साधु ज्वर साधु युध्यस्व[11] । एह्येहि मया सह युध्यस्व । यावती तव शक्तिस्तामद्य दर्शय' ।

---

१. क्षिप्ता । २. पृष्टतो । ३. संभ्राति । ४. मृद्ध- । ५. भमतनो दत्ततु ।
६. सवामिषपति- । ७. यशस्मस्य । ८. एवमुत्का । ९. कुटपाकला ।
१०.गोरस्तममक्रियामिव । ११. युध्यास ।

अथ दक्षिणबाहुमुष्टिभिर्व्यसृजद् भस्म हरौ ज्वरो रुषा[1] ।
ज्वलितं निपपात वक्षसि प्रदिदीपे वपुरस्य तेन च ।।११५।
परितः प्रसरन् महोल्बणः क्षणमग्निर्ज्वरजस्तमभ्यभूत् ।
जगतीपरितापहापके शरदिन्दावथ स व्यंलीयत् ।।११६।

जघान ग्रीवायां त्रिभिरथ भुजैर्भोगिविततै-
र्ज्वरः कंसारातेरदित कठिनं मुष्टिमुरसि ।
चपेटेनोग्रेण ज्वरमपि कपोले हरिरहन्
नियुद्धं तद् घोरं परिचकितदेवासुरमभूत् ।।११७।

निर्दयाघातसम्मूर्च्छन् मुष्टिनिर्ह्लाददारुणम् ।
चिरं ददृशतुः सेने माधवज्वरयोर्मृधम् ।।११८।

प्रदर्शयन् बहुविधयुद्धधोरणी-
रकूर्दत क्षणममुना विचक्षणः ।
अथ क्षितौ कलशमिवाम्बुसम्भृतं
व्यपोथयज्ज्वरमुरुवेगमीश्वरः ।।११९।

क्षिप्तमप्रतिमतेजसा क्षितौ
मेनिरे मृत इति ज्वरं जनाः ।
आविवेश स तु कृष्णमञ्जसा
तत्क्षणं बलदशास्य चाभवत् ।।१२०।

विपुलपुलको घूर्णन् निद्रानिमीलितलोचनः
सततमुदितैर्जृम्भाश्वासैरलं ग्लपिताननः ।
क्षणमनुभवन् मोहं मेने ज्वरस्य विचेष्टितं
ज्वरमथ परं चक्रे योगी जगज्ज्वरनाशनः ।।१२१।

वज्रेण वज्रनिर्भेदः कण्टकात् कण्टकोद्धृतिः ।
इति मत्वा हरिश्चक्रे ज्वरं ज्वरनिवारणम् ।।१२२।

स तु वैष्णवो ज्वरः पूर्वज्वराच्छतगुणमूर्जस्वलो बलाद् बलावरजस्य कलेवराज्ज्वरमुद्धृत्य शतकृत्वो भ्रमयित्वा शिलायां निष्पेष्टुमुदयुङ्क्त । अथान्तरिक्षादशरीरा सरस्वती प्रादुरभूत् ।

---

१. रूपा ।

कृष्ण कृष्ण शरणागतत्राणप्रवण त्रातुमर्हसि कृपणममुम् । महतां हि क्षुद्रेषु प्रणिपातावधिर्मन्तुं चिन्ता । तदाकर्ण्य करुणाकूपारः केशिसूदनो निजं ज्वरं प्रत्यषेधत् । ज्वरस्तु विनीतवेषः केशवस्य चरणसरोजयोः शिरसा शरणमगमद् विज्ञापयाञ्चकार चेदम्–

देव दीनबन्धो त्वदीयदयादृष्टिरक्षितोऽयं वरमेकं वृणोति, एक एव ज्वरो जगति दुःखाकरः किमपरेण । तदहमेवं तिष्ठेयं प्राणिनां दुष्कृतविपाकमास्वादयितुम् । अथ मधुसूदनो बभाण– 'भवानेव यथापूर्वं ज्वरो जगति [१]वर्त्ततां कृतमन्येन । मय्येव लीयतां मया सृष्टो ज्वरः । किं स च समग्रस्य तव प्रकोपं न कोऽपि सोढुमीष्टे तदात्मानं विभज्य यथायथं स्थावरजङ्गमेषु तत्तन्नामभिर्वर्त्तस्व । तन्निशम्य कृताञ्जलिर्ज्वरः पुनरुवाच–

धन्योऽस्मि कमलाकान्त, भवन्निदेशेन सर्वपथीना मम प्रवृत्तिरव्याहता काञ्चिदपरां मय्याज्ञां विधेहि तां मालामिव शिरसि सदा वहेदयं दासः । अहमुत्पादितोऽस्मि शीतांशुशेखरेण । वन्द्यपादैश्च चिरन्तनं दुरभिमानगदं चिकित्समानैरत्यनुगृहीतस्तत् किमपि भवत्प्रियं विधाय कृतकृत्यतामभिलष्यामि । ततस्तमब्रवीद् वासुदेवः ।

भुजसमरकथां य आवयोः श्रवणसुखां शृणुयादनन्यधीः ।
अपि पठति मुदा प्रणम्य मां ज्वर विजहीहि तमञ्जसा जनम् ।।१२३।

अथ ज्वरो जगाद-

प्रथमं [२]स्यादिदं नाथ मत्कृत्यमथवात्र[३] किम् ।
भवत्कथा त्रिपथगा संसारज्वरतापनुत्[४] ।।१२४।

चिन्तारत्ने चिन्तयितॄणां भवतापैः
सन्तप्तानां शैत्यवदान्ये शशिबिम्बे ।
गीर्वाणालीमौलिमणीनां किरणौघैः
किर्मीरे ते पादपयोजे प्रणतोऽस्मि ।।१२५।

प्रणम्य पादौ यदुनन्दनस्य ज्वरो जगाम प्रसभं प्रसन्नः ।
ततो यदूनां प्रससाद सेना नक्षत्रमालेव घनेन हीना ।।१२६।

जितकाशिभिर्यदुभिरग्रतः पदं
निहितं निरीक्ष्य पुनरासुरी चमूः ।
प्रससार सर्वहरिदन्तरोत्थिता
दिवसक्षये तिमिरसंहतिर्यथा ।।१२७।

---

१. वर्तताकृत २. स्यादिदेनाथ । ३. मघवात्र । ४. ज्वरतावनुत् ।

नद्योरिव व्यतिकरे सेनयोस्तुल्यशक्तिभिः ।
योधैर्युयुधिरे योधा ग्राहैर्ग्राहा इवोत्कटाः ।।१२८।

हलमुसलकरं विगाहमानं
बलमवलोक्य बलं विलोलमासीत् ।
तमसुरपतिमन्त्रिकूपकर्णौ
रुरुधतुराशुगवृष्टिभिर्वरिष्ठौ ।।१२९।

छिन्दन् क्षत्रियमस्तकानि विशिखैः केतून् निकृन्तंस्त तान्
रथ्यानाशु विमथ्य [1]सारथिशिरोमाला लुनन् लीलया ।
घोरो बाणसुतो महाग्रह इवापेदे चमूं[2] मर्दयन्
साम्बस्तं च कलम्बदुर्दिनकरः प्रत्यग्रहीत् सत्वरः ।।१३०।

प्राबल्यं द्विषतो विलोक्य बलवानुद्दीप्तकोपानलो
बाणो मुख्यमहाभटै रणनटैः क्ष्मां क्ष्मापयन् निर्ययौ ।
तं मेघं प्रतिमेघवद् दशदिशो निर्घोषयन् नार्जितै-
र्द्वन्द्वं दैत्यवराच्चिरादभिलषन् वीरोऽभ्ययात् सात्यकिः ।।१३१।

दहनद्युतिना रथेन देवो रणमूर्द्धन्यगमन्मयूरकेतुः ।
मकरध्वज उन्मनास्तमेकोऽभिमुखं स्मेरमुखो द्रुतं प्रतस्थे ।।१३२।

गलोच्छलच्छोणितसिक्तभूतलैर्न धोरणेभ्यो धरणीच्युतैर्यथा ।
विलोकनीयेत्थमुदित्वरैः शरैरकारि घोरं [3]प्रधनं धनुर्धरैः ।।१३३।

संवर्त्तेन विकृष्य तत्र शतशः सौनन्दनिष्पातनान्
[4]मृद्नन् दानवसैनिकानकरुणं बभ्राम सङ्कर्षणः ।
कुम्भाण्डो भृशमर्दयन् शरशतैस्तं कूपकर्णोऽपि च
स्वच्छन्दं रणरङ्गताण्डवनटं रुद्धोद्यमं चक्रतुः ।।१३४।

रथ्यान् रुद्धगतीन् विधाय विशिखैरुत्पाद्य यन्तुर्व्यथां
केतुं भल्लशतैर्निकृत्त्य परितो नाराचवीचीमुचौ ।
बुक्कन्तौ सरमासुताविव महामातङ्गमग्रे स्थितौ
वैयात्येन वितेनतुः क्षणमुभौ दैत्यौ विभुं व्याकुलम् ।।१३५।

---

१. सारथिशिरेः । २. चमू । ३. प्रधमं । ४. भृन्दन् ।

अथ रथमपहाय क्रोधताम्रस्तरस्वी-
कुपितशमनरौद्रो रेवतीजानिरीशः ।
अकृत विकृतजत्रुं मुष्टिना कूपकर्णं
दृढमदित गदां च व्यायते[1] मन्त्रिमूर्ध्नि ।।१३६।
ततो वमन् रुधिरमधीरलोचनो
गदाहतिस्फुरदुरुवेदनावशः ।
अनीयत द्रुतमसुरेन्द्रसन्निधिं
सुमेधसा स तुरगरश्मिधारिणा ।।१३७।

कूपकर्णस्तु मुष्टिघातमूर्च्छामपनीय प्रबलप्रतिघपरवशो गजवज्रविनिर्मितं चीनसमुद्भवं निशितमसिमादाय प्राणानादित्सुर्यथाप्राणै[2]रौहिणेयेनापातयत् । स च प्रत्याघातजनितकिङ्किणीव वमथुं[3] गदया मोघमकरोत् । तयैव [4]कालायसभारनिर्मितया भालतले तमताडयत्[5] । ततः प्रपपात[6] भग्नभालनिर्गलितमस्तिष्कपङ्कः शतह्रदाहतो गङ्गातटवट इवासुरभटः ।

विषसादासुरी सेना तस्मिन् वीरवरे हते ।
वैमानिकेषु देवेषु साधुवादो महानभूत् ।।१३८।
अस्यन्नाशीविषोग्रा विशिखशतततीर्वर्म भिन्दन् भटानां
[7]छन्दंश्छत्राणि राज्ञां तृणमिव गणयन् क्षत्रियाणामनीकम् ।
उच्चैरब्रूत रोषाद् दितिजपतिसुतो मेघगम्भीरघोषः
साम्बं मद्बाणवर्षैस्त्वमपि भवसि भोः कूपकर्णानुयायी ।।१३९।
तमब्रवीत् सस्मितपूर्वभाषिता न चित्रमेतद् दनुजेन्द्रनन्दनम् ।
तरस्विनोः सम्प्रति युध्यमानयोर्ध्रुवं भवेदेकतरस्य संक्षयः ।।१४०।
अथ नवशतीबाणान् बाणात्मजो व्यसृजद् बली
यदुपतिसुते सद्यो विद्योतयन् करलाघवम् ।
वियति विततैश्चक्रे धन्वी स तान् निजमार्गणै-
स्तृणलवलघून् क्षेप्तुर्मूर्द्धन्यधोमुखपातुकान् ।।१४१।
नालीकनिकरमकिरत् पुनः स तस्मिन् महाघोरम् ।
नालीकधन्विकीर्तिः कृष्णसुतस्तं च निचकर्त्त ।।१४२।

१. व्यापते । २. रोहिणेयेन पातयत् । ३. वममुं । ४. कालोयस- । ५. तमताठयद्य ।
६. प्रययात । ७. छन्दन् ।

नागास्त्रं विससर्ज बाणतनयो नागैः प्रफुल्लत्फणै-
राकाशं विगतावकाशमभवत् सञ्चुक्षुभुः सैनिकाः ।
सद्यः साम्बशरासनान्निरगमद् गारुत्मती संहति-
र्ग्रस्तास्ते फणिनस्त्वया बुभुजिरे मांसानि देवद्विषाम् ।।१४३।
आग्नेयं प्रलयानलोऽग्रममुचद् दैत्योऽथ [1]दिग्भित्तपो-
ज्वालौघैः परमोल्बणैर्लिलिहिरे प्रोज्जज्वलुः सैनिकाः ।
साम्बो वारुणमक्षिपत् क्षणमभूद्धारावलीभिर्धरा[2]
सिक्ता तापमपास्य यादवचमूर्दैत्यांस्ततोऽतीतडत् ।।१४४।
रोषादासुरमत्यजद् दितिसुतो घोरं महास्त्रं ततो
रोदस्योस्तिमिरावगुण्ठनमभूदस्तंगते भास्करे ।
पाशप्रासभुशुण्डिशक्तिपरिघाः खड्गाः शतघ्नीशरा
निष्पेतुर्गगनाद् गदा यदुबलं व्यालोलमासीदलम् ।।१४५।
अथ जाम्बवतीसुतः प्रयुञ्जन् सहसा [3]वैष्णवमस्त्रमुग्ररूपम् ।
जगतीतिमिरं जहार सद्यः स्वजनं चापि चकार वीततन्द्रम्[4] ।।१४६।

अवदच्च महादुन्दुभिध्वानधीरेण स्वरेण दनुजेन्द्रतनयधानुष्कतामवशिष्टामपि क्षिप्रं प्रदर्शय यद्गमी त्वमसि दीनां दशामचिरेण । अगणितानि ततो बाणजालान्यसुरसुतश्चिक्षेप । तानि साम्बः शरनिकरेण निरस्य पञ्चाशद्बाणान् बाणतनयं प्रति प्राहिणोत् । दृढोपासनः स तानाकाश एवाच्छिनत् ।

जाम्बतीसुतोऽर्द्धचन्द्रेण तस्य कार्मुकं कमलनालमिव विलूय तेनैव पुनरपरेण सारथेः शिरः कायादपातयत् । कालदंष्ट्राकरालेन कर्णिना दनुजपतिसुतस्य वक्षसि तत्क्षणं विव्याध । हृदयमर्मणि प्रविष्टेन तेनेर्ष्ययेव प्राणा बहिरक्रियन्त । ततो निपपात वियतः सुरकरच्युता [5]मुखरमधुव्रतैरनुसृता साम्बस्योपरि पारिजातकुसुमततिः ।
ध्वज इव बलसूदनस्य तस्मिन् परिपतिते समरेऽसुरप्रकाण्डे ।
करुणविलपिताकुला समग्रा शिव शिव दानववाहिनी व्यषीदत् ।।१४७।
अथ तनयवियोगव्याकुलात्माऽसुरेन्द्रः
स्रवदपि नयनाभ्यामश्रुगाढं निगृह्य ।
सफलमकृतकोऽयं दुःसहैः सायकौघैः
करितुरगनरेषु च्छिद्यमानेषु सद्यः ।।१४८।

---

१. दैत्योथ दिग्मितयो । २. धारा-। ३. वैष्णवममहानस्त्र-। ४. वीनतन्द्रम् । ५. मुखरसधुव्रतै- ।

वट इव बहुशाखो दोःसहस्रेण रुन्धन्
रणभुवमतिरोषान्निर्दशन् स्वाधरं च ।
कनकमुकुटलक्ष्मीभाञ्जि राज्ञां शिरांसि
व्यरचयत विभूषाः सायकैर्युद्धभूमेः ।।१४९।
निटिलनयनज्वालाज्वालैर्दहन् परितः प्रजाः
प्रलयपरुषश्चण्डीभर्त्तेव भूरिरुषान्वितः ।
विशिखविसरैर्विश्वं व्याघूर्णयन्नखिलं क्षणा-
दभवदसुरश्रेष्ठो दुर्दर्शनः सकलैर्भटैः ।।१५०।
कनकरुचिरैर्बाणैर्बाणासुरस्य निपातिभि-
श्छितकरशिरोवक्षोबाहूदरैर्निचिता नरैः ।
अविरलगलन्मेदोमज्जासृजां पटलैः प्लुता
क्षणमपि भटैः स्थातुं योग्याऽभवन्न रणक्षितिः ।।१५१।

पलायमानानवलोक्य सात्यकिः स्वसैनिकान् स्मेरमुखोऽभ्यभाषत ।
न बाहुजानां विहितं पलायनं रणक्षितौ तिष्ठत मास्तु वो भयम् ।।१५२।

ततः क्वणत्किङ्किणीरवरुचिरं मृगेन्द्रलाङ्गूललाञ्छनेन केतनेनोत्तालं चतुर्भिरक्षयसायकैरुपासङ्गैर्बहुभिः शरासनैः सम्पन्नमप्रमत्तेन सारथिनाधिष्ठितमापतन्तमद्भुतं रथमवलोक्य दानवेन्द्रः स्वाग्रेसरानपृच्छत्—'कस्यायमभीतस्य मामगणयत इव रथः समायाति' । ततस्तैर्निजगदे—

अयं खलु दनुजराज, कृष्णायोधस्य यदोर्धानुष्कतया प्रथितस्य सात्यकेः शताङ्ग उपयाति । आत्मानमनादृत्य कृष्णमभियान्तं समुदीक्ष्य त्रिभिर्भल्लैर्भालतले सात्यकिरविध्यत् ।

तीक्ष्णान् कङ्कपतत्रसत्वरगतीनालिप्तकार्त्तस्वरां-
स्तस्मिन् पञ्चशतानि दानवपतिः क्रुद्धोऽकिरत् सायकान् ।
तान् द्वेधा प्रविधाय तूर्णमिषुभिर्भल्लेन भाले पुनः
शैनेयो निजघान निर्भरममुं कुर्वन्निव क्रीडितम् ।।१५३।

ततः क्रुद्धो वृद्धश्रवा गोवर्द्धने वारिधारामिव बाणो बाणश्रेणीममुष्मिन् प्राहिणोत् । क्षणमनया सर्वतः सन्तमसे प्रसरति समशेरत सर्वेऽपि सात्यकेर्जीविते स तु भिन्नवर्मा मर्माविधो विशिखान् विषह्य रोषारुणलोचनो बाणस्य कार्मुकाणि त्रिभिर्बाणैस्त्रिधाऽच्छिनत् । धनुरन्तरं गृह्णतश्चास्य गोधां निकृत्त्य निपातयामास ।

तत्क्षणं नाराचनिचयेनोरश्छदं विदलय्य वक्षोऽस्य विक्षरत्क्षतजधारमकरोत्। असुरपतिस्तु क्रोधधूम्राननो यथाप्राणमाविध्य घोरकण्टकमुद्गरमस्मै प्राक्षिपत्।बाणैर्विदीर्णोऽप्यर्द्धावशिष्टः स सात्यकेर्वक्षसि न्यपतत्। तेन किञ्चिदिव मोहमयमगमदत्रान्तरे धृतधन्वा दानवेन्द्रो नालीकमालाममुञ्चत्। मौर्वीरवेण लब्धचेतनो युयुधानः पुनर्धनुरर्द्धचन्द्रेणाकृन्तत।

आददानमथ कार्मुकान्तरं सात्यकिः सपदि रोषभीषणः।
ह्रादिनीव्रणकिणैरलङ्कृते [1]तं जघान परिघेण वक्षसि॥१५४।
निःश्वसन् परिघघातघूर्णिता धैर्यवानसुरनायको बली।
तस्य शक्तिमरिशक्तिनाशिनीं लाघवेन निचखान मूर्द्धनि॥१५५।
मुमूर्च्छ क्षणं सात्यकिर्घोररूपामथोद्धृत्य [2]शक्तिं तमेवाजघान।
उरस्यस्य कुण्ठीभवद्बाणजाले निमग्ना च सा मूमुहद् दानवेन्द्रम्॥१५६।

कोटीरं झटिति शिलीमुखैः सुतीक्ष्णैः
शैनेयो मणिमयमासुरं चकर्त।
तेन द्राक् परिपतता भुवि भ्रमोऽभूत्
सर्वेषामहिमकरस्य पातुकस्य॥१५७।

एवंप्रायमनिर्धारितबलाबलमपरिज्ञायमानधनुःशिक्षापरभागमिषुव्रणविस्रवल्लोहितार्द्रसकलकलेवरमनुक्षणोदितमहासिंहनादमदवीयोविमानवर्त्तिसुरमुनिश्लाघ्यमानमुभयोः समराङ्गण[3] उभयोर्युद्धमभवत्।

प्रमथैरथ दिव्यमूर्त्तिभिः परितः पट्टिशशूलपाणिभिः।
सहितः शिखिवाहनः प्रभुर्युयुधे शाबरवैरिणा समम्॥१५८।
ख्यातयोर्जगति धन्विनोर्मृधं प्रेक्षकाः परमवादधुर्दिवि।
निश्चलाङ्गुलिधृताक्षमालिका नारदादिमुनयो महोत्सुकाः॥१५९।

रुद्राक्षग्रथितजटान् विभूतिभूषा-
नर्द्धेन्दुस्फुरदलिकान् कृपाणपाणीन्।
अत्युग्रान् प्रमथगणान् रणे प्रकीर्णान्
प्रद्युम्नः शरनिकरेण सञ्जहार॥१६०।

ते छिद्यमानावयवाः शितैः शरैः पलाय्य जग्मुः शरजन्मनोऽन्तिके।
ववर्ष रोषारुणलोचनः स च क्ष्णुताननं तान् विशिखान् स्मरोपरि॥१६१।

---

१. रलंकृतेनंत। २. शक्ति। ३. समरणैं उपोर्युद्ध। अत्र 'उभयोः' इति पदस्य द्विरावृत्तिः।

विहस्य स प्रकटितशिञ्जिनीस्वनः समच्छिदच्छरनिकरं शिलीमुखैः ।
[१]अजिह्मगैःशलभसमूहपातिभिस्तिरोदधद्रथमथ[२] तारकद्विषः ।।१६२।

निषङ्गादुद्धारं झटिति च गुणेन व्यतिकरं
विमोक्षं बाणानां नहि कुसुमबाणस्य विविदुः ।
अयं मायामात्रात् सृजति विशिखौघानिति परं
प्रतीयुः कुर्वाणे सपदि ककुभोऽस्मिन् शरमयीः ।।१६३।

रविरिव किरणौघैः सान्द्रनीहारजालं
शरनिकरमयोग्रैः स्वैः[३] शरैः प्रादुरासीत् ।
अकिरदपि कुमारः स्वर्णपुङ्खान् पृषत्का-
नुपरि विशिखधारां वर्षतो मीनकेतोः ।।१६४।

[४]रविकिरणखण्डमण्डलमहामण्डलानि रचयतोर्वैष्णवसमपादवैशाखमण्डल-प्रत्यालीढानालीढस्थानान्यातिष्ठतोर्गोमूत्रगतप्रत्यागततिरश्चीनमपसर्पतोः कृतप्रतिकृत-समर्थयोरलातचक्रमिव कार्मुकं बिभ्रतोः शिक्षामुपासनं च प्रकटयतोर्नटयोरिव तयोः कौतुकं विलोक्य लोकश्चित्रीयामास ।

उदरम्भरिभिस्तयोः शरौघैरतिपूर्णं व्यदलिष्यदेव सद्यः ।
गगनं यदि नाभविष्यदद्धा वपुरीशस्य विकारवर्जितस्य ।।१६५।
अथावसरमेत्य लाघवपरः क्षुरप्रमकिरच्छितं यदुवरः ।
निकृत्त्य च शरासनं द्रुतगतिर्न्यपातयदलक्षितं गुहकरात् ।।१६६।
रथनीडधृतं धनुर्द्वितीयं स उपादत्त[५] विभुः करेण यावत् ।
अकिरद् यदनः स तावत् परितः पञ्चसहस्रमाशुगानाम् ।।१६७।
तद्विक्षताखिलवपुः क्षरदस्रधार-
श्चिक्षेप तारकरिपुर्ज्वलितं त्रिशूलम् ।
ज्वालाकुलं त्रिशिखमग्निमिवोपपातं
त्रेधा व्यधाद् यदुवरो दिवि काकतुण्डैः ।।१६८।
चापं प्राप्य तदन्तरेऽग्नितनयः क्रोधोद्धतभ्रूयुगो
मौर्वीमस्य महाशरेण [६]हरिणस्नायूद्भवामच्छिनत् ।
ज्यामन्यां दधतः क्षुरप्रविशिखैश्छित्त्वा धनुस्तत्क्षणं
वक्षस्यक्षतकङ्कटे प्रविदधे सूचीमुखेन क्षतम् ।।१६९।

---

१. अजिप्लगैः । २. तिरोदधाद्रथमथ । ३. मयोप्लखैः । ४. चरिकरण । ५. उपादत । ६. हरिणस्तापूद्भा- ।

व्रणं वक्षस्युग्रं [१]स्नुतरुधिरमण्वप्यगणयन्
ज्वलत्क्रोधाध्मातो भ्रुकुटिकटुदृष्टिर्यदुवरः ।
शतघ्नीदुष्प्रेक्षां[२] विकटकुटिलैः कण्टकशतैः
प्रगाढं सेनान्यः शिरसि विनिपात्यालमनदत् ।।१७०।

तेन प्रहारेण विचूर्णितश्चिरं मुमोह देवः क्षरदस्त्रनिर्झरः ।
आश्वस्य कालेन करालोचनो मुमोच शक्तिं जगदेकजित्वरीम् ।।१७१।

सा विद्युदिव दुष्प्रेक्षा विश्रुता क्रौञ्चदारणी ।
प्रद्युम्नमभ्ययाद् घोरा दीपयन्ती[३] नभस्तलम् ।।१७२।

स भूरिभिर्बाणपरम्पराभिर्न्यवारयत् तां गगने धनुष्मान् ।
सा मन्दवेगापि पपात तूर्णं तस्योरसि श्यामशिला विशाले ।।१७३।

अवाहयत् सा रुधिरस्य धाराममोहयत् काममथ प्रकामम् ।
अखेदयद् यादववाहिनीं ताममोदयच्च [४]प्रमथाः सुरेन्द्रान् ।।१७४।

अथासौ मुहूर्तोत्तरमधिगतेचतनो विषीदन्तं स्वजनमवलोक्य तीव्रकोपाटोपस्फुरदोष्ठः कठोरकोदण्डध्वनित्रासितासुरसैन्यः सहस्रसङ्ख्यैरनवरतपातिभिर्जिह्मगसमैरजिह्मगैर्निकृत्त्य कार्त्तिकेयस्य कवचं नाराचनिचयेन प्रतिप्रतीकमेनमव्रणयत् सारथेश्च द्विभल्लेन मूर्द्धन्याजघानोन्नतं [५]केतुमप्यारामुखेनावृश्चद् वाजिनो बाणैश्छिन्नकर्णान् विधाय बाहुलेयं बहु व्याकुलीचकार । अत्रान्तरे मूषकमधिष्ठितः पिचिण्डिलः परशुपाणिः प्रमथैरनुगम्यमानो विनायकः समरभुवमाससाद । चलन्तं शैलमिव तमवलोक्य त्रस्नवो योद्धारः परितः पलायन्त–

परश्वधेन प्रविदीर्णदेहास्तेन द्विधा योधवरा निपेतुः ।
तं सम्मुखं [६]वीक्षितुमप्यशक्यत् [७]पलायनेषु न च तेषु कोपि ।।१७५।

ततो गदामादाय बलभद्रस्तमभ्यद्रवदभूच्च सर्वयोधविस्मयकरं चिरमनयोर्गदायुद्धम् ।

महाबलाभ्यां विनिपातिते गदे विनेदतुर्भूर्यशनी[८] इवाहते ।
वितन्वतोर्मण्डलमद्भुतं तयोर्जनस्य जज्ञे महदेव कौतुकम् ।।१७६।

उदारमुदरं तस्य ममन्थ बलवद्बलः ।
गदया रोषताम्राक्षो मूषकस्यापि मस्तकम् ।।१७७।

१. स्नुत- । २. दुःप्रेक्षा । ३. दीपयती । ४. प्रमथा । ५. कतुं । ६. वोक्षित- ।
७. पलायनेषुन् तेषुकोऽपि । ८. भूर्यसनी ।

पलायेतां स्थवीयांसावाघातशिथिलावुभौ ।
मेदस्विनामपक्रम्य [१]प्राणपणं हि पौरुषम् ।।१७८।
असुरशववृतां विलोक्य भूमिं प्रमथवरान् व्रणितान् रणादपेतान् ।
अरुणितनयनत्रयस्त्रिनेत्रः स्वयमधिसङ्गरं सागरं स्थिरोऽभूत् ।।१७९।

प्रालेयशैलशिखरमिव नन्दीश्वरसमायुक्त[२]रथमास्थितमजगवज्याघोषमोहिता-रिमुद्ग्रीविकामाचरद्भिर्महोरगैरालोकं सिंहव्याघ्रकरितुरगखरच्छाग[३]मार्जारिमेषशिखिवक्त्रैर्दीर्घ[४]द्रंष्ट्रैर्वमितैर्विकटैर्मुण्डैः शिखिभिर्जटालैरूर्ध्वशिरोरुहैश्चीरिरिभिश्चर्मवसनैर्विविध[६]कुसुमापीडैर्गायद्भिर्नृत्यद्भिर्हसद्भिः प्रमथैः परिवृतमीशानमवलोक्य सर्वेऽपि सैनिकास्त्रेसुः[७] । अग्रेसराश्चास्य प्रमथगुह्यकडाकिनीयातुधानवेतालविनायकप्रेतमातृपिशाचकूष्माण्डब्रह्मराक्षसाः सृक्कस्रवदस्रधारं नरानचर्वयन् ।

पुलकितवपुषो निमीलिताक्षा-
नपसरतो निजसैनिकान् विलोक्य ।
स्मितमुखकमलो हरिर्जगाद
द्रुतमिह दारुक नीयतां रथो मे ।।१८०।

प्राणघ्नन्त समन्ततो मुररिपोराधूतदिग्भित्तयो
भेर्यो भैरवनिःस्वना जलनिधीनान्दोलयन्तोऽखिलान् ।
वीणाडामरनिःस्वनैरनुसृतं सङ्क्षोभयत् कातरान्
वीराणां रणरागमुन्नमयितुं[८] गेयं जगे गायनैः ।।१८१।

समरशिरसि शुश्रुवे [९]समन्ताड्डमरुरवो भृशममरो[१०] हरस्य ।
वृषभकृतपदा च वैजयन्ती तरलतराञ्चलपल्लवा व्यलोकि ।।१८२।

कौमोदकीनन्दकपाञ्चजन्यैः [११]सुदर्शनिनोरगवैरिणा च ।
सकञ्चुकोऽयं दृढबद्धगोधो बभूव रौद्रश्च मनोरमश्च ।।१८३।

विस्फारेण दिगन्तदन्तिषु परं कर्णज्वरं कुर्वतः
क्रुद्धस्याथ कपर्दिनो विकिरतः सव्यापसव्यं शरान् ।
वक्त्रं वीक्ष्य विलोचनत्रयरुचा रक्तेन्दुकंसद्विषः
स्मेरस्योत्पुलकस्य तत्क्षणमभूदानन्दसान्द्रा दशा ।।१८४।

मुरारिणा सम्प्रति पूर्यमाणो महास्वनोऽशोभत पाञ्चजन्यः ।
निर्यन्नवाम्भोधरखण्डगर्भाच्छशीव[१२] राकापरिपूर्णबिम्बः ।।१८५।

---

१. प्राणप्राणं । २. संमायुक्तं । ३. माजरि- । ४. दींध वमिनै- । ५. जटालैसूर्द्ध- ६. कुसुमापीर्गायद्धि । ७. सैनिकास्त्रैलासुः । ८. मुन्नपि तुंगें । ९. समंताड्डुमंरु- । १०. भृशगयरो । ११. सुदर्शने मोरगन । १२. शशी वराकापरिपूर्ण विंवः ।

हरिपार्श्वगेन विनतात्मजन्मना
नखरैः क्षताः प्रमथडाकिनीगणाः ।
परिचर्विताः प्रखरतुण्डखण्डिता
विमुखाः क्षरद्रुधिरबिन्दवो ययुः ।।१८६।

उत्पाता विविधा बभूवुरसकृद् भूमिश्चकम्पे चिरं
पार्ष्णौ बाणबलस्य दीपितहरित् सध्वानमुल्काऽपतत् ।
ब्रह्माद्याः सुरसत्तमा मुनिगणा गन्धर्वविद्याधराः
सर्वाश्चाप्सरसो विमाननिकरैराकाशमावव्रिरे ।।१८७।

नाराचान् मुमुचे शतं हरिमभिक्रुद्धः पिनाकी परं
[1]तानादाय वृषाकपिः स्ववपुषा [2]सम्मानयन्नीश्वरम् ।
शार्ङ्गज्यारवघूर्णमानसकलब्रह्माण्डविद्योतकं
पार्जन्यास्त्रमथाऽमुचन्मुररिपुः स्मेरः स्मरारिं प्रति ।।१८८।

पपात कोटिर्नतपर्वणां ततः शिलीमुखानामधिचन्द्रशेखरम् ।
चचाल किञ्चिन्नवविक्षतस्तया[3]स विश्रुतो धैर्यवतामपश्चिमः ।।१८९।

आग्नेयं पशुपतिरक्षिपत् ततोऽस्त्रं
गोविन्दं प्रति महसां महानिधानम् ।
ज्वालावद्विशिखसहस्रजालरुद्धं
पश्यन्तस्तमसुरसैनिका[4] ननन्दुः ।।१९०।

मुमोच वारुणं तदा[5] मुदास्त्रमद्भुतं हरिः ।
शशाम तेन पावकः शरा विशीर्णतां ययुः ।।१९१।

ततोऽतिकुपितः कृशानुरेताः पैशाचराक्षसरौद्राङ्गिरसानि महास्त्राणि मुमोच । तानि वायव्यसावित्रवासवमोहनास्त्रैश्चक्रपाणिरशमयत ।

सुमेरुधन्वा ससृजे शराणां ततीरसंख्या धनुषः क्षणेन ।
ता दृष्टनष्टा विदधेऽञ्जसैव श्रोत्रस्फुरच्छार्ङ्गगुणो महात्मा ।।१९२।

ततः पाशुपतं क्रोधादन्धकारातिरक्षिपत् ।
जज्वाल यदुसेनां तद् ग्रसमानमिवाखिलाम् ।।१९३।

---

१. तानादजवृषाकपिः । २. सम्मानयत्रीश्वरम् । ३. तपसविश्रुतो । ४. तमसुरसैः निकानन्दुः । ५. तादामुदस्त्र– ।

विवृतवदनकालकल्पमस्त्रं तदनु वैष्णवमक्षिपत्[१] तरस्वी ।
प्रमथदनुजयक्षयातुसैन्यं दिशि दिशि विद्रुतमैशमस्त्रमस्तम्[२] ।।१९४।
लोके सन्तमसग्रस्ते शरदुर्दिनसंवृत्तः ।
न नन्दी न रथो नेशो दृश्यतामगमत् तदा ।।१९५।
त्रिपुरान्तकरं शरं पिनाकी
[३]समधत्त ज्वलितं ततोऽधिमौर्वि ।
अभिसन्धिविदा तदा प्रयुक्तं
हरिणा जृम्भणमस्त्रमाशु तस्मिन् ।।१९६।
मुहुर्जजृम्भे स शरं शरासनं वहन् हरो मोहमहोर्मिसङ्कुलः ।
चिरेण चात्मानमवेत्य मोहितं स सिंहनादं विदधे महोद्धतम् ।।१९७।
मायायुद्धं विदधिरे हरपारिषदास्तदा ।
प्रद्युम्नास्त्रेण जाताश्च निद्रामुद्रितलोचनाः ।।१९८।
प्रधूमाः सज्वालास्त्रिपुरहरवक्त्रान्निरगमन्
[४]महोच्छ्वासाजृम्भाजनितविवृतेर्घोरनिनदाः ।
युगान्ताग्नेरर्चिस्ततिभिरिव तैः सर्वजगती
प्रदीप्ता दिग्दाहाः समजनिषत त्रासजननाः ।।१९९।

अथ महाविमर्दमनयोरसहमाना वसुन्धरा धातारं शरणमुपगम्य वेपमानेदमवदत्—'भगवन्, कृष्णहरयोर्भरेण भङ्गुरां पातालमुपयान्तीं गां किमुपेक्षसे । झटिति[५] विचिन्तय भारावतरणं येन लघ्वी चराचरं पेयम्[६]' ततस्तामुवाच कमलासनः—'सर्वं सहे मुहूर्त्तमात्मानं धारयस्व ततो लघ्वी भवसि'।

ततः शशाङ्कशेखरमुपेत्य पितामहो व्याजहार—'देव, किमिह देवद्रुहां वधे विघ्नमाचरसि । ननु तवापि [७]वसुन्धराया लघूकरणमभिमतमेव । कृष्णेन सह भवतो युद्धं च न मे रोचते । न खलु जानासि कृष्णमात्मानमेकस्य हि तव लीलामात्रमेतच्छरीरभेदोऽदूरदर्शिनां मोहमावहति ।

तमुवाच ततो रुद्रो न योत्स्ये भगवनन्नहम् ।
कृष्णसंहृतदैत्यौघा लघ्वी भवतु मेदिनी ।।२००।
इतरेतरमालिलिङ्गतुः स्मितवक्त्रावथ कृष्णशङ्करौ ।
समरादुपरम्य निर्वृतौ[८] द्रुतशुद्धं हि महीयसां मनः ।।२०१।

१. मक्षिप । २. छन्दोभङ्गः । ३. समधत । ४. महौच्छासा–। ५. द्रटिति ६. येयं । पेयमिति रक्षणार्थकपाधातोराशिषि रूपम् । ७. वसुन्धरापालघूकरण–। ८. निर्वृत्तौ ।

ततः कृष्णशिवयोः प्रसादमभिनन्दितुमागतेषु मुनिषु, सनारदं मार्कण्डेयमामन्त्र्य पितामहः प्रोवाच—'अहं किल स्वप्नान्तरे मन्दरगिरिपार्श्ववर्त्तिन्यां नलिन्यां भवकेशवौ ददर्श। तत्र शङ्खचक्रगदापद्मपाणिं पीताम्बरं गरुडध्वजं हरं त्रिशूलपट्टिशडमरुमृगधरं चन्द्रशेखरं व्याघ्रचर्माम्बरं वृषध्वजं हरिं विलोकयतो मे महान् विस्मयो बभूव। तत् किमेतदथ मार्कण्डेयो बमाण—'को वेद भवतां तत्त्वं किन्त्वार्षेण चक्षुषैतच्छतकृत्वः सुमेधोभिरवधारितं त्रयाणां वो लवमपि न वास्तवो भेदः। सृष्टिस्थितिप्रलयाधिकारोपाधिना तु ब्रह्मा विष्णुर्महेश्वर इति व्यपदेशः।

तेजसोर्व्यतिकरे जलयोर्वा लक्ष्यते किल कियानपि भेदः।
तद्वदेव हरिशङ्करयोर्नो भेदमाचरति वेदविपश्चित् ॥२०२॥

नमामि गरुडध्वजं वृषभकेतनं भावये
कलाकरशिरोमणिं कलितकौस्तुभं च स्तुवे।
जटामुकुटमाश्रये ललितबर्हभूषाभृतं
शिरःस्थितसुरापगङ्गं चरणलग्नगं भजे ॥२०३॥

निगमनिरूपितैर्गुणगणैरतुलैः प्रथितौ
सकलजगज्जनिस्थितिनिरोधकुतूहलिनौ।
त्रिगुणविवर्जितस्य महसो गुणवत्त्वदशा
हरमुरवैरिणावनुगृहीतिवशात् स्मरताम् ॥२०४॥

कलत्रसुतसोदरैः परमनुद्भुतपितृकै-
र्जगद्दहनसङ्कटेष्वहह कान्दिशीका जनाः।
अहो सुलभमद्भुतं शरणमस्ति तेषां द्वयं
पदं [2]जलधिजापतेश्चरणमिन्दुचूडस्य च ॥२०५॥

विषयविषाटवीमटसि किं विकटां हृदय
त्यज सुतसुन्दरीद्रविणदेहवृथाभिरतिम्।
अधिकरुणामृतोदधिहरे मुरवैरिणि वा
भवदवपावकज्वलित रे निपत प्रसभम् ॥२०६॥

मनो मम सितासिते महसि मज्ज रे सज्जनैः
सहासमुपसेविते किमितरैस्तु तीर्थव्रजैः।
मणी धवलमेचकौ हृदि न धारयेयं यदा
तदा भवविजित्वरी भवतु मे कथं नु प्रभा ॥२०७॥

---

१. परमनुब्रुतापेतृकै। २. जलधिजायते।

दिवि शतमासतां दिविषदो वरदा भजतां
भजतु च तान् जनो विविधसिद्धिषु [१]गृध्नुमनाः ।
अविरलवासनाप्रबलपाशबिभित्सुरसौ
शशधरशेखरं शरणमेति रमारमणम् ।।२०८।
समग्रसुरमण्डलीमुकुटरत्ननीराजिते
नवाम्बुजदलोदरद्युतिसपत्नशोभाभरे[२] ।
भजे हरिगिरीशयोः श्रुतिशिरःस्तुते ध्यायता-
मनल्पभवयातनातिमिरपुष्पवन्तौ पदे ।।२०९।
जहिहि [४]महाप्रलयमनुवेलमनर्थकरं
सुतवनिताकुटुम्बधनधामसुहृद्विषयम् ।
मम [५]रसने गृणीहि गरुडध्वज कंसरिपो
प्रमथपते पिनाकधर शङ्कर शर्व हरे ।।२१०।
भवोऽपि [६]भवविभ्रमं शमयति स्मृतो देहिनां
विषादमपवर्जयत्यतितरां विषादोऽपि सन् ।
युतोऽप्यतनुमायया हरति हन्त मायातमो
न विश्वमवशेषयत्यवगतश्च विश्वम्भरः ।।२११।
पुरकुसुमायुधान्धकहराय नमो महसे
मधुमुरकंसकेशिनरकान्तकराय नमः ।
हिमगिरिकन्यकाललितनेमशरीररुचे
जलधिसुतासनाथहृदयाय नमो हरये ।।२१२।
व्यतीतविषयस्पृहो गलितरागरोषान्वयः
क्वचिद् गिरिशिरःशिलाफलकबद्धपद्मासनः ।
कदा नु परिभावयन् नवतमालनीलं महोऽ-
थवा स्फटिकनिर्मलं कलयितास्मि रोमोद्गमम्[७] ।।२१३।
अभिनवनीरदौघरुचये हिमकुन्दरुचे
[८]कनकपिशङ्गकान्तिवसनाय दिशो दधते ।
कमलविलोचनाय रविचन्द्रहुताशदृशे
स्पृहयति मन्मनो मधुभिदे [९]मदं द्विषते ।।२१४।

---

१. गृध्रुमनाः । २. द्युतिसपलशोभाभरे । ३. पातना- । ४. महाप्रलाप- । ५. रस मे ।
६. भवि । ७. रोमोद्रुमम् । ८. कपिशग- । ९. मनं ।

कपालकलितस्रजे ललितवैजयन्तीभृते
श्मशानमधितिष्ठते जलधिमध्यनिद्रालवे।
विलेपितविभूतये घुसृणपङ्कचर्चाकृते
शिवाप्रियतमाय ते जलधिजाधवायों नमः ।।२१५।

इति स्तुतौ मुनिगणैर्मार्कण्डेयादिभिस्तु तौ।
अक्षोभौ प्रलयापाये सागराविव शेमतुः ।।२१६।

अथ कुम्भाण्डवाहितेन रथेन तारकारिरभिपतन् शरशतैर्बलाकेव[1] प्रद्युम्नं युगपदविध्यत्।

मधुविकसितकिंशुकत्रयस्य क्षरदसृजोऽवकलन्नमी अभिख्याम्।
बिभिदुरनिलपावकाम्बुदास्त्रैः सपदि च पावकनन्दनं प्रदीप्ताः ।।२१७।

शैलवारुणसावित्रैस्तानि प्रशमय्य बाणश्रेणीं शरजन्मा ववर्ष। तामप्यस्त्रमायाभिर्ग्रसमानानमूनवलोक्य सहस्रांशुसहस्रभास्वरं ब्रह्मशिरोनामास्त्रं प्रयुयोज। तस्मिन् प्रयुक्ते हा हा [2]कुर्वन्तः समन्ततः सैनिकाः प्राधावन्। केशवस्तूत्पातपतन्मार्तण्डमण्डलव्यूहमवलोक्य[3] सर्वास्त्रघस्मरं सुदर्शनमगृह्णादशाम्यच्चास्य ज्योतिर्जटाभिस्ताडितं तदस्त्रम्।

चिक्षेप शक्तिं [4]सेनानीर्घण्टामालाकुलां ततः।
कल्पान्तविद्युदिव सा ज्वलन्ती कृष्णमभ्ययात्।।२१८।

हृदयं प्रविविक्षुरागता[5] हरिणा हुङ्कृतिभिश्च भर्त्सिता।
अबलेव जितेन्द्रियेण सा भुवि शक्तिर्निपपात निष्प्रभा।।२१९।

साधु साध्विति नभस्युदभूवन्नाकुलाः सुरतपोधनवाचः।
सिंहनादमतुलं च वितेने वासवो विकसिताखिलनेत्रः ।।२२०।

अथ पुनः क्षुरधारं चक्रमादाय भ्रमयति क्रोधाविष्टे विष्टरश्रवसि कुमारं रिरक्षिषुर्लम्बा नाम कोटवी देवी तमभ्यतिष्ठत्। ततस्तां दिग्वाससमन्तराऽवलोक्य पराङ्मुखो मुरारिर्धिग्धिगपयाहि। किमेवं विघ्नमाचरसीति मुहुरधिचिक्षेप। पुनरनपयान्तीमपनय षाणमातुरं यदि जीवन्तमिच्छसीत्युक्त्वा चक्रं सञ्जहार।

सन्ध्ययेव सरसीरुहबन्धौ तारकद्विषि तया गमितेऽभूत्।
शर्वरीसुरविरोधिसमाजे यादवेन्दुरथ भूरि रराजे।।२२१।

अत्रान्तरे च

सुतसोदरबन्धुसेवकान् सुहृदः प्राणसमान् रणक्षितौ।
शयितानवलोकयन् बली बलिसूनुः स्वयमागमद् रुषा।।२२२।

---

१. बलकेव। २. कुर्वतः। ३. व्यूहमिवलोक्य। ४. सेनानी। ५. रागती।

अभ्याहन्यन्त भेर्यः कति न कुलगिरीन् कम्पयन्त्यो निनादै-
दैत्यानां सिंहनादैर्मनुजभटभृतान्यस्त्रसन्नायुधानि ।
निर्याते दानवेन्द्रे समरमभिमुखं वाहिनी भारभूम्ना
भ्रश्यन्तीं क्षोणिमूहे बलविधृतफणामण्डलः कुण्डलीशः ।।२२३।

निष्कौघरत्नानि धरामरेभ्यो वितीर्य वस्त्राणि पयस्विनीश्च ।
तैरोषधीभिर्विविधैश्च मन्त्रैः प्रयुक्तरक्षोरणमाससाद ।।२२४।

ख्यातान् शूरसभेषु[1] भूरियशसः प्रत्येकमायोधने
निर्जेतुं समशेत यान् मखभुजां मुख्यैर्वृतो वासवः ।
ते देवासुरसङ्गरव्रणकिणोन्मीलन्मुखोरःश्रियो[2]
दैत्येन्द्रस्य पुरः स्फुरत्प्रहरणा जग्मुर्निलिम्पद्विषः ।।२२५।

अभिक्रमे दनुजपतेर्वरूथिनी
सुरद्विषामभिनवतामिवेयुषी ।
गदामसिं मुसलमकुण्ठपट्टिशं
प्रयुञ्जतोऽकदनमदभ्रमाचरत् ।।२२६।

इतः पुनर्यदुऋषभैरुदीरिता
शरावली सुररिपुरक्तरोहिणी ।
धरातले किमपि निखातपल्लवा
विलोकिता नवदलकन्दलीद्युतिः ।।२२७।

खड्गै खड्गप्रतीघाते वीराणां छिन्नचर्मणाम् ।
स्फुलिङ्गमाला निष्पेतुर्ज्वालाः कोपशुचेरिव ।।२२८।

क्रोधेद्धस्य भुजाः प्रकाममकिरन् बाणस्य बाणांस्तथा
सैन्ये वृष्णिपतेर्यथाश्वसितुमसीन्न[3] कालः क्वचित् ।
रक्तोद्रिक्तरयभ्रमन्नरकरिप्राग्भारघोराः क्षणा-
च्छिन्नच्छत्रविभिन्नचामरवहा नद्योऽपि सद्योऽवहन् ।।२२९।

उन्मीलन्मौलिरत्नद्युतिरतनुतनुश्चण्डदोर्दण्डनिष्ठैः[3]
कोदण्डैः काण्डजालैरसिपरशुमहापट्टिशैर्डामरश्रीः ।
वक्षो वज्रव्रणाङ्कं सुरकरटिरदाघातघोरार्बुदाघं
बिभ्रत्साम्राज्यलक्ष्मीमसुरपरिवृढः कृष्णमभ्याजगाम[4] ।।२३०।

---

१. सेभेषु । २. मुखोरश्रियो । ३. प्यासीन्न निष्टैः । ४. कृष्णमभ्योजगाम ।

अब्रवीच्च स्फूर्जथुघोरेण स्वरेण–'कृष्ण कृष्ण दिष्ट्या [१]कालप्रेरितः पुरस्तान्मे भवसि न भवस्यद्य पश्यतां स्वसुहृदां त्वया पुनर्दुर्दर्शैव–द्वारकाचिरज्वलिते क्रोधकृशानौ त्वां जुह्वता बाणेन सुहृदामानृण्यमिदमनुष्ठीयते ।

हेलाकृष्टसपत्नकीर्तिवनितावेणीस्रगुद्ग्रन्थय-
स्त्वय्येते तरवारितिग्ममहसो दम्भोलिभीमा भुजाः ।
अत्युग्रं युगपन्निपत्य पिशितप्लीहान्त्रमेदोमयैः
पिण्डैश्चण्डबुभुक्षया निपततः प्रीणन्ति रात्रिञ्चरान् ।।२३१।

योगपट्टमवलम्ब्य सुस्थितो व्योम्नि फुल्लनयनो दिदृक्षया ।
तन्निशम्य दनुजेन्द्रगर्जितं नारदोऽतिविजहास सस्वनम् ।।२३२।

तदनु स्मितमनोरममधुरिपुरभ्यधत्त–'अवदसि बाण' शूरैर्हि न स्वप्रभावः स्वयमुपवर्ण्यते । चतुर्दशभुवनविदितबलस्य ते वृथैव रसनाया नाशिनीयं[२] वचनपल्लवना ।

न स्वदन्ते महान्तोऽपि गुणाः स्वयमुदीरिताः ।
काव्येषु वाच्यतां नीता व्यङ्ग्यार्था इव हारिणः ।।२३३।

सम्परायेषु लभ्येत वाङ्मात्रेण जयो यदि ।
सर्वस्य सहजे वक्त्रे कः पराजीयतां तदा ।।२३४।

अयमहमवस्थितोऽस्मि । चरितार्थय [३]चिरन्तनीमिह स्वक्रुधम् । तदनु भूयांसो भविष्यन्ति भवत्कीर्त्तिगातारः ।

विस्फार्य शार्ङ्गमथ तप्तसुवर्णपुङ्खान्
बाणासुरं प्रति हरिः प्रजिघाय बाणान् ।
निर्मुक्तनागरुचयो गगने ज्वलन्त-
स्ते तस्य गात्रमतिमात्रशिताः प्रविष्टाः ।।२३५।

बाणोऽपि स्मयमानो बाणजालं विकीर्य भुजसहस्रमुक्तैः शक्तिगदातोमरमुसलपरिघपट्टिशैः[४] केशवमाच्छादयामास ।

चकर्त्त लीलया कृष्णः शरैस्ताः शस्त्रसंहतीः ।
चिच्छेद गात्रं नालीकैर्दैत्यराजस्य च क्षणात् ।।२३६।

चिक्षेप चक्राणि सहस्रमुद्यदुत्पातमार्त्तण्डचयप्रमाणि ।
ननाद चोच्चैर्दितिजो[५]मुकुन्दः सुदर्शनेनास्तममून्यनैषीत् ।।२३७।

---

१. कालमेरितः । २. नासिनीयं । ३. चिरंनीमिह । ४. मुसलपरिषंपट्टिशैः ।
५. सुधीभिर्विचारणीयोऽयं पाठः ।

ग्रसमान इवाखिलां त्रिलोकीं शरसिन्धुर्ववृधेऽसुरस्य भूपः ।
क्षतदारुकदेहवाहकेतुं [1]तमगस्त्यप्रतिमो हरिर्लुलोप ।।२३८।

कृतप्रतिकृतक्रुद्धौ बद्धभ्रुकुटिभीषणौ ।
रक्तरक्ततनू वीरौ पिङ्गलं चक्रतुर्मृधम् ।।२३९।

बाणस्य विविधा माया महामायो न्यबर्हयत् ।
कालानलस्य पुरतः खद्योतस्फुरितं कियत् ।।२४०।

लाघवमस्य विलोक्य विचित्रं दैत्यपतिः प्रतिवारुणनेत्रः ।
ब्रह्मविनिर्मितमुद्भटतेजस्तामसमस्त्रममोघममुञ्चत् ।।२४१।

आहिरण्यकशिपोः[2] कुलमुख्यैरस्य धारितममोघबलं यत् ।
सङ्कटेषु शरणेन समन्तात् तेन सन्तमसमूढमकारि ।।२४२।

निष्पेतुर्ज्वलिताः सहस्रमिषवो दिग्भ्यो नभोमण्डलात्
कृष्णो यादवसेनया सह महाज्वालाशतैर्वेष्टितः ।
हाहाकारपरैर्विषण्णवदनैर्देवैर्बभूवे दिवि
प्रोद्दामैर्युधि साधु साध्विति वचः सर्वासुरैर्व्याहृतम् ।।२४३।

पार्जन्यं प्रयुयोज सात्वतपतिर्नष्टं समग्रं तमः
शान्ता वह्निशिखावली बलिसुतप्रौढप्रतापैः समम् ।
देवामोदमदभ्रमाशुगमिता बाणश्च कोपाधिकं
वृष्टिं पट्टिशशूलमुद्गरमयीं तेने पुनर्माधवे ।।२४४।

तां बाणैर्विनिवार्य यादवपतिः प्रख्यापयन् लाघवं
बाणस्याशु रथं चकर्त्त तिलशः साश्वध्वजं लीलया ।
सौवर्णं कवचं विभिद्य वपुषो मौलिं च रत्नोज्ज्वलं
हस्तावापमुदारचापसहितं स्मेराननोऽस्रंसयत् ।।२४५।

नाराचमापुङ्खममुष्य वक्षस्यमज्जयच्छार्ङ्गगुणेन नुन्नम् ।
मर्माविधा तेन च दैत्यनाथो मुमोह मीलन्नयनो नितान्तम् ।।२४६।

उत्थाय वादयामास नखान् कक्षे च नारदः ।
ननर्त्त विकसन्नेत्रो दिष्ट्या दिष्ट्येत्युदीरयन् ।।२४७।

---

१. तमगं । २. क्वशियोः ।

निजगाद चेदम्–

आज्ञां मौलिषु मालतीस्रजमिव त्रैलोक्यमस्यावहन्
नामाप्यस्य निशम्य जम्भरिपुणा दध्रे मुखम्लानता ।
सोऽयं कृष्णशरेण दानवपतिर्दीनां दशां नीयते
विश्वस्मिन् महतामुपर्यपि महानस्त्येव गर्वापहः ।।२४८।

धन्योऽस्मि सुजीवितं च मे मुरारिबाणैर्बाणासुरस्यापि योऽहं मोहं स्वविलोचनाभ्यामवलोकयामि । अलं लीलया मुकुन्द विजयस्व, बाणासुरं सुरगणशल्यमुद्धर्तुमवतीर्णोऽसि । क इवाहितुण्डिकस्य कुण्डलिनि ग्रहे सम्भ्रमः । बाणासुरस्तु विगतमोहो मयूरमारुह्य मुरारेरुपरि शरनिकरमकिरत् । अत्रान्तरे च क्रोधमापन्नस्तार्क्ष्यः स्वपक्षपवनेन बहूनसुरानुत्क्षिप्य तीक्ष्णत्रोटिकोटिपाटिताद् बाणवक्षसो विक्षरन्तीं क्षतजधारामास्वाद्य माद्यन्मयूरमतिखरनिखरतुण्डप्रहारैरखण्डयत् ।

पक्षतुण्डनखैरभिघातास्तौ चिरादकुरुतामुरुशक्ती ।
पक्षिणोरचलयोरिव रोषाद् युद्धमुद्धरमभूदनयोः खे ।।२४९।

ततः [1]प्रचुरकोपप्रतिभया वैनतेयस्तुण्डेन शिखावलस्य शिखामुत्पाट्य शिरसि गृह्णन्नुत्क्षिप्य पक्षाभ्यां पद्भ्यां पार्श्वाभ्यामाजघानोन्मूलितपतितपिच्छचन्द्रकालङ्कृतायां भुवि पुनः पुनर्विपोथयन्निन्द्रायुधमिवाम्बरतलाद् विसंज्ञं तमपातयत् ।

शिखिनि पतिते बाणो व्योम्नः पपात सनिःस्वनं
गिरिरिव रजोरूक्षां प्रोञ्छस्तनूमभितःकरैः ।
व्यमृशदहह प्रायं दैवादहं विपदं पराम्
किमिति सुहृदां वाचः पूर्वं मया न विचारिताः ।।२५०।

नयवर्त्मविदां स्वबान्धवानां बलमत्तैर्न विधीयते वचो यैः ।
विपदः परिभाविनीरकस्मादुपपाताः किल ते तपन्ति पश्चात् ।।२५१।
व्यथयन्ति [2]तथा न मे निखाता हृदये शार्ङ्गधनुश्च्युताः शरौघाः ।
पतिते मयि दत्तहस्ततालाः परिहासा वितता यथा सुराणाम् ।।२५२।

ततो विषीदन्तं बाणमालोच्य करुणाकरः कपर्दिनं प्राहिणोत् । गच्छ नन्दिकेश्वर कृतमितः परं समराभिनिवेशेनेति सन्दिश्य सिंहयुक्तेन भास्वता मदीयेन स्यन्दनेन मदन्तिकं बाणमानय ।

अथ शवनिचितायां मांसपङ्कप्लुतायां
समरभुवि विषण्णं बाणमभ्येत्य नन्दी ।
न्यगददिह रथे त्वं शीघ्रमारुह्य बाण
प्रमथपतिमुपेयास्तन्निदेशाद् विरम्य ।।२५३।

---

१. प्रचुरकोपप्रतिभयो । २. तुथान् ।

आरुरोह तदा दैत्यो ब्रह्मणा निर्मितं रथम् ।
उदयाद्रिमुपाश्रित्य भानुमानिव दिद्युते ।। २५४ ।
वृषं विसर्जयामास वृषभध्वजवल्लभम् ।
जयाशया न तत्याज रणं धूर्तो यथा पणम् ।। २५५ ।

ततः कोपव्याकुलो दैत्यपतिर्ब्रह्मशरो नाम ब्रह्मविनिर्मितं युगान्तकरमस्त्रमक्षिपत् । अथ दुर्वारदावानलज्वाला[1]वलयवेष्टितमिवावलोक्य[2] जगद्रक्षादक्षिणश्चक्रपाणिश्चक्रेण प्रशमय्य मेघगभीरया गिरा बाणमवोचत् । यावदस्त्रं यावत्यश्च तव मायास्तत् सर्वमिह प्रदर्शय । बाण, कथमिव म्लायसि, कुतो न पूर्ववद् गर्जसि, संभाषस्व सुहृदः, सकलासुरवंशदावदहनस्य वैरिदुर्दर्शस्य सुदर्शनस्य गोचरं गतो जनः क्षणमपि न ध्रियते–

इत्युक्त्वा समुदितकोटिभास्कराभं
चक्रं तद् भ्रमयति सम्भ्रमादुपेन्द्रे ।
निर्देशात् त्रिपुरहरस्य तत्र लम्बा
रक्षन्ती बलितनयं दिगम्बराऽस्थात् ।। २५६ ।

ततस्तां कोटवीमुदीक्ष्य मीलिताक्षो मधुरिपुरवोचत्– 'किं वृथावतिष्ठसे लम्बे सम्बे निर्गच्छ' बाणो न मोक्ष्यते । अथ तं देवी विज्ञापयाम्बभूव–

पुराणपुरुषो भवान् सकललोकरक्षाकरो[3]
वरं वितर तत्प्रभो तनय एष मे जीवतु ।
मुरारिरवदत् पुनर्भुजसहस्रमस्याधुना
छिनद्मि ननु यन्मदाद् व्यथयते सदायं सतः ।। २५७ ।

मुक्तं मीलितलोचनेन विभुना चक्रं ततो दारुणं
बाहून् दैत्यपतेश्चकर्त्त परितो रक्तच्छटास्राविणः ।
क्षोणौ ते न्यपतन् महारवमुचः कायादमुष्य द्रुतं
विन्ध्यादभ्रमुवल्लभेन दलिताः शाला विशाला यथा ।। २५८ ।

ये गन्धर्वनिलिम्पनागललनापीनस्तनामर्दिनः
सङ्ग्रामाङ्गनकृष्टवैरिविजयश्रीवेणिवल्लिस्रजः ।
पर्यायेण सुदर्शनेन दलितास्ते मत्स्यपद्माङ्किता
हस्ता दैत्यपतेः सनालकमलच्छायां क्षितौ बभ्रिरे ।। २५९ ।

---

१. ज्वावल- । २. मिवलोक्य । ३. सकललोकरक्षकरो ।

दनुजविजयलक्ष्मीदेवताचैत्यवृक्षाः
सुरकटकसरस्वन्मन्थमन्थानशैलाः ।
धरणिविबुधदैन्यग्रावदम्भोलयस्ते
भुवि चिरमसुरेन्द्रस्यास्फुरन् बाहुदण्डाः ।।२६०।

भुवि बाणभुजाः क्षणेन वृक्णा व्यलुठन् पञ्चफणा यथा फणीन्द्राः ।
स्रवदश्रुमुखा निरस्तशस्त्रा दनुजाश्चापि दिशो दश प्रयाताः ।।२६१।

असिनिर्मितमूलखण्डनेभ्यः पतितेभ्यो भुवि दन्तिनां करेभ्यः ।
लसदङ्गदरत्नरश्मिजालैर्निरणीयन्त भुजाः सुरारिभर्तुः ।।२६२।

आशुगैर्यदुपतेर्विधूनिता दानवेन्द्रजलदा विलिल्यिरे ।
शुश्रुवे नभसि सर्वतोऽद्भुतं देवदुन्दुभिगभीरगर्जितम् ।।२६३।

वातहृतैर्गन्धभरैरादधती घ्राणसुखम् ।
गुञ्जदलिव्रातयुता पुष्पततिः [1]खादपतत् ।।२६४।

[2]व्यानोद्दिते यदुवरेण भुजासहस्रे वीरोऽग्रणीः सुविननाद सुराॅरिराजः ।
क्रुध्यन्मृगेन्द्र इव सिन्धुरगर्जितेन चक्रं दधार पुनरप्यथ चक्रपाणिः ।।२६५।

तदवबुध्य करुणासिन्धुरर्द्धेन्दुमौलिर्मुकुन्दमुपेत्येदमगदत्—'कृष्ण कृष्ण सकल-ब्रह्माण्डविक्षोभणक्षमेषु मधुकैटभप्रभृतिषु प्रथितपराक्रमस्य भवतो न शोभतेऽस्मिन्नसुरके रोषरभसः क इव करीन्द्रकुम्भकूटकुट्टाकचपेटस्य कण्ठीरवस्य कीटकेषु मोटनाटोपग्रहः ।

निमेषोन्मेषमात्रेण तव लोकलयोदयौ ।
अनादिमध्यनिधनो देवस्त्वं श्रुतिविश्रुतः ।।२६६।

इयता विधुरे शुद्धे सच्चिदानन्दनीरधौ ।
उदीयन्ते विलीयन्ते त्वयि ब्रह्माण्डबुद्बुदाः ।।२६७।

तदधुना सर्वासुरसङ्घातघातकं प्रचण्डमार्त्तण्डद्युतिचक्रमाशु संहर चिकित्सितश्चास्य त्रिदोषकोप इव महोन्मादकरो मदो मदभिसन्धिना यदभयमस्मै मया विश्राणितं तदवितथमस्तु ।

निशम्य रुचिरा वाचो व्योमकेशस्य केशवः ।
उवाच संहरंश्चक्रं[3] स्मितशोभिमुखाम्बुजः ।।२६८।

---

१. खादय तत् । २. घ्नेदिते । ३. संहरश्चक्रं ।

सुरासुरशिरोमणीकिरणदीपनीराजिते
सदा तव पदाम्बुजे प्रणतखेदशैलाशनी[१] ।
बिभर्ति[२] तव वर्णने निगम एव वन्दिक्रिया-
मतर्क्यविभवाय ते भगवते भवायों नमः ।।२६९।
सङ्कल्पितं यद् भवतेश्वरेण तदभ्युपेतं प्रथमं मयापि ।
निषेवमाणस्तव पादपद्मे बलेः सुतो जीवतु वीतमोहः ।।२७०।
इत्थं तयोर्गुणकथाः प्रथिता बभूवु-
रन्योन्यवैभवविदो रुचिराश्रिराय ।
आमन्त्र्य कृष्णमथ सुस्मितवक्त्रपद्मो
देवो जगाम दनुजेश्वरराजधानीम् ।।२७१।

ततः सद्यश्छिन्नशाखासहस्रक्षतस्रवन्निर्यासं महातरुमिव बाहुमूलविगलत्कीलालं क्लिन्नतनुं विषीदन्तं बाणमवलोक्य दयमानो नन्दिकेश्वरो जगाद—'व्रज बाण रथमारुह्य शीघ्रममुनैव रूपेण नृत्यभृत्यानुकम्पिनः पुरः पुरारेर्यदि श्वोवसीयसमाशंससे—

बाहुमूलव्रणस्यन्नैराचितो रक्तबिन्दुभिः ।
ननर्त्तार्थ गतो बाणः पुरस्तात् त्रिपुरद्विषः ।।२७२।

ततो विहस्य दीनवत्सलो भगवान् भूतपतिरवोचत्—'वरं गृहाण बाण यं यमिच्छसि । मम प्रसादमतुलमवेहि । सर्वमेव मया सुदानं भवादृशेभ्यो भक्तेभ्यः । अथ भुजच्छेदवेदनातुरोऽपि धैर्यमालम्ब्य विन्ध्यावलिसुतो बभाषे—

भवेयमजरामरो व्रणरुजा विहीनः सुखी
द्विबाहुरपि वैकृतं न च वहेयमेतत् क्वचित् ।
प्रभो प्रमथयूथपस्तव वसेयमभ्यर्णतो
जनोऽहमिव नृत्यकृत् सुतधनं पुरस्तेऽञ्चतु ।।२७३।
वचोऽमृतैस्तापममुष्य हापयन्नुवाच देवो गिरिजापतिस्ततः ।
मनीषितं बाण समस्तमस्तु ते पुनर्न भूयात्[३] प्रकृतिस्तवासुरी[४]।।२७४।
महाकाल इति ख्यातो गणानामधिपो[५] भवान् ।
मत्सन्निधिचरो नित्यं चिरमस्त्वजरामरः ।।२७५।

१. शैलासनी । २. विभर्जि । ३. पुनभूयात् । ४. प्रकृतिस्तधासुरी । ५. मधियो ।

अधिगम्य वरान् महेश्वराद् गततापत्रितयो ननन्द सः ।
क इवानुशयोऽवशिष्यते गिरिकन्यारमणे प्रसेदुषि ।।२७६।
धनयौवनकामिनीसुतान् [1]शरदम्भोदचलान् विलोकयन् ।
बलिसूनुरधत्त चेतसा चरणौ चन्द्रकलाशिरोमणेः ।।२७७।

अथ निहतपतिसुतशोकविक्लवानां परःसहस्राणां दानवीनां करुणविलपितेन मांसमशित्वा परिधावतां काककङ्कगृद्धगोमायुप्रेतपिशाचानां कटुरटितेन चटचटायमानकरोटिकूटविकटानेकचितानलज्वालनिर्गलितवसामस्तिष्क[2]विस्रगन्धेनोद्विजमानो गरुडमारूढो मुरारिर्वीराशंसनं विहाय सह दाशार्हप्रधानैर्नारदं पुरस्कृत्य [3]नप्तारमवलोकितुं बाणस्य कन्यान्तःपुराय प्रतस्थे ।

स वैजयन्तप्रतिमान् विलोकयन् प्रासादकूटान् शतशो मनोरमान् ।
देवर्षिसंदर्शितवर्त्मना बली दैत्येन्द्रकन्यासदनं समासदत् ।।२७८।
नमन्ती निर्गता गेहाच्चित्रलेखेदमब्रवीत् ।
इदं कन्यापुरं श्रीमन् स्वच्छन्दमनुगृह्यताम् ।।२७९।
प्रवेशितस्तद् भवनं विचित्रं चित्रलेखया ।
नागैर्निरुद्धसर्वाङ्गमनिरुद्धं ददर्श सः ।।२८०।
वैनतेयस्य माहात्म्यमहो यस्य विलोकनात् ।
भूत्वा निपतिता भूमौ जिह्मगा अप्यजिह्मगाः ।।२८१।
अस्त्रसन्मुररिपोर्विलोकनाद् दुर्दशेव वपुषः शरीरिणी ।
मीनकेतनसुतस्य सर्वतः श्रीश्चिरोत्सुकतयेव धाविता ।।२८२।

अथोत्थायानिरुद्धो लज्जया किञ्चिदवनतमुखकमलो नारदबलदेववासुदेववैनतेयप्रद्युम्नानन्यांश्च यथार्हं प्रणनाम । बलकेशवौ तं चिरादालिङ्ग्य मूर्द्धनि जिघ्रतुः[4] ।

अमान्तमन्तःकरणे महान्तमानन्दराशिं दधती कथञ्चित् ।
गुरून् विलोक्यातुलितप्रभावा स्नुषा ह्रिया जालगता ननाम ।।२८३।
तदनु मर्दलझर्झरकाहला विजयदुन्दुभिमङ्गलनिःस्वनः ।
सुखयति स्म यदूनुपबृंहितो मधुरवारवधूजनगीतिभिः ।।२८४।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनामकेन
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽनिरुद्धचरिते
गोविन्दविजयो नामाष्टम उच्छ्वासः ।।८।।

---

१. शरेदम्भोद-। २. मस्तिक्वचिस्र-। ३. नसार-। ४. जघ्रतुः ।

## अथ नवम उच्छ्वासः

अन्तःपुराद् बहिरुपेत्य धरामरेभ्यो
भोगावली मुखरवन्दिवनीयकेभ्यः ।
ग्रामाश्वहस्तिमणिमौक्तिकहेमराशीन्
देवो ददौ यदुपतिर्मुदितोऽतिमात्रम् ।।१।

अथेन्द्रस्य वचनान्मुकुन्दमुपगम्य नारदो जगाद–'दिष्ट्या वर्द्धसे यदुप्रवर्हपौत्रस्य समागमेन। दिष्ट्या देवशत्रुः पराजितो दिष्ट्या वसुमती लघूकृता दिष्ट्या वासवादिभिः समं वयमानन्दमानीताः ।

प्रणेमुः सानिरुद्धास्तं बलकृष्णादयस्ततः ।
आशीर्भिरभिनन्द्यासौ पुनरूचे जनार्दनम् ।।२।

मुकुन्दविवाहभट्टोत्सवमनिरुद्धस्य कुरु। जम्बूलमालिकां दिदृक्षु मन्मनस्त्वरते। तन्निशम्य सर्वे प्राहसन्। स्मेरवदनो यदुवरः परममित्यवोचत्।

प्रहितैरभिसन्धिमाशु बुद्ध्वा स्वहितैर्नारद यादवेन्द्रयोस्तम् ।
अभयार्थनयोपगम्य कृष्णं सचिवो दैत्यपतेः कृती बभाषे ।।३।

शरणागतवत्सल विभो त्रायस्व नस्तव पादपद्मप्रसादोपजीविनोऽनुगृहाण गृहान् सपरिणयसम्भारान् सार्द्धमनिरुद्धेन ।

विज्ञापयन्तमिति संयतपाणिपद्मं
कुम्भाण्डमाकलितभावमपेतवैरम् ।
आश्वासयन्नथ जगाद मुदा मुकुन्दो
दीनेषु मङ्क्षु महतां हि दयार्द्रमन्तः ।।४।

अमात्यवर्य जानामि तव सद्भावं नीतिनैपुणं च। मामुपेत्य जनो न पुनः शोचति। सपरिवारस्य तवाभयं दत्तमपेतचिन्तश्चिराय भुङ्क्ष्व राज्यमेतत्। अयमहमनिरुद्धस्य कृते कन्यार्थी त्वामुपैमि। विवाहमण्डपमधितिष्ठतु भवान्।

तदाकर्ण्य प्रसन्नमुखपङ्केरुहो मौलिमालामकरन्दनिस्यन्दसन्दोहेन[1] मुकुन्दपादारविन्दमासिच्य सचिवो जगाम। परिणयोपकरणरमणीयां शालामधिष्ठाय प्रजिघाय

---

१. मौलिमालामरन्दयन्दोहेन - ।

च पूर्णभद्रं नाम प्रतीहारं मुरारिमाकारयितुं स व्रजन्नात्मानमवलोक्य विहसन्निदमचिन्तयत्—

न शोभे [1]श्लथचर्माऽहं चलद्दन्तः[2] स्खलत्पदः।
कालेन समनुप्राप्तः करीव द्वादशीं दशाम्॥५॥
श्रुतिहीनं स्मृतिविकलं समाश्रितक्षणिकविज्ञानम्।
नास्तिकमिव द्विजाली वर्षीयांसं जनं त्यजति॥६॥

चिरञ्जीवितां मां कियद् विडम्बिष्यति। तथाहि—

यैः पांशुकेलिरभवत् सह यैश्च तस्मात्[3]
तारुण्यजृम्भितरहस्यमनन्यवेद्यम्।
सर्वङ्कषेण गमिताः स्मृतिशेषतां ते
कालेन मे सवयसो दुरतिक्रमेण[4]॥७॥

अहो नु खलु भोः

यो वत्सस्य विनोदहेतुरभवं बाल्ये बलेस्तादृशः
साम्राज्येऽन्वभवं प्रसादपदवीमासाद्य ताः सम्पदः।
तद् दृष्ट्वा हतकस्य दुर्विलसितं दैवस्य तस्मिन्नहो
सोऽहं बाणशिशोरशोभनमिदं पश्यामि वज्रोपमः॥८॥

अथवात्यर्थमुपकृतं मम दीर्घजीवितेन यतः

श्रुतयोऽपि च यं वदन्ति साक्षादनिरूप्यस्य पदं महामहिम्नः।
तमहं सुचिरं निपीय दृग्भ्यां कथयिष्यामि विभो द्रुतं व्रजेति॥९॥

यः पूर्वं बलनिग्रहे त्रिभुवनं क्रामन् मया वीक्षितो
दैत्येन्द्रैर्मशकैर्मदद्विप इव च्छन्नोऽपि निर्विक्रियः।
गीतं पौरवधूजनैरनुपथं बाणस्य सम्बन्धिनं
दिष्ट्या सम्प्रति तं प्रसादसुमुखं पश्यामि पद्मापतिम्॥१०॥

इत्यादि मनसि परामृशन्नसौ गोविन्दमुपगम्य शेखरस्पृष्टधरणितलो बद्धाञ्जलिर्विज्ञपयाम्बभूव—यदुकुलकमलमार्त्तण्ड स पुरोहितः सचिवपुङ्गवो[5] युष्मान् प्रतीक्षते तन्नः सद्मानि सपदि सनाथीक्रियन्ताम्[6]। अथ पारितोषिकममुष्मै प्रादिश्य कृतमङ्गलस्नानं विहितवैवाहिकनेपथ्यमनिरुद्धं पुरस्कृत्य दाशार्हवयोवृद्धैर्मधुरिपुर्वव्राज।

अधिरुह्य लसद्वसनाभरणः शिविकां मणिमौक्तिकचित्ररुचम्।
नयनानि सिषेच शरीरवताममृतैरनिरुद्ध उदाररुचिः॥११॥

१. श्रथ। २. चलद्दतः। ३. ततत्तारुण्य-। ४. दुरतिक्रमण। ५. युगं वो।
६. क्रियन्तामय।

श्रुतिमुखरमुखैर्द्विजैः पुरस्तात् कुलकुशलैः किल वन्दिमागधैश्च ।
अतिमधुरमयाचि सत्क्रियाभिर्मधुमथनस्य विशेषतः प्रसन्नैः ॥१२॥

आतोद्यानां श्रवणसुखदा जज्ञिरे धीरनादा
देवर्षीणामुपचितमुदां सर्वतः साधुवादाः ।
मान्दारीणां नवसुमनसां वृष्टयो लोककम्र्याः
स्वर्वेश्यानां हृदयमहरन् गीतयोऽत्यन्तरम्याः ॥१३॥

[2]चलत्कुण्डलैर्यादवेन्द्रैः प्रणुन्नाः[3] क्वणत्किङ्कणीभूषणाः पारसीकाः ।
अनृत्यन् खुरैर्द्व्यङ्गुलं द्व्यङ्गुलं तैर्भ्रमीर्मण्डलानि प्लुतीर्दर्शयन्तः ॥१४॥
कुथैः काञ्चनैः प्रान्तसंसक्तमुक्तैर्ध्वनद्धीरघण्टाः सलीलं चलन्तः ।
[4]वलभ्योघकैः शारिभाजा स्फुरन्तो मदैर्दन्तिनो राजमार्गानसिञ्चन् ॥१५॥

काश्मीरपङ्करुचिरैर्धृतमल्लिमाल्यै-
स्ताम्बूलरागललिताधरवक्त्रपद्मैः ।
विष्वङ्मतङ्गजरथाश्वगतैरराजत्
सा वारयात्रिकजनैः किल जन्ययात्रा ॥१६॥

जगत्त्रयी युवजनदुर्लभश्रियं
विलोकितुं मदनसुतं चिरोत्सुकैः ।
निषेविताः सपदि नितम्बिनीजनै-
र्महोच्चकैर्मणिमप्रबालवीथयः[5] ॥१७॥

अनुपमसुषमस्य ख्यातकीर्तिरभिख्यां
कुसुमविशिखसूनोर्द्रष्टुमुत्कण्ठितानाम् ।
वलयनयनानां शिञ्जितेनातुलेन
प्रतिसदनमकूजत् सौधसोपानराजिः ॥१८॥

चूर्णकुन्तलगलत्कुसुमालिच्छिन्नहारगुलिकाकमनीयम् ।
यावकाञ्चितमकारि वधूभिः सौधवर्त्म कुतुकेन यतीभिः ॥१९॥
करपङ्कजकोशलसन्मुकुरा तरलस्तनलोलितहारलता ।
द्रुतमापतति स्म चलन्नयना ग्रथिता ग्रथितैरलकैरपरा ॥२०॥
नितम्बभारेण निरुध्य पक्षकं स्थितामुपालभ्य सखीं निषण्णया ।
पयोधराघट्टितपृष्ठमन्यया व्यलोकि लोकस्य विलोभनो वरः ॥२१॥

---

१. पोरदुपधात् (३,१,९८) इति यत् । २. चलत्कुंवर्यादवेन्दैः । ३. प्रणुण्णाः ।
४. वलम्यौघकैः । ५. प्रजालवीथयः ।

एकस्यां कलितवती कपोलपालौ
[1]पत्राली द्रुतमितरत्र तामकृत्वा ।
आयाता[2] झटिति गवाक्षमीक्षमाणा
प्राद्युम्निं परिहसिता सखीभिरन्या ।।२२।
केयूरं वलयपदे निवेश्य वामा
सैमन्तं मणिमपिनह्य कण्ठदेशे ।
सीमन्ते कलितललाटिका च काचित्
सम्भ्रान्ता करधृतवीटिका प्रपेदे ।।२३।
उपेत्य सौधान् बहुभूमताजुषस्तमीक्षमाणासु वधूष्वभूदहो ।
सहस्रशः पूर्णशशाङ्कशोभिता प्रफुल्लराजीववना च सा पुरी ।।२४।
अयमयमुपयाति पश्यन्नेत्रे
सफलय कुत्र सखि स्थितासि पश्य ।
तरुणिमपरिभूषितो धरायां
मधुरिमराशिरहो गृहीतमूर्तिः ।।२५।
इति कुतुकविलोललोचनानामनिभृतपञ्चशराकुलीकृतानाम् ।
अनुपथमनुमन्दिरं द्रुतानां प्रणयरसादभवन् गिरो वधूनाम् ।।२६।
युग्मम्—
कथयितुमिवाश्चर्यं सौन्दर्यराशिमुषापते-
स्तरलतरलं जग्मुःकर्णोत्पलानि सखीन् निजान् ।
अभिनववयःस्फूर्जन्नानाविलासरसालसा-
स्तरुणहरिणीलीलालीलावतीनयनस्रजः ।।२७।
तारुण्यस्य तरङ्गितैरभिनवैर्लोलं मनस्तन्वति
स्तोकस्मेरमुखारविन्दसुषमाबिम्बस्फुरत्कौतुके।
एतस्मिन् [3]वरवेषविद्रुमरसैरुद्वेलतामागते
पर्यक्रीडत पौरपङ्कजमुखी दृक्प्रोष्ठिकानां[4] ततिः ।।२८।
अभिनवशोकद्रुतापि सा पुरी स्मरसुतशीतरुचिप्रभामृतैः ।
नयनचकोरचयेन चूषितैरस्तभत शीतलतां प्रथीयसीम् ।।२९।

१. पत्रांली । २. आयाता । ३. वरयेषविस्नुरसै- । ४. प्रोष्टिकानां ।

स्मितचन्दनेन शिशिरीकृतो वरो नयनाम्बुजैश्च ललनाभिरर्चितः ।
अविशद् विवाहसदनं गजस्थितैः पथि पूर्णहेमकलशैरुपस्थितः ।।३०।
करितुरगस्थैर्यदुभिरराजद् दितिजनरपतेर्भवनपरिसरः ।
[१]मणिविद्रुमकुट्टिमपरिभासन् मञ्जुलतमविदीप्रविभवनिकरः ।।३१।

अत्युन्नतं कनकमौक्तिकरत्नरम्यं
सौवर्णकुम्भकदलीतरुचारुकान्ति ।
द्वारं बलारिबलजोऽयममात्यराज-[२]
[३]दैत्येश्वरस्य परितः शिविकासहस्रैः ।।३२।

प्रविश्य भैमाः कनकासनेषु येषु व्यराजन्त महोन्नतेषु ।
तैरत्यहस्यन्त मणिप्रभाभिः सुमेरुशृङ्गाणि सुरैः श्रितानि ।।३३।
[४]वपूंषि योगेन धृतानि नूनं स्मरेण नानेति विलासवत्यः ।
पर्युत्सुका यौवनजृम्भमाणैरताडयंस्तास्तरलैः[५] कटाक्षैः ।।३४।

चतुर्भिः कालापकम्–

परिजनैर्मणिकुण्डलमण्डितैः सुरभिसूक्ष्मविचित्रनवाम्बरैः[६] ।
सचिववर्यनिदेशसमुत्सुकैर्विनयबद्धकरैः परितः श्रितम् ।।३५।
नवविचित्रवितानविभूषितं कृतकरत्नमहीरुहराजितम् ।
विविधजालनिषण्णविलासिनीमृदुमृदङ्गनिनादमनोहरम् ।।३६।
कनककुम्भसुवर्णवितर्दिकाकदलिकातरुपल्लवभासितम् ।
गणकवैदिकगृह्यविदां गणैः श्रुतिकलध्वनिभिर्वटुभिर्वृतम् ।।३७।
पुरटदण्डधरैर्मणिमण्डितैरपरुषालपितैः पुरुषैर्युतम् ।
अतिसुरेशधनेशगृहं महद् गृहमुदैक्ष्यत जन्यजनै रहः[७] ।।३८।

तत्र विनीतवेषो दर्भपवित्रपाणिर्बृसीमधिष्ठितः[८] कृतस्वस्त्ययनः कुम्भाण्डो यादवानभिवाद्य धृतमङ्गलप्रतिसरं सकलजनलोचनोत्सवकरं वरं महार्हासनविष्टर-पाद्यार्घ्यैरुपचचार ।

मधुपर्कमस्वदत कामनन्दनःप्रतिपादितं दितिजराजमन्त्रिणा ।
अनुभूतबाणतनयाधरामृतस्वरसो न किन्तु हृदि बह्वमन्यत ।।३९।

---

१. मया प्रपूरितमिदं चरणद्वयमिति वागीशः । २. वलजोयममत्य- । ३. 'दैत्येश्वरं परितः' इति भाव्यम् । ४. वयूंषि । ५. अताडयस्ताः । ६. नवां परैः । ७. ददः । ८. मधिष्टितः ।

उषाथ सौवर्णघटोद्धृतैर्जलैः
संगीतवाद्यस्नपिता वधूजनैः ।
[1]महार्घमाणिक्यवराम्बरोज्ज्वला
शनैरुपानीयत चित्रलेखया ।।४०।

वासांसि रत्नाभरणानि यानि
पुरा स्वपात्रे प्रहितानि शच्या ।
हरेर्निदेशेन ततः स्नुषायै
पुरोधसा तानि समर्पितानि ।।४१।

अमात्यदत्ताभिनवाम्बरेण वरेण दृष्टाभिमुखं वधूः सा ।
लज्जावती गृह्यविदां निदेशात् संयोजयामास दृशौ कथञ्चित् ।।४२।

ततः सगोत्रप्रवरानुकीर्तनं सदर्भदूर्वाक्षतदिव्यवारि च ।
अदत्त मन्त्री दितिजेन्द्रकन्यकां वराय पात्राय कृशानुसाक्षिकम् ।।४३।

मणिमौक्तिकविद्रुमहेमतुलाः करिसैन्धवधेनुसहस्रशतम् ।
विविधायुधयानभुजिष्यवरान् वितरन्नपि किं स विवेद बहु ।।४४।

सन्तोषिते हुतभुजि प्रचुरैर्हविर्भि-
र्लाजान् जुहाव सुकुमारतनुः कुमारी ।
जग्राह दक्षिणकरे कमलोत्तरे ता-
मारोहयद् दृषदमुत्पुलकोऽनिरुद्धः ।।४५।

प्रदक्षिणीचक्रतुरिद्धमग्निं[2] वधूवरौ निह्नुतमन्दहासौ ।
यदुप्रवीरो दितिजेन्द्रपुत्रीमकारयत् सप्तपदीमदीनः ।।४६।

अभिषिषेच सचूतदलैरलं
दितिजराजसुतां कलशोदकैः ।
चिरवियोगदवानलनिर्मितं
किमिति दाहमपोहितुमुल्बणम् ।।४७।

त्वयि प्रेमा प्रियतमे मदीयो ध्रुववद् ध्रुवः ।
इति बोधयितुं तन्वीं ध्रुवं ध्रुवमदर्शयत् ।।४८।

---

१. महार्घमाणिक्यवरां बरोज्ज्वला । २. -मग्नि ।

आत्मानुरागि हृदयं स्वत एव तन्व्या
भूयोऽनुकूलयितुमेव सवेदमन्त्रैः ।
पस्पर्श यादवयुवा विदुषां निदेशाद्
[१]द्विर्बद्धमुद्धुरधियो हि सुबद्धमाहुः ।।४९।

उपयमसुखमित्थमन्वभूतां
चिरविरहानलतापितौ युवानौ ।
इह जगति हि कर्मणां प्रवाहे
सुखमसुखं ध्रुवमध्रुवं जनानाम् ।।५०।

शुभाशिषो वेदमयीर्वदद्भ्यो[२]
ददौ द्विजेभ्यो मणिहेमराशीन् ।
भोगावलीश्चारुपदाः पठद्भ्यो[३]
वैतालिकेभ्यश्च यदुप्रवर्हः ।।५१।

प्रदीपलीलां कुलयोर्वहन्तौ तौ कौतुकागारमभासयेताम् ।
अत्यद्भुतं तद् द्विषतां मुखेषु मसीसमा लिप्यत सर्वतो यत् ।।५२।

आनुरूप्यमनयोरवलोक्य प्रापुरीक्षकजनाःसुखमुच्चैः ।
अब्रुवन् सह विमाननिषण्णैर्देवसिद्धविवुधर्षिसमाजैः ।।५३।

रोहिणीव शशिनः शचीव शतक्रतोः स्वाहेव हुतभुजो धूमोर्णेव धर्मराजस्य गौरीव वरुणस्य भद्रेव वैश्रवणस्य रम्भेव नलकूवरस्योर्वशीव पुरूरवसो दमयन्तीव नलस्य शकुन्तलेव दुष्यन्तस्येन्दुमतीवाजस्य जानकीव दाशरथेः सावित्रीव सत्यवतो रुक्मिणीव वासुदेवस्य रतिरिव पुष्पकेतोरतितरामियमनिरुद्धस्यानुरूपा नयनेषु नः पीयूषवर्षमाचरति । कथङ्कारमस्यास्त्रैलोक्यातिशायि लावण्यसारसर्वस्वमुपवर्णयेम । एतावत्कालमीदृशी सरसिजासनस्य सृष्टिर्न दृष्टा न श्रुता यदि देवः सहस्त्रमूर्द्धा धरणिमन्यस्य मूर्द्धनि निधाय चिरविश्रान्तः [४]प्रणीतमना मनाग् वर्णयति ।

मन्यामहे घनसुरभिसूक्ष्मस्निग्धश्यामलस्यापार्ष्णिलम्बिनोऽस्याः कुन्तलकलापस्य प्रतिस्पर्द्धितया चामरेभ्यो दण्डं ददति राजानो हा हरिणगणान् येऽस्या नयनयोः सब्रह्मचारिणः सहैव नृत्यमभ्यस्यन्तो बालिश्याद् रङ्गशालातो बहिष्कृताः । कुत्रचित् कुरङ्गे किमपि चापलमधीत्य कुरङ्ग इति ख्यातिभाजोऽपि गर्वायन्ते । खञ्जरीटनिवहश्च

१. द्विवर्द्ध । २. वदभ्द्यो । ३. पठभ्द्यो । ४. प्रणिमना ।

तन्नेत्रे तत्रैव स्पर्द्धमानः खञ्जनस्पर्द्धस्वेत्यभिसन्धिना क्रुद्धेन गुरुणा खञ्जनेत्युक्तः खञ्जन इति प्रथामभजत्। अहो जाड्यविद्रुमस्य यः खल्वमृतधरमधरमस्या निशम्य साम्यमीहमानः सुधासूतिं सिन्धुमुपाकर्ण्य सुधां याचमानोऽद्यापि निवसति। देवासुरमथितामृतं तं न [1]च वेत्ति वराकः। उषाया नयनयोर्विलासं शिक्षिष्यमाणस्तद्वक्त्रबुद्ध्या मृगो मृगाङ्कमाश्रित्य तमपि कलङ्किनमकार्षीत्।

सरोजैर्बन्धुतामिच्छन्नुषावक्त्रसुगन्धिभिः।
ध्रुवं विधुरधिक्षिप्तो जातः कुमुदबान्धवः॥५४॥
कार्मुके कामदेवस्य ध्रुवमस्या भ्रुवामिमे।
नान्यथा समधीयेतां तत्र नेत्राम्बुजे शरौ॥५५॥

तिलप्रसूनोपमनासिकेति बन्धूकरक्ताधरपल्लवेति।
कुन्दाभदन्तीति विवक्षवोऽस्या लज्जामहेऽनिर्वचनीयकान्तौ॥५६॥
अस्याः कण्ठः कुरङ्गाक्ष्याः प्रददाति दृशोः सुखम्।
दृष्टे कम्बौ तु तच्छून्यशङ्कमाह ततो जनः॥५७॥
तुलाममुष्या भुजयोर्मृदीयसोः[2] करोतु किं नाम बिसं विसंष्ठुलम्।
जले निलीनं यदुदीत कण्टकं सदैव सीदत्यनयोर्न किं[3] भयात्[4]॥५८॥
एतत्करभ्रान्तिवशेन लक्ष्मीः कालं कियन्तं कमले वसन्ती।
वराटकं भाटकमस्य दत्त्वा जहाति सद्यो विगुणं विलोक्य॥५९॥
दधातु वैदग्ध्यमतिप्रयत्नादुपार्जयेज्जीवनदानपुण्यम्।
अस्याः कुचाभ्यां कलशो यदीर्ष्यत्यवश्यमन्तः स तदास्ति शून्यः॥६०॥
उत्तुङ्गविस्तीर्णकुचान्तराले निवस्तुकामा हृदि पक्ष्मलाक्ष्याः।
दधौ तनुत्वं मदनस्तदङ्गैरकारि लोके वितनुत्ववादः॥६१॥
निर्माणकाले कुचयोर्विधात्रा व्ययीकृतोऽस्याः किल भूरिभागः।
अतीव कार्पण्यमकारि नूनं शिल्पेऽमुना तल्ललनोदरस्य॥६२॥
विलासवापीकुसुमायुधस्य किन्नाभिरस्या नितरां गभीरा।
निमज्जतां किं युवमानसानां रोमालिरालम्बनशृङ्खलेयम्॥६३॥
सुवर्णसोपानवलित्रयेण स्मरः समारुह्य सरोरुहाक्ष्याः।
स्तनाद्रिदुर्गस्य वसन्निहान्तः सुदुर्जयः शास्ति समस्तलोकान्॥६४॥

---

१. न चवेति। २. मुदीयसोः। ३. 'न किं' इति मातृकायां नास्तीति मया पूरितः पाठः। ४. -त्यनयोभयात्।

परं तपस्यन्तु वने मृगारयः श्रयन्तु कामं हिमशैलकन्यकाम् ।
स्फुटं वदामो दनुजेन्द्रनन्दना विलग्नलक्ष्मीः सुलभा न तैरियम् ।।६५।
ऊरुश्रियं काञ्चिदचूचुरन् ध्रुवं नागेन्द्रहस्तास्तु चमूरुचक्षुषः ।
लक्ष्यन्त एते गुरुलोहशृङ्खला नित्यं वहन्तः खलु चोरलक्षणम् ।।६६।

रथचरणरमणीयश्रोणिमण्डला स्थलकमलकोमलपादपल्लवा नखमुखोद्गीर्यमाणहिङ्गुलच्छविस्तडित्कनककेतकीकान्तिर्गोरोचनारुचिरा दमनकशाखासुकुमाराङ्गयष्टिः शुकपिकवेणुवीणाकिन्नर[1]कलहंसनिस्वना [2]मत्तमरालमञ्जुलगतिर्विश्वाचीव घृताचीव मिश्रकेशीव पुञ्जिकस्थलेवालम्बुसेव पूर्वचितिरिव चित्रसेनेव दण्डगौरीव वरूथिनीव सहजस्येव [3]स्वयंप्रभेव मेनकेव मज्जुघोषेव रम्भेव तिलोत्तमेवोर्वशीव पताकामधिगता मनसिजस्य त्रैलोक्यविजयवैजयन्तिकेयं कियतीं न प्रशस्तिमर्हति । किमथवा बहुव्याहृतेन ।

शीतांशोः सरसीरुहस्य करिणां कुम्भस्य रम्भातरोः
पीयूषस्य पिकस्य वर्णनविधौ सर्वोपमानस्य च ।
नूनं गर्वमपोहितुं कवयतां कर्तुं च तूष्णीकतां
धात्रा योगबलादलौकिकरुचिः सुभ्रूरियं निर्मिता[4] ।।६७।

निवृत्ते परमानन्दादुषायाः [5]पाणिपीडने ।
भोजयामास कुम्भाण्डो विनीतो वारयात्रिकान् ।।६८।

प्रवेशिताश्चन्दनलेपपाण्डुरे सुवर्णपात्रीमणिपीठमण्डिते ।
गृहे महारत्नरुचोज्ज्वलाङ्गने वितीर्य कौशेयशतान्यमी शनैः ।।६९।
यदा न्यधावन् यदधुश्च पादुका विनीतवेषाः स विवस्य किङ्कराः ।
सुवर्णमाणिक्यमयेष्वथो जनान् पवित्रपीठेषु गुणान्यवेशयन् ।।७०।
ततः सतां स्वान्तमिवातिनिर्मलं सुगन्धिशीतं सुरसं जलं लघु ।
सवर्णभृङ्गारकधारितं ददुः सहोपपात्रं प्रतिवारयात्रिकम् ।।७१।
चतुर्विधं भोज्यमुपाहरन् गुणा रसैरुपेतं रससङ्ख्यकैः शुचि ।
सितोपलास्वादुशृतं प्रयत्नतः पयश्च मुग्धाधरमाधुरीधरम् ।।७२।
अदायि सूपैर्विविधैः सहौदनं कदुष्णमश्लिष्टमपीवरं मृदु ।
अयातयामं विमलं च सौरभं पुनः पुनः सर्पिरनल्पसौरभम् ।।७३।
विदेहदेशागतशिल्पिकल्पितं विमस्तु यत् [6]सान्द्रसुधोपमं [7]दधि ।
नवप्रकारं दशधापि यत्कृतं तदप्यदुः शाकमुदीतसौरभम् ।।७४।

---

१. किनर । २. मतमराल । ३. स्वयंप्रभवेमनकेव । ४. निर्मितम् । ५. पाणिषीडने ।
६. साद्र- । ७. सुधोयंमंदधि ।

[१]सुखेऽनवद्यो लकुचप्रसूनजां श्रियं दधुः केसरसारपिञ्जराः ।
वटैर्धृतो भोजनभाजने स्थितैरदोषदोषाकरबिम्बडम्बरः ॥७५॥
सवृन्तवृन्ताकपटोलशूरणैः [२]प्रयस्तरम्भापनसाम्रसन्धितैः ।
सितानुषक्तामलकैः सदाधिकैर्द्विजन्मनां शष्कुलिकाः प्रियाभवन् ॥७६॥
समण्डकाः खण्डविकारलड्डुकाः सितोपलाद्याः पयसां च पिण्डिकाः ।
अपूपसंपावसुपायसान्विता विशिष्य भुक्ताः सुरसा रसालयाः ॥७७॥
अभोजि [३]मांसौदनिकैः पुनः पुनः परस्परस्पर्द्धितयाऽधिकाधिकम् ।
जलस्थलस्थायि[४] विहङ्गमामिषसशूल्यमुख्यं[५] सझषं पृथग्विधम् ॥७८॥
न तेमनं ते मनसा विसस्मरुर्न सुष्मितास्याः परिवेषिका वधूः ।
न [६]कल्यवाचश्चलकुण्डलान् गुणान् न सौरभोद्गारि च हारि भोजनम् ॥७९॥
सलीलमश्लीलमनोज्ञगीतिभिः स्मिताननाभिर्ललनाभिराहृतः ।
उपेत्य सौहित्यमनल्पमप्यहो न [७]भोजनान्ते व्यरमन् विलासिनः ॥८०॥
[८]इतरेतरचातुरीमनोज्ञास्तरुणानां सरसोक्तिपेशलानाम् ।
चलदृग्भिरवामनस्तनीभिः परिहासाः परिवेषिकाभिरासन् ॥८१॥

समुदीरिता नयनसञ्ज्ञया वधू-
हरिणा विहस्य वदने व्यलेपयत् ।
दधि नारदस्य सुविलम्बिकूर्चके
स ननर्त्त हासयितुमिन्दिरापतिम्[९] ॥८२॥

सहस्तिवाजिवेसराः समस्तवाहिनीनराः ।
निजाभिलाषपूरणाददभ्रमोदमाप्नुवन् ॥८३॥
सुगन्धिचूर्णैरामृज्य करानाचम्यते स्थिताः[१०] ।
अगृह्णन्निच्छया स्वाद्वीः शुभ्रास्ताम्बूलवीटिकाः ॥८४॥

पक्षकर्दमविलेपितगात्रैर्मालतीकुसुमदामविचित्रैः ।
सुस्थितैः सदसि [११]दानवभर्तुर्नृ[१२]त्यमद्भुतमदृश्यत जन्यैः ॥८५॥
ननृतुरप्सरसस्त्रिदशेशितुर्जगतुरत्र च तुम्बुरुनारदौ ।
त्रिदिवशिल्पिभिरेव चतुर्विधं सदसि वाद्यमवाद्यत मोहनम् ॥८६॥

---

१. सुखेववद्यो । २. प्रयस्तरं भायन साम्न । ३. मासौदनिकैः ४. जलस्थलस्थापि ।
५. -मुष्यं । ६. कल्प-। ७. भौजनाते । ८. इतेरतर- । ९. इन्द्रापति ।
१०. नाचम्यते त्थिताः । ११. दनिव । १२. मृत्या ।

शैलालिनो विविधनाट्यविधौ[१] प्रवीणा
येऽप्यैन्द्रजालिकगणाः सह [२]भण्डवेश्याः ।
वैहासिकाश्च बहुरूपधरा भ्रुकुंसा[३]-
स्ते तत्र सन्निदधिरे जगतीतलस्थाः ॥८७॥

प्रसेदिवांसो यदवो गुणप्रिया व्यभूषयंस्तान् मणिहेमभूषणैः ।
ववर्ष कामं वसुवासवानुजो न दैन्यता यस्य लवोऽपि तेष्वभूत् ॥८८॥

चिरन्तनास्तत्र परं प्रसन्नाः [४]सुरर्षयोऽन्यान्यमिदं जजल्पुः ।
न रामसीतोपमे स्मरामो भविष्यति प्रागपि चोत्सवोऽयम्[५] ॥८९॥

उषितो दिवसान् बहून् ससैन्यो नगरे शोणितसञ्ज्ञके सुखेन ।
अधिकाधिकसत्क्रियाविदग्धं सचिवं स्मेरमुखो हरिर्जगाद ॥९०॥

कुम्भाण्ड नवनवाभिस्तव पुरस्क्रियाभिर्द्वारवतीं व्यस्मराम किन्तून्मनायमानस्य राज्ञ उग्रसेनस्य दर्शनाय[६] मनस्त्वरते तदनुमन्यस्व । एतदाकर्ण्य कुम्भाण्डो बभाषे—'त्रिलोकीतिलक कस्तृप्यति तावकेन दर्शनेन। किन्तु क्व भागधेयमीदृगस्माकम्' ।

चिराय शीतातपवर्षमर्षिणं जितेन्द्रियाणां निगृहीतचेतसाम् ।
तृणं त्रिलोकीश्रियमीश पश्यतां दृशौ [७]दयालो शिशिरीकरोषि चेत् ॥९१॥

ईशेऽपि सर्वजगतस्त्वयि वल्लभेऽपि
वात्सल्यतः सुलभतां समुपागतेऽपि ।
यन्मादृशां व्यवहरन्ति मनुष्यबुद्ध्या
त्वन्मायया हतधिया तदिदं क्षमस्व ॥९२॥

सम्बन्धेन पवित्रितं कुलमिदं पादाब्जधूलीलवै-
रावासो गमितश्च [८]तीर्थपदवीं नीता वयं धन्यताम् ।
सूर्याचन्द्रमसौ विभूषणमणी यावज्जगत्या यश—
स्तावत् कुन्दकरीन्द्रकैरवरुचि प्रख्यापितं नस्त्वया ॥९३॥

राज्यमिदं सवसुवाहनं भवद्भुजार्जितमेव तत्र क उपचारः । परममुष्मिन् विधेये किमाज्ञापितं भवति । तत्परिजननिर्विशेषमयमनुतिष्ठतु । अथ मुररिपुरचकथत्—'आज्ञेयमेव नः । सकोशबलवाहनमकण्टकं राज्यमिदमनुभवतु भवान् । सम्बन्धिबुद्ध्याऽस्मान् संस्मरिष्यसि । कृतमितः परं प्रत्यादेशेन' ।

१. नाद्यविधो । २. भंडे- । ३. भ्रुकुंशा- । ४. सुरर्षयोऽन्यमिद । ५. चोत्सवोपम् । ६. दर्शनाव । ७. दयालौ । ८. तीर्यपदवीं ।

अथ रत्नकिरीटमादधौ स्वकरेणास्य विहस्य यादवः ।
त्रपयाऽवनतस्य मस्तके भवदाज्ञेति वदन् बभार सः ।।९४।

उष्ट्रैर्वामीभिर्गजरथहयैर्भारहारैर्नरैश्च
वोढुं शक्यं न द्रविणनिचयं रत्नमुक्तागिरीश्च[1] ।
यद् यत् त्रैलोक्यादहृत रुचिरं वस्तु[2] दैत्याधिनाथ-
स्तत्तत्[3]कुम्भाण्डः सकलमदिशत् पारिबर्हं वराय ।।९५।

ख्यातं नृपेष्वसिचयं [4]सिचयं च चतुर्विधम् ।
गास्ताः समर्पयामास या मासप्रसवाः शुभाः ।।९६।

उदश्रुणा दानवराजमन्त्रिणा कथञ्चिदाश्वास्य शनैर्विसर्जिताम् ।
उषां समालिङ्ग्य चिरेण वत्सलां विषादमूका जननी व्यसर्जयत् ।।९७।

पार्वत्या स्वशरीरभूषणगणैराभूषिता सुन्दरी
पादाब्जे प्रणता चिरस्य रुदती मूर्द्धन्युपाघ्राय सा ।
उक्ता विश्वविभूषणस्य सुभगे पत्युर्मनोनन्दिनी
भूया भूरि समा ममासि हृदये वत्से विषादं त्यज ।।९८।

परिरभ्य सखीर्वियोगदूना रुदती पाटललोचना नताङ्गी ।
अभिधातुमनीश्वराश्रुपूरैरनुमेने गमनाय ताभिरेव ।।९९।

घृताचीमेनकारम्भा रमणीयतनुश्रियः ।
दास्यो दश सहस्राणि तां यानैरन्वयान् नवैः ।।१००।

अधिरोह्य महामणिप्रभाभिस्तरुणादित्यमरीचियानभूषाम् ।
अनुगन्तुमियेष दैन्यैः सह मन्त्री यदुपुङ्गवं प्रवीणः ।।१०१।

तं हठेन परिवर्त्य केशवो निर्दिदेश गमनाय सैन्यपान् ।
सञ्चचाल बलमश्रु[5] पूरयद् दुन्दुभिध्वनिभिरुद्धुरैर्दिशः ।।१०२।

प्रणम्य देवान् कमलासनादीन् सनारदान् [6]भूतपतिं च भक्त्या ।
पणायितस्तैश्च विसर्जितश्च ययौ यदूनां प्रवरः प्रसन्नः ।।१०३।

निजनिजनलिनेक्षणाः स्मरन्त-
श्चिरविरहोत्सुकचेतसः प्रसन्नाः ।
मधुमथनविसृष्टभूरिरायो[7]
रथतुरगै रथसैनिका प्रजग्मुः ।।१०४।

---

१. गिरीश्च । २. वंस्तु । ३. मातृकायां नास्ति । ४. सिचपंच चतुर्विधम् ।
५. माश्रु । ६. भूतपति च । ७. भूरिण्यो ।

वियोगतो बन्धुजनस्य वत्सला यथा न दूयेत तथा विधीयताम् ।
अनुप्रयाणं समनुस्मरस्नुषामुषासखीरित्थमुवाच केशवः ।।१०५।

न दूयन्ते यस्मिन् मिहिरकिरणानां मृदुतया
दिनानां ह्रस्वत्वाद् दधति न परिश्रान्तिमपि च ।
हिमोन्मेषात् पाथः पथिषु मृगयन्ते न पथिकाः
समायातः कालः स किल किमुषायाः करुणया ।।१०६।

मरुबकमञ्जरीमधुरगन्धमनोज्ञतमा[1]
नवयवशाकटद्युतिभिरीक्षणशैत्यकृतः ।
तरुणतुषारवर्षहततत्तदुपाधिधियोऽ-
जनिषत हैमनीं श्रियमुपेत्य दिशः किमु ताः[2] ।।१०७।

किमन्तःशीतार्ता उषसि समसेवन्त दहनं
स्रवन्त्यो वाष्पौघैर्बहिरलघुधूमैरनुमितम् ।
हिमानी कन्थाभिः कवचितशरीराश्च ककुभो
न यावन्मध्याह्नमुखमपपिधानं विदधिरे ।।१०८।

अकृतय इह गुञ्जापुञ्जभूषावनीनां
वनबदरसुभिक्षं वानराणां व्यधत्त ।
व्यरचयत च तुष्टिं सस्यऋद्ध्या नराणा-
मगमदयमनिन्द्यो हन्त हेमन्तकालः ।।१०९।

अथाजगाम प्रियतमापयोधरदुर्गदुर्ग्रहमूष्माणं जिघृक्षन्निवास्कन्दिताशेषभुवनः शरद्रत्या कथं कथमनाविलाशयीकृता अयोविलासिनीः परिरभमाणो निपीतारविन्दवदनो गृहीतकुमुदपयोधरो विलुलितभ्रमरवेणिबन्धो बन्धुरवियोगिनां शिशिरतरुणः । यत्र क्षणजनितहरिणेक्षणा विरहकातरतरुणकरुणापरायणेनेव विधिना वामनतामनायिषत । निजनिजव्यापारपारतन्त्र्येण यत्र तत्र प्रचलितानां यूनां दुःसहदुःखदायिनो दिवसा महिमानं कुसुमशरसङ्गरक्षणदाश्च क्षणदाः । यत्र च निष्क्वाथ्यमानेक्षुरसोच्छ्वसत्सौरभ-समाकृष्यमाणपथिकसमाजसन्तर्पणसफलश्रमाः [3]परिणद्धपिञ्जरस्यमञ्जरीविलोकन-महोत्साहमनुभवन्ति कृषीवलाः । यत्र च लोभ इव क्वचिदपि बहुलं पटं न जहाति महाजनो गौरिव गललग्नकम्बलः [4]प्राकृतो जनो निर्धूमाङ्गारलोहिताः सायंप्रातःसन्ध्या इव हसन्तीरुपासते लोकाः ।

---

१. ममोज्ञतमानव । २. किमताः । ३. परिणक– । ४. प्राकृतौ ।

अयत्नशीतलं वारि स्वभावमधुरं दधि।
आकस्मिकोष्मणा रम्यं कान्तायाः स्तनमण्डलम्।।११०।
वासरा वृषभाश्चैव कृशिमानमुपागमन्।
यामिन्यश्च महिष्यश्च काममूहुः स्थविष्ठताम्।।१११।
अम्बरेषु सुगन्धेषु भोज्यपेयेषु वस्तुषु।
रुचिमभ्यधिकां कुर्वन् कालोऽयं भोगिवल्लभः।।११२।
न प्रालेयमलङ्घतोष्मकिरणो दैवं यथोद्योगवान्
क्रोधाक्रान्तमनल्पदं प्रभुमिवासेवन्त वह्निं जनाः।
लोकोऽश्लिष्यदर्पः[1]सकम्पपुलकस्त्रस्यन् परस्त्रीर्यथा
नामुञ्चन् कृपणा इवार्थमभिकाः कान्तास्तनं तन्वपि।।११३।
उदञ्चितकरं किञ्चित् सर्वतो रविमुन्मुखाः।
अभ्यधावन् जनाः प्रातर्दातारमिव भिक्षुकाः।।११४।
यौवने यां प्रियोऽमुञ्चत् कामकाण्डे नवेऽपि ताम्।
हिमं विमन्थति स्मोग्रं कामकाण्डेन वेपिताम्।।११५।
विकचलोध्ररजःपरिपाण्डुरा नवलवङ्गलतोद्गतसौरभाः।
किमु दलत्फलिनीकुसुमासिता न हरितो हरितोषमजीजन्।।११६।
गिरिसुतापतिहाससमुज्ज्वलं विकचकुन्दवनं स विलोकयन्।
[2]त्रिजगतीयमजातममन्यत स्मरयशोरयशोधितभूतलम्।।११७।
सपदि पाशिदिशः शिशिरार्दितं स्तनतटीः परिरब्धुमिवागतम्।
वनविहारकृतां हरिणीदृशामुपवनंपवनं बुबुधे हरिः।।११८।
मदनकेलिकलासु विलासिनो निदधतां न मनः किमनारतम्।
यदनिलोऽप्यधरक्षतमाचरन् नहि मतो हिमतो मदकृत्परः।।११९।
सुरतसङ्गरयोग्य उरश्छदः शिशिरदोषहरो हरिणीदृशाम्।
स्तनतटीषु विभूषणतां सदा मृगमदोऽगमदोज इवातनोः।।१२०।
अपरुषापरुषादितरद् वदन् प्रमदयाऽमदयाचितचुम्बनः।
न सुरयासुरयादनुरक्तया प्रियतमोयतमोहमचुम्ब्यत।।१२१।

---

१. -दयः। २. त्रिजगतीयजात-।

दारुणे वारुणे वाते वाते शीतप्रवर्द्धिनि ।
मानिन्यै यः स्वयं भर्तुरन्तिकं परिरिप्सया ॥१२२॥

(कर्तृक्रियागुप्तम्)

नीहारसलिलैरार्द्राश्लथश्चानिलैरति ।
कल्पस्नानकृतः शङ्के शालीनः शिशिरे कृशान् ॥१२३॥
स्तम्बेरमा रमाभर्तुः सन्ततं मन्दगामिनः ।
मोदं गता भारमधुः शीतकाले क्रमेलकाः ॥१२४॥

(अर्द्धमात्रा बिन्दुमात्राच्युतकम्)

शेषः शिशुं शशी शाशं शं शं शीशं शशौ शिशुः ।
श शां शौ शी श शां शे शं शे शुः शा शा श शाः श शाः ॥१२५॥

(एकाक्षरम्)

विहाय विश्वं शतकैः सरस्सु वनावनद्धेषु विशेषसक्तम् ।
पश्यंस्तपस्याहितवृत्तिशीतं मेने मुकुन्दो जरया विरक्तम् ॥१२६॥

(कविकाव्यनामाङ्कः षडक्षरश्चक्रबन्धः

प्रज्ञं देवभुजप्रमेयचरितं शुद्धप्रभं जन्मना
जन्मावस्थितिनिर्गतप्रचयदं यं चन्द्रभाकृत्परा ।



नम्रं राजति रुद्रभाःप्रचरिता श्रीपूःसुनीतिः पदे
देवैः स प्रणुतो जगाम नगरीं नाना नराणां मुदे ।।१२७।
विकसन्नयनाम्भोजो निशम्य शिशिरश्रियम् ।
अदूराद् द्वारकां पश्यन् ननन्द यदुनन्दनः ।।१२८।
अपूरयत् पूर्णमनोरथानां सेना जनानां मदयन्मनांसि ।
सपाञ्चजन्यं नगरोपकण्ठे सौधप्रतिध्वानगभीरनादम् ।।१२९।
उषामुपादाय सहानिरुद्धो विजित्य बाणासुरमेति कृष्णः ।
निशम्य दूतैरिति कीर्त्यमानं सबालवृद्धं पुरमभ्यधावत् ।।१३०।

अथ वसुदेवोग्रसेनप्रमुखाः सात्वतप्रवयसः कृतविविधमङ्गलोपचारा-भिरनेकोपायनपाणिभिः प्रकृतिभिरनुगम्यमाना बहिर्नगरं वासुदेवमुपातिष्ठन्त । स तु दूरादुद्वीक्ष्य त्यक्तवाहनः सविनयं प्रणनाम । ताभ्यां चिरादालिङ्ग्य सस्नेहमिदमभिदधे–

विना जलं के कासारा वासराः के रविं विना ।
के [1]देहिनो विना देहाः कृष्ण के त्वां विना वयम् ।।१३१।

हरिरवोचत्–

प्रभावैरेव यौष्माकैर्जितो बाणासुरो युधि ।
वध्वा सहानिरुद्धोऽयं वयं च मे निरामयाः ।।१३२।

ततो यथायथं [2]नत्याशिषौ प्रयुज्य मुदितमानसाः सर्वे पुरीं प्राविशन् ।

द्वारि द्वारि धृतैः सुवर्णकलशै रम्भायुगैस्तोरणै
रम्यां श्रेणिवणिग्गणेन नमता नानोपदापाणिना ।
पश्यंस्तां नगरीं सरोरुहदृशामाचारलाजैश्रितः
प्रापन्मञ्जुमृदङ्गमङ्गलरवं स्वं सद्म पद्मापतिः ।।१३३।

अथ कोकिलगीतयो विचित्रवसनाभरणाः सहस्रशो हरिणदृशो माणिक्य-दीपैर्दम्पती नीराज्य सकुलाचारमन्तरनयन् । अनिरुद्धः क्रमेण कुलजरतीः प्रणम्य जनन्याः पादपद्मे जग्राह । सा तु प्रमोदवाष्पस्नपितहारावलिः सुधासागरमग्नेव विगलितविश्वविभ्रमेव चिन्मात्रस्वरूपावस्थितेव क्षणं न किञ्चिद् व्यजानात् । ततः सुतं मूर्द्धन्याघ्राय [3]स्नुतस्तनी चिरमालिलिङ्ग । न च मेने कमपि जन्मिनं त्रिलोक्यां स्वतोऽधिकभाग्यभाजम् । सर्वाः श्वश्रूः प्रणिपत्य स्थलकमलकोमल-करतलकलिताङ्घ्रिं प्रणमन्तीं स्नुषामाशिषाभिननन्द ।

---

१. देहिनां देहाः । २. तत्याशिषौ । ३. स्तुतस्तनी ।

[1]अस्याश्चेद् वदनं वृथा शशधरो व्योमाङ्गनं गाहते
देवच्छन्दमुदीक्ष्य नास्तमयते तारातितिर्वा कुतः ।
सम्मीलन्तु सरोरुहाणि नयने पद्मायताक्ष्यास्तनोः
कान्तिश्चेत् कनकं किमर्थमिति तां दृष्ट्वाऽवदन्नङ्गनाः ।।१३४।

रूपमिवास्याः शीलं शीलमिवानुपममस्ति रूपं च ।
इतरेतरमिति नार्यः शशंसुरेनां समवलोक्य ।।१३५।

अथ वैनतेयं विसृज्य वासुदेवः सह बन्धुभिः सुधर्मामधिष्ठितो द्विजबन्दिमागधेभ्यो यथाभिलषितं विश्राणयन् दिगन्तागतानां नटनर्त्तकानां विविधकौतुकैः सुरतपोधनानां साधुवादैर्मोदमविन्दन् । न विरराम चिरादनिरुद्धपरिणयजन्मा महोत्सवः ।

कुवलयदृशं लब्ध्वा त्रैलोक्यसारतनुश्रियं
विरहगुणितैस्तत्तत्क्रीडाविशेषविचेष्टितैः ।
समयमनयत् कान्त्या ख्यातोऽखिले जगतीतले
सुखमनुभवन् पारेवागर्णवं स्मरनन्दनः ।।१३६।

कविमौलिमणेर्जयन्ति वाचो मुनिवर्यस्य पराशरप्रसूतेः ।
अनुगामितया चिराय यासां भुवि धास्यन्ति मदुक्तयः प्रतिष्ठाम् ।।१३७।

इति श्रीदेवराजनिबद्धे काशिकश्रीवागीशशास्त्रीत्युपनामकेन
पण्डितश्रीभागीरथप्रसादत्रिपाठिना संशोध्य परिष्कृतेऽ-
निरुद्धचरितेऽनिरुद्धपरिणयो नाम नवम उच्छ्वासः ।।
इत्यनिरुद्धचम्पूः सम्पूर्णा ।। सं० १८५७ ।



१. अस्याश्चद्वदनं ।

# सुभाषितानि

पिपीलिकासङ्घसमाकुलस्य दशामसौ विन्दति पन्नगस्य (६,११९)।
व्यक्तो वरं दूरतरं भुजङ्गो हताहतस्तु प्रसभं भयाय (६,१२०)।
प्रत्यक्षदृष्टोऽपि करी तार्किकैरनुमीयते (६,२१)।
संवृतोऽपि वसनैः प्रयत्नतः सत्वरं भवति नोच्छिखः शिखी (६,२६)।
पराजयो हि प्रमदाजनेभ्यो जयादपि प्रीतिमुरुङ्करोति (४,१५२)।
कामं मुनेरपि मनो विकरोति वेगात् (३,९३)।
किन्न नर्मसचिवायते गुणैः (३,९९)।
मोहयन्ति वनिताः समन्ततः (३,११०)।
य उदेति तमेव वन्दते नियतं रागविमोहितो जनः (४,१०)।
नहि करीन्द्रेषु शूरायमाणः कण्ठीरवः स्वचपेटाधिकं सहायमपेक्षते (१४६ पृ.)।
लोकोऽयं स्वार्थशृङ्खलाबद्धः (६,६०)।
किन्तु दुर्मित्रसम्पर्कात् ततोऽप्यापद् गरीयसी (६,६१)।
अविनीतात्मनः शास्त्रमरण्यरुदितं ध्रुवम् (६,१०८)।
दुर्मेधसि प्रभौ सर्वं राज्याङ्गमवसीदति (६,१०९)।
नृपतिः स्वयमक्रियोऽप्रबोधः सचिवानां करकटुकत्वमेति (६,११०)।
मृदुर्वचसि कर्कशो धनुषि दुःसहस्तेजसि
   क्षमी नमति लम्पटो यशसि दारुणो द्वेष्टरि
गुरुर्मनसि सुस्थिरो विपदि निर्मदः सम्पदि
   श्रियो भवति भाजनं पुरुषपुङ्गवः कश्चन॥(६ए१११)।
अल्पोऽपि विवरं प्राप्य महतो व्याकुलत्वकृत् (६,५४)
दुर्लङ्घ्यः परमिह देहिनां स्वभावः (५,११४)।
नियतं स्वार्थपराः स्मरातुराः (६,६९)।
परिणतिरात्मन एव कर्मणां व्यथति जन्तुमतिप्रविक्रिया (६,३३)।
योषितामकरणीयमस्ति किम् (६,७१)।
द्विर्बद्धमुद्धुरधियो हि सुबद्धमाहुः (९,४९)।
धिक् तद् बलं येन न निःसपत्नं
   धिक् तद् धनं येन न दानभोगौ।

धिक् तच्छ्रुतं येन गतो न मोहो
 धिक् तत् तपो येन मनो न शुद्धम्।।६,९०।
अदृष्टं हि पुरुषाकारमन्तरेण नार्थान् निर्मातुमीष्टे (९० पृ.)।
किं नाम प्रतिभावतामसाध्यम् (९१ पृ.)।
संसारदोलामारूढो नह्युच्चैरेव तिष्ठति (६,५३)।
नहि शास्त्रे पराभूतो गालिभिर्जयमश्नुते (६,६४)।
तेजस्विनो न खलु नाम परप्रतीक्षाः (६,६७)।
तेजस्विनो हि न सहन्ति परस्य तेजः (६,९६)।
दैवमात्रगम्येऽर्थे पुरुषप्रयत्नः कथं क्रमताम् (९१)।
को हीन्द्रियार्थमुपभुज्य लभेत शान्तिम् (५,१११)।



# पाठभेदनिदर्शनम्

| मातृकाधृतपाठः | संशोधितः पाठः |
| --- | --- |
| उदग्रशीर्णेतन (१,८) | उदग्रशीर्षण्य [शीर्षण्य-स्थाने शीर्णेतन] |
| गोदावरीयरुदार (१,११) | गोदावरीतनुरुदार [तनु स्थाने य] |
| युद्धनांहिपंचकेशिनी (१,७८) | युध्यतां हि यं च केशिनी [त स्थाने न, य स्थाने प] |
| इंदवेद (१,८९) | प्रियंवदे [प्रियंवदे स्थान इंदवेद] |
| वितरांमिधुपर्क (१,९०) | वितार्यं मधुपर्कं [वितार्यं स्थाने वितरांइ] |
| मणीमीसारंमणि (१,१०८) | मणीमासारं मणि- [मासारं स्थाने मासांर। अनुस्वरविपर्यय] |
| वाद्यमानासु...... (२,१८ लोऽन्तरं गद्यम्) | वाद्यमानासु भेरिषु [भेरिषु-पाठलोपः] |
| श्रीपथाः (२,१८) | श्रीर्यथा [र च्युतिः] |
| ....चिदुभयतः (२,१८ तः परवर्ति गद्यम्) | क्वचिदुभयतः [क्व-अक्षरच्युतिः] |
| जलभिरिव (२,१८ तः परवर्ति गद्यम्) | जलधिरिव [ध स्थाने भ] |
| काल करार्या (२,२६ तः परवर्तिं गद्यम्) | कालकर्ण्या [ण स्थाने रा] |
| -मुक्ताभिरुमा (२,२८) | -मुक्तभिरुग्रा [ग्रा स्थाने मा] |
| दीर्घानिमेषनयनं (२,३८) | दीर्घं निमेषनयनं [ꣳ स्थाने आ] |
| विवृद्धतेजा (२,५६) | विबुद्धतेजा [बु स्थाने वृ] |
| म्लाग्रि- (३० पृष्ठे) | म्लानि- [नि स्थाने ग्रि] |
| व्यायेषु (....३० पृष्ठे) | व्यामेषु [म स्थाने य] |
| गुणनिमित- (२,५८.....) | गुणनिमित्त- [त्त स्थाने त] |
| व्यायेषु (...... ३० पृष्ठे) | व्यामेषु [म स्थाने य] |
| वलग- (...... ३१ पृष्ठे) | वलय- [य स्थाने ग] |
| स्फटिं (२,६०.....) | स्फुटं [टं स्थाने टिं] |
| मञ्जुलतात्रसर्गतः (२,६२) | मञ्जुलतात्र निसर्गतः [नि अक्षरच्युतिः] |
| अलिकंसुज्जलमुन्नतमाबभौ (२,६२) | अलिकमुज्ज्वलमुन्नतमाबभौ [अनुस्वाराधिकाम्। म स्थाने स। व अक्षरच्युतिः] |
| सुतनुमानपरुः(२,६४) | सतनुमानतरोः [उ अक्षराधिक्यम्] |
| ननासिका (२,६६) | न च नासिका [च अक्षरच्युतिः] |
| हरिहृदयहकाभासु (३४ पृष्ठे) | हरिहृदयपट्टकाभासु ['द' अक्षरच्युतिः, दृ-स्थाने हकारः] |
| इवातिष्ठम् (२,७९ श्लोकतः परतः) | इवातिष्ठन् [नकारस्थाने मकारः] |
| नन्दनोद्यानभ्रमणीमनु (३५ पृष्ठे) | नन्दनोद्यानभ्रमणमनु- [ईकारस्याधिक्यम्] |
| मञ्जुघोषायासमेन (.....) | मञ्जुघोषायासेन [से स्थाने समे] |
| -पीयाधरं (२,८१) | प्रपीयाधरं ['प्र' अक्षरच्युतिः] |
| न मनाकाम- (२,८१ पद्यानन्तरम्) | न मनाक् काम- [क् अक्षरच्युतिः] |
| -दीर्घिकासुमप्युयनिहितं (३७ पृष्ठे) | दीर्घिकासु सुममप्युपनिहितं [अक्षरद्वयच्युतिः] |
| स्वैरिणीरनुरारद्यमानासु (३७ पृष्ठे) | स्वैरिणीरनुराराध्यमानासु ['ध्य' स्थाने 'द्य' पाठः] |
| चाप्युदे (२,११३) | चाप्युदं [अनुस्वारस्य स्थान एकारः] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| विकपिता (२,१३३) | विकम्पिता [अक्षरच्युतिः] |
| भामिनीभालालम् (२,१३५) | भामिनीभाललामम् [अक्षरच्युति] |
| वेगात्मविशति (२,९०) | वेगात् प्रविशति [प्र इत्यस्थाने 'त्म'] |
| एषापिदधति (२,१११) | एवापिदधति [वकारस्य स्थाने मकारपाठः] |
| -मिचुलिपृष्ठभागः (४३ पृष्ठे) | -निचुलितपृष्ठभागः [नकारस्य स्थाने मकारपाठः] |
| गौरोगव- (४४ पृष्ठे) | पौरोगव- [गव स्थाने पकारः] |
| विश्रान्तिमपमलभमानो (४४ पृष्ठे) | विश्रान्तिमलभमानो [अक्षराधिक्यम्] |
| सिद्धौषवैर- (४४ पृष्ठे) | सिद्धौषधैर- [धकार स्थाने वकारः] |
| प्रमदवदनविनोदे (३,९) | प्रमदवनविनोदे [अक्षराधिक्यम्] |
| सर्वयथानपरिमला- (४७ पृष्ठे) | सर्वपथीनपरिमला- [यकार स्थान पकारः] |
| गस्त्यनियेपि (४८ पृष्ठे) | गस्त्यनित्येऽपि [त् अक्षरच्युतिः] |
| -मद्रदयन् (४८ पृष्ठे) | -मद्रढयन् [ढ- स्थाने दकारः] |
| वनापालोपनीफल- (४८ पृष्ठे) | वनपालोपनीतफल- [अक्षरच्युतिः] |
| स्मरन्नभोजाक्ष्याः (४९ पृष्ठे) | स्मरन्नाम्भोजाक्ष्याः [अक्षरच्युतिः] |
| -कौशलभूम्नौ (३,१७) | कौशलभूमौ [अक्षराधिक्यम्] |
| खिंग (३,२९) | षिङ्ग [षकारस्य स्थाने खकारः] |
| -मज्ब- ( | -मब्ज- [वर्णविपर्ययः] |
| वभूमिव | वधूमिव [धकार स्थाने भकारः] |
| मिर्गतै- | निर्गतै- [नकारस्थाने मकारः] |
| वानरधूर्तनिभूतः | वानरधूर्तनिभृत [ऋकार स्थाने 'ऊकारः'] |
| सज्य | सज्ज- [जकर स्थाने यकारः] |
| -मपयाति (३,६३) | -मयताति [पकार स्थाने यकारः। यकार स्थाने तकारः] |
| -मरीरजाम (५७ पृष्ठे) | मरीरराम [र स्थाने ज] |
| -श्रातवक्कुला (५८ पृष्ठे) | स्नातकवकुला [सकार स्थाने शकारः] |
| वनमालिनीवः (३,७०) | वनमालिनीव [विसर्गाधिक्यम् ] |
| नमः (३,७५) | नभश्छा- [भकार स्थाने मकारः] |
| तामिमानन्दं (३,८१) | तामिममानन्दं [म अक्षरच्युतिः] |
| माधदान (३,९१) | माद्यद्द्राविड [द्य स्थाने धकार पाठः] |
| अङ्गरितेषु (३,८४) | अङ्गारितेषु [मात्राच्युतिः] |
| बिभ्रते खिदंन्तये (३,९६) | बिभ्रतेऽन्ये खिदन्ते [पूर्वपदान्तस्य 'अन्ये' इति पदमुत्तरपदान्ते योजितम्] |

ग्रामखिंग (३,१००)ग्रामषिङ्ग [लिपिकराः षकारस्य स्थाने खकारमुच्चारयन्ति तथैव च लिखन्त्यपि। पाषण्डस्य स्थाने पाखण्ड लेखनाद् द्विविधोऽजनि पाठो ग्रन्थेषु लिपिकराणां प्रमादात्]

| | |
|---|---|
| -शोभिस्तनारू (३,१०७) | शोभितस्तनाः [तकारच्युतिः] |
| -लोलहोलया (३,११२) | -लोलदोलया [दकारस्य स्थाने हकारः] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| मारन्द- (३,११९) | माकन्द- [ककारस्य स्थाने रेफः] |
| उद्यानेद्यत- (३,१२७) | उद्यानोद्यत [ओकारस्य स्थाने एकारः] |
| ह्रापौटपार्का (३,१२८) | हा पौटपाकां [अतिरिक्तो रेफः, अतिरिक्तो रेफः पुनः] |
| कृताद्योऽपि (४,७) | कृतार्थोऽपि [थ स्थाने द्य] |
| -रग्र्याहितैः (४,११) | -रग्न्याहितैः [न स्थाने रेफः] |
| चीकारिणीषु (७० पृष्ठे) | चीङ्कारिणीषु [ङ् च्युतिः] |
| निशानटाः (७० पृष्ठे) | निशाटनाः [वर्णविपर्ययः] |
| नूघाटितम् (६९ पृष्ठे) | नूद्घाटितम् [दकारस्य च्युतिः] |
| विरसाखभिसारिकासु (७० पृ.) | विरसास्वाभिसारिकासु ['स्व' इत्यत्र 'ख' इति पाठः] |
| -जल्यांक- (७० पृष्ठे) | -जल्पाक- [प स्थाने 'य'। अनुस्वारस्याधिक्यम्] |
| भानुभोज्यराजन् (४,२०) | भानुभाञ्यराजन् [ओकाराधिक्यं ञकारच्युतिश्च] |
| -मनोमवरसो- (७२ पृष्ठे) | -मनोभवरसो- [भ स्थाने म] |
| तैद्युलंघन (७२ पृष्ठे) | तैर्दुर्लङ्घन- ['दु' स्थाने द्यु रेफद्वयस्य च्युतिश्च] |
| -रव- (७२ पृष्ठे) | स्व [स स्थाने र] |
| नगिरन्नुदीयनवटी (४,३४) | न गिरं नु दीपनवटी [प स्थाने य] |
| पदंधकार- (४,३८) | यदन्धकार- [य स्थाने प] |
| मथानाचलघर्षणकिणं (४,३९) | मन्थानाचलघर्षणस्य च किणं ['स्य' 'च' इत्यनयोः च्युतिः] |
| इंदेदिर- (४,४२) | इन्दीवर- [दी स्थाने दे, व स्थाने दि] |
| हारमष्टि (४,४९) | हारयष्टि [य स्थाने म] |
| कथंचिदुयताम् (४,२९) | कथञ्चिदुप्यताम् [प् च्युतिः] |
| -रतंगो (४,६१) | -रनङ्गो [न स्थाने त] |
| प्रकृतिमाय (४,६३) | प्रकृतिमाप्य [प् च्युतिः] |
| किंतु (४,६५) | किं नु [नु स्थाने तु] |
| विहिसनातशङ्कः (४,६७) | विहितासनशङ्कः [अक्षरव्यत्ययः] |
| कश्चिदंचलमधजसहेलं (४,६७) | कश्चिदञ्चलमधोजमहेलं [ओकारच्युतिः, म स्थाने स] |
| पिदधेक्षिप्रगं (४,७१) | पिदधेऽक्षियुगं (यु स्थाने प्र) |
| सुरयायां (४,७९) | सुरपा यां [प स्थाने य] |
| -नाशु पीतमदिराक्ष्यः (४,८२) | -नाशु पीतमदिरा मदिराक्ष्यः [मदिरा-शब्दच्युतिः] |
| साधुसंमदनदीं कि जगादे (४,८६) | शीधुसंमदनदीं किं जगाहे [शीधु स्थाने साधु, हे स्थाने दे] |
| प्रादुष्करोविताम् (४,९९) | प्रादुष्करोति ताम् [ति स्थाने वि] |
| धर्तुविवमर्ध्यते (४,१०१) | धर्तुर्बिम्बमहर्पतेरपि [ह स्थाने ध] |
| कन्दशः (४,१०२) | कन्दराः [रा स्थाने शः] |
| -प्रखरकरद्वादशादित्यतेजाः (४,१०६) | -प्रखरकरमहाद्वादशादित्यतेजाः ['महा' इति च्युतिः] |
| निर्णलखलो (४,१०७) | निराविलबलं [भ्रष्टःपाठः] |
| समादुस्तयं (८१ पृ.) | समा दुस्तपं [प स्थाने य] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| वात्सप्ल- (४,१०८) | वात्सल्य- [वर्णविपर्ययः] |
| क्षणमक्षरसायंकादक बिलु (८२ पृष्ठे) | क्षणमप्सरसामङ्कादङ्कं बिलु [प्स स्थाने क्ष, म स्थाने य] |
| ततनु (४,१०९) | सुतनु ['सु' स्थाने 'त'] |
| वदीकृते (४,११५) | वन्दीकृते [नकारच्युतिः] |
| विवे (४,११५) | बिम्बे ['म' च्युतिः] |
| वहनौ (४,११८) | वहन्तौ ['त्' च्युतिः] |
| हिरण्मद्यौ (४,१२३) | हिरण्मयी [यी स्थाने द्यौ] |
| परः सस्रैः (४,१२३) | परः सहस्रैः ['ह' अक्षरच्युतिः] |
| आचास- (४,१२६) | आवास- ['व' स्थाने च] |
| चेतसिंचेतयेहम् (४,१२६) | चेतसि चेतयेऽहम् [अनुस्वाराधिक्यम्] |
| तदंव्री (४,१२८) | तदग्रङ्घ्री [घ्री स्थाने व्री] |
| नर्खाव्युभिर्नन्न (४,१२८) | नखांशुभिर्नम्र [शु स्थाने व्यु, म स्थाने न्न] |
| कलहंससंस | कलहं शशंस [शद्वयस्थाने सद्वयम्] |
| सुरभपत्य (४,१३२) | सुरभयत्य [य स्थाने प] |
| सीषंत- (४,१३३) | सीमन्त- [म स्थाने ष] |
| -पष्टिः (४,१३३) | -यष्टिः [य स्थाने प] |
| -रोषितापि (४,८४ पृष्ठे) | रोपितापि [प स्थाने ष] |
| चिनय- (४,८४ पृष्ठे) | विनय- [वि स्थाने चि] |
| कत्यकातः (४,८४ पृष्ठे) | कन्यकातः [न स्थाने त] |
| नहा- (४,१३७) | नहि- [इ च्युति] |
| समंताबुद्धीवि (४,१४९) | समन्तादुद्धावि- [दु स्थाने बु] |
| शिवोक्षरोभिर्यतः (४,१५१) | शिवोऽप्सरोभिर्यतः [प्स स्थाने क्ष] |
| कपटेनाधतयताश्विरेण (४,१५६) | कपटेनाधत्त यत् ताश्विरेण [अक्षरच्युतिः] |
| खात्यामनकैः (४,१६३) | स्वात्यामनेकैः [स्व स्थाने ख एकारच्युतिश्च] |
| विश्विति (८७ पृष्ठे) | विश्वसिति [स अक्षरत्रुटिः] |
| स्राति (८७ पृष्ठे) | स्नाति [न स्थाने र पाठः] |
| सहाश्राति (८७ पृष्ठे) | सहाश्नाति [न स्थाने र पाठः] |
| स्नेहवतामवरतु | स्नेहवतामवतरतु [त अक्षरच्युतिः] |
| जगुक्ष्यमान- (८८ पृष्ठे) | जुगुप्स्यमान [प्स्य स्थाने क्ष्य] |
| मच्यलीयत | मय्यलीयत [य स्थाने चकारः] |
| हृद्रोगवदुःखदायिनः | हृद्रोगवद् दुःखदाधयिनः [द च्युतिः] |
| प्रतीक्ष्यतो (८८ पृष्ठे) | प्रतीक्ष्यताम् [ताम् इत्यत्र तो प्रयोगः] |
| सहासमब्रकत् (८८ पृष्ठे) | सहासमब्रवम् [ब्र स्थाने क] |
| युदमायसा चिरम् (४,१६५) | मुदमाप साऽचिरम् [मु स्थाने यु, पस्थाने य] |
| वेषितम् (४,१६७) | वेपितम् [त स्थाने ष] |

| मातृकाधृतपाठः | संशोधितः पाठः |
| --- | --- |
| निमन्मतीतनु (४,१६८) | निमज्जती तत्तनु [ज्ज स्थाने न्म पाठः] |
| चन्दाराविन्दवातां सुभय (८९ पृष्ठे) | चन्दनारविन्दवातांशु [शु स्थाने सु, न च्युतिः] |
| महेशकान्तया (९१ पृ.) | महेशकान्ततया [त अक्षरच्युतिः] |
| - ममुं (९१ पृ.) | मसुं [मुस्थाने सु] |
| द्रुह्येतः (४,१७३) | द्रुह्यतः [अक्षराधिक्यम्] |
| के (९२ पृष्ठे) | कं [मात्राधिक्यम्] |
| - गजः (४,१७३) | -गतः [त स्थाने ज] |
| भाजि (४,१७४) | भाति [त स्थाने ज] |
| मद्राक्षतेन (९४ पृष्ठे) | -मद्राक्षम्। तेन [म् अक्षरच्युति] |
| -तारत्वामुदीक्ष्य (९४ पृष्ठे) | -तारं त्वामुदीक्ष्य [अनुस्वारच्युतिः] |
| -मखिलयजिस्र (९४ पृष्ठे) | मखिलमजस्र- [म स्थाने य। इकाराधिक्यम्] |
| -शीततजलैः (४,१८०) | - शीतलजलैः [ल स्थान तकारपाठः] |
| एका- (४,१८३) | -रावा [रा स्थाने ए] |
| प्रदीयसी (४,१८२) | प्रहीयसी [ह स्थाने द पाठः] |
| सङ्कल्पोपवतैः (४,१८५) | सङ्कल्पोपरतैः [र स्थाने व पाठः] |
| खिन्नतनुः (४,१८८) | स्विन्नतनुः [स्व स्थाने ख] |
| -स्तनौ (४,१९०) | ताम्यस्तनौ [अयमंशः पाण्डुलिपावविद्यमानो मया संनिवेशितः] |
| शुकसारिकांच (४,१९४) | शुकसारिकाश्च [श्च स्थाने च, अनुस्वाराधिक्यम्] |
| वारिविधेः (४,१९५) | वारिनिधेः [न स्थोन व] |
| क्रौपां (४,१९५) | क्रौर्यं [य स्थाने प] |
| त्रुटिरितपोरताप- (४,१९६) | त्रुटिरितरयोस्ताप- [र च्युतिः। स स्थाने र। त च्युतिः] |
| स्पन्दमानसुचित्रं (४,१९६) | पदच्छेदे क्लेशः। स्पन्दमानासु चित्रं वा स्पन्दमाना सुचित्रं |
| तावदेकम्पाः (४,१९८) | तावदेवानुकम्पाः [वा नु अक्षरच्युतिः] |
| किंतु (४,२०१) | किं नु [नु स्थाने तु] |
| विधेरभिमजः (९६ पृ.) | विधेरभिमतः [त स्थाने ज] |
| मोहश्चे (४,२०२) | मोहश्चेदं [दं इत्यक्षरच्युतिः] |
| हियमकृतकारं (४,२०२) | हिममकृतकारं [म स्थाने य] |
| रुन्धतावत्तमः (४,२०३) | रुन्धत् तावत् तमः [त् अक्षरच्युतिः] |
| सभाया (४,२०८) | सभा [एकाक्षराधिक्यम्] |
| दते (४,२०९) | दत्ते [त् अक्षरच्युतिः] |
| भाविनि (४,२११) | भामिनि [म स्थानं व] |
| निर्बिरीसेन (१०० पृष्ठे) | निबिरीसेन [रेफाधिक्यम्] |
| बहुल- (१०० पृष्ठे) | बहल- [उकारमात्राधिक्यम्] |
| यत्रचरः (१०० पृष्ठे) | यत्र च परः [प अक्षरच्युतिः] |
| -परम्पराः (१०० पृष्ठे) | -परम्परा [विसर्गाधिक्यम्] |

| मातृकाधृतपाठः | संशोधितः पाठः |
| --- | --- |
| -स्तंभेद्येव (१०० पृष्ठे) | स्तम्भेष्वेव [ष्वे स्थाने द्ये] |
| समं ततः (५,५) | समन्ततः [पदद्वये साधुत्वमिव लक्ष्यते] |
| जनमभ्येत्यमुंचरन्ती (५,८) | जनमभ्येत्य सूच्चरन्ती [सू स्थाने मुं] |
| विरज्वरानसहंत (पृष्ठ १०२) | विरहज्वरानलमसहन्त ['ह' 'लम' अक्षरच्युतिः] |
| -तुल्याननाया (५,११) | तुल्यानना या [पदच्छेदभ्रान्तिः षष्ठी वा प्रथमा] |
| -सन्ततिगुरुहस्तौ (५,१२) | -सन्ततिगुरू हस्तौ ['उ' अक्षरच्युत्या पदच्छेदभ्रान्तिः] |
| मदाक्षमेद- (१०२ पृ.) | मन्दाक्षमिद- ['न्' अक्षरच्युतिः। इ स्थाने 'ए'] |
| -केलिलाः (५,१७) | -केलिविमलाः ['विम' अक्षरच्युतिः] |
| सुणांमाभिः (५,१९) | सुराङ्गनाभिः ['राङ्गना' इति स्थाने णांमा पाठः] |
| यौवत- (५,१९) | यौवन- [न स्थाने त] |
| -रेवोऽपि (५,१९) | रेकोऽपि [क स्थाने व पाठः] |
| -परिणयमाचारामुना (५,२०) | -परिणयमाचरामुना [अ मात्राधिक्यम्] |
| मन्दमभिहितचत्या (१०३ पृ.) | मन्दमभिहितवत्या [व स्थाने च पाठः] |
| धातुविषम- (५,२१) | धातुर्विषम [रच्युतिः] |
| -मन्वभूवन् (५,२४) | -मन्वभूवम् [म् स्थाने न्] |
| तारजतिमि- (५,२५) | तारततिभि- [त स्थाने ज; भ स्थाने म] |
| गुरुधूमधूमः (५,२७) | गुरुधूपधूमः [प स्थाने म] |
| सुधाशुम् (५,२९) | सुधांशुम् [अनुस्वारच्युतिः] |
| नितंबविचे (५,३७) | नितम्बबिम्बे [म् अक्षरच्युतिः, ब स्थाने च] |
| -कान्तिजालेलक्षकः (५,४०) | कान्तिजालेऽवलक्षकं [ व च्युतिः, अनुस्वारस्थाने विसर्गः] |
| -माघंतो (५,५०) | माद्यन्तो [द्य स्थाने घ] |
| प्रविशेनववध्वा (१०६ पृष्ठे) | प्रविशेन्न वध्वा [न च्युतिः। व आधिक्यम्] |
| -तरङ्गीत- | -तरङ्गित [इ स्थाने ई] |
| निरैक्षत् (५,५५) | निरैक्षत [त स्थाने त्] |
| तरुणिम्णो (५,५६) | तरुणिम्नो [न स्थाने ण] |
| -मदिषातां (५,५६) | -मदिशाताम् [श स्थाने ष] |
| -मोहनमाहौषधी | मोहनमहौषधी [आकाराधिक्यम्] |
| धीरताववष्टंभेन (१०७ पृष्ठे) | धीरतावष्टम्भेन ['व' आधिक्यम्] |
| व्रीडयस्या (१०७ पृष्ठे) | व्रीडामस्या [आकारच्युतिः, म स्थाने य] |
| समुचितावरं (१०७ पृ.) | समुचितावसरम् [स अक्षरच्युतिः] |
| श्रीमतौ (१०७ पृ.) | श्रीमतीं [ई स्थाने औ] |
| निद्रयानभिगतस्त्वनिमान- (१०७ पृ.) | निद्रयानभिगतस्तनिमान- [त स्थाने त्व पाठः] |
| -वात्सीच्चं (३,५७) | -वात्सीच्चिरं [चिरं स्थाने च्चं] |
| नूतमरन्दमतमधुपः (५,५८) | चूतमरन्दमत्तमधुपः [चू स्थाने नू। एकतकारच्युतिः] |
| -वर्तिनृव्यवेचि (५,५९) | -वर्तिना न व्यवेचि [ना न स्थाने नृ] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| विषमंजल (५,६०) | विषमञ्जुल [उ च्युतिः] |
| कुणं नेत्रे (५,६३) | कुणन्तु नेत्रे [तु च्युतिः] |
| विशंकें- (५,६३) | विशङ्क- [ एकाररेफावधिकौ] |
| सुधासमुद्रो ऊत- (५,६४) | सुधासमुद्रोद्धत- [द्ध स्थाने ऊ] |
| स्मरैत्वाद्धुव- (५,६९) | स्मरत्वाद् ध्रुव- [ऐ-अधिकः, रच्युतिश्च] |
| -मण- (५,७०) | -कण- [क स्थाने म] |
| पयातोत्सुके (५,७१) | प्रयातोत्सुके [र च्युतिः] |
| पर्यंककृमानीतकमानीता (१०९ पृ.) | पर्यङ्कमानीता [कमानीता इव्यधिको द्विरावृत्तः पाठः] |
| -दत्तविस्त्रभा (१०९ पृ.) | दत्तविस्त्रम्भा [म् च्युतिः] |
| प्रपंचमपंच (१०९ पृ.) | प्रपञ्चय पञ्च- [य स्थाने म] |
| -मानृण्यमंच (१०९ पृ.) | -मानृण्यं च [म अधिकः] |
| -मग्रचूचुकेन (११० पृ.) | मग्नचूचुकेन [न स्थाने र] |
| तुगेरंतरालेन (११० पृ.) | तुङ्गेनान्तरालेन [नान् इति स्थाने रंत] |
| -पाटशावलोक्य (११० पृ.) | -पाटलानवलोक्य [लान-स्थाने शाव] |
| -बुध्यसे तरु- (५,७९) | बुध्यसे नु तरु- [नु-त्रुटितः] |
| बाम्यधुना (५,७९) | वाम्यमधुना [म-अक्षरच्युतिः] |
| नीविंवधनं (५,९०) | नीविबन्धनं [अनुस्वारविपर्ययः] |
| विधद्रद्यति (५,९१) | विघट्टयति [घ स्थाने ध, ट्ट स्थाने द्य] |
| भविदुं (५,९३) | भवितुं [तुं स्थाने दुं] |
| सरजरम्भा (५,९४) | रराज रम्भा [ररा स्थाने सर] |
| विलासन्यवसाः (५,९७) | विलासवत्याः [वत्याः स्थाने न्यवसाः] |
| सं च (५,९९) | मां च [मां स्थाने सं] |
| भूयष्टव (५,१०३) | भूय एव [ए स्थाने ष्ट] |
| शयनमानवभौ (५,१०५) | शयनमाबभौ [ न अक्षराधिक्यम्, ब स्थाने व] |
| दमन्यर- (५,१०७) | दरमन्थर [र च्युतिः। थ स्थाने य] |
| ममावसः (५,१०९) | ममासवः [वर्णविपर्ययः] |
| स्तनैनवै (५,११०) | स्तनौ न वै [नौ स्थाने नै] |
| इती रपित्वा (५,११०) | इतीरयित्वा [य स्थाने प] |
| को हींद्रियार्कसुय भुज्य (५,१११) | को हीन्द्रियार्थमुपभुज्य [र्थ स्थाने र्क, मुप स्थाने सुप] |
| षद्वरावृत्ता (५,११३) | षट्पदावृता [ट् स्थाने द्, पदा स्थाने वरा, त स्थाने त्त] |
| प्रसभु- (५,११४) | प्रसभ- [भ स्थाने भु] |
| पणप्रहस्ये- (५,११९) | पणे प्रहस्ये [णे स्थाने ण] |
| बद्धमन्यत (५,१२३) | बह्वमन्यत [ह्व स्थाने द्ध] |
| -द्रवैलिभेषु (५,१२५) | - द्रवैर्लिप्तेषु [र च्युतिः। प्ते स्थाने भे] |
| शैलेंषु (५,१२६) | शैलेन्द्रेषु [न्द्रे- अक्षरच्युतिः] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| -जननाद्येवूष्मिकां (५,१२६) | -जननाद् येषूष्मिकां [षू स्थाने वू] |
| सा या ह्ना (५,१२९) | सायाह्ना [ह्ना स्थाने ह्ना] |
| वर्गछतः (५,१३२) | वर्गच्छतः [च अक्षरच्युतिः] |
| व्याप्री (५,१२६) | व्याघ्री [घ्र स्थाने प्र] |
| आधूतद्रुममौलपा (५,१४२ | आधूतद्रुममौलया [य स्थाने प] |
| यामि (५,१४२) | यानि [नि स्थाने मि] |
| विधिनेनतरभूतजातम् (५,१४३) | विधिनेतरभूतजातम् [न अधिकः] |
| कां तस्यः (५,१४३) | कान्तस्य [विसर्गाधिक्यम्] |
| भुजगती (५,१४३) | नु जगती [नु स्थाने भु] |
| तस्मादेकः (५,१४६) | न स्यादेकः [न स्थाने त, य स्थाने म] |
| -पदैरुपवर्णयत् (५,१४७) | पदैरुपवर्णयन् [न स्थाने त] |
| वयमपराधुमः (११८ पृ.) | वयमपराध्नुमः [ध्नु स्थाने धु] |
| सनागपि (११८ पृ.) | मनागपि [म स्थाने स] |
| -ज्वालावलीमां (११९ पृ.) | -ज्वालावलीमिमाम् [मि अक्षरच्युतिः] |
| जीवति- (११९ पृ.) | जीवनि- [न स्थाने त] |
| पापीयात् (११९ पृ.) | पापीयान् [न स्थाने त] |
| -मस्यन्य- (११९ पृ.) | -मप्यन्य- [प्य स्थाने स्य] |
| मिशम्म (११९ पृ.) | निशम्य [न स्थाने म, य स्थाने म] |
| उदतिष्ठतदनु (११९ पृ.) | उदतिष्ठत् तदनु [त् च्युतिः] |
| दौत्य (११९ पृ.) | दैत्य [दै स्थाने दौ] |
| कतिपेये (१९९ पृ.) | कतिपय [प स्थाने पे] |
| वेलेपपमा (५,१४८) | वेलेयमा- [अक्षराधिक्यम्। य स्थाने प] |
| यविप्रणात (५, १४८) | पवित्रपात- [प स्थाने य, त्र स्थाने प्र, पा स्थाने णा] |
| -मविष्ठाय (११९ पृ.) | -मधिष्ठाय [धि स्थाने वि, ठ स्थाने ट] |
| न्नत्यजांश्च (११९ पृ.) | न्नत्यजंश्च [अमात्राधिक्यम्] |
| कालापसमयं (११९ पृ.) | कालायसमयं [य स्थाने प] |
| शिनीमुखाली (५,१५०) | सिनीमुखाली [स स्थाने श] |
| समचरम् (१२० पृ.) | समरचन् [न् स्थाने म्] |
| पर्यधावत् (१२० पृ.) | पर्यधावन् [न् स्थाने त्] |
| पूरिताधौः (५,१५१) | पूरिता द्यौः [द्यौ स्थाने धौ] |
| व्यकीर्यते (५,१५४) | व्यकीर्यत [त स्थाने ते] |
| वद्ग (५,१५५) | खड्ग- [खड्ग स्थाने वद्ग] |
| कालं खण्डं (५,१५६) | कालखण्डं [अनुस्वाराधिक्यम्] |
| स्फुरदोष्टः (१२१ पृ.) | स्फुरदोष्ठः [ठ स्थाने ट] |
| समरोयस्वयमुदयुंक्त (१२१ पृ.) | समराय स्वयमुदयुङ्क्त [आ स्थाने ओ; ङ् स्थाने अनुस्वार] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| -प्रमायचपलो (५,१५९) | प्रमाणचपलो [ण स्थाने य] |
| तिष्ट तिष्टेति (५,१६१) | तिष्ठ तिष्ठेति [ष्ठ स्थाने ष्ट] |
| वाहन् (५,१६३) | वाहान् [ा मात्राच्युतिः] |
| समीश्वसिहि (१२३ पृ.) | समाश्वसिहि [मा स्थाने मी; श्व स्थाने श्व] |
| युद्धातिथो (१२३ पृ.) | युद्धातिथौ [औ स्थाने ओ] |
| विश्चित (१२३ पृ.) | विश्रुत [श्रु स्थाने श्चि] |
| धतां (५,१६४) | धत्तां [त् च्युतिः] |
| विविधशादो आपितु (५,१६५) | विधिवशादोजायितुं [जा स्थाने आ; य स्था प] |
| विफलप्रय्यत्न- (१२४ पृ.) | विफलप्रयत्न- ['य्' इत्यतिरिक्तः पाठः] |
| -विक्रयो (१२४ पृ.) | विक्रियो [इकारच्युतिः] |
| रथेषां तस्मं- (५,१७१) | रथेषां तस्य [य स्थाने मं] |
| निशितेना सिनावली (५,१७१) | निशितेनासिना बली [पदच्छेदे दुरूहता] |
| रोवरमसात् (५,१७२) | रोषरभसात् [ष स्थाने व; भ स्थाने म] |
| वच्चास्य (५,१७२) | यच्चास्य [य स्थाने व] |
| दानवयातिं (५,१७८) | दानवपतिं [प स्थाने या] |
| इत्यचरोधवर्गः (५,१७८) | इत्यवरोधवर्गः [व स्थाने च] |
| नापश्यनं (५,१८१) | नापश्यत् [त् स्थाने नं] |
| -प्रभूयत्नः (५,१८३) | प्रभूतयत्नः [त अक्षरच्युतिः] |
| प्राध्वकृत्य (५,१८७) | प्राध्वङ्कृत्य [ङ् अक्षरच्युतिः] |
| चद्ये (१२६ पृ.) | वधे [वधे स्थाने चद्ये; व स्थाने च, धे स्थाने द्य] |
| त्वापति- (५, १८८) | त्वायति- [य स्थाने प] |
| प्रतिपरदेवः (१२७ पृ.) | प्रतिपदं देवः [दं स्थान र] |
| स सचिं न (५,१८९) | स सचिवेन ['वे' इत्यक्षरच्युतिः, अनुस्वाराधिक्यं च] |
| चिते (५,१८९) | चित्ते [त् अक्षरच्युतिः] |
| वाच्यौस्य (५,१९०) | वाच्योऽस्य [ओ स्थाने औ] |
| कृतामूला (१२७ पृ.) | कृत्तमूला [त्त स्थाने ता] |
| तनूमनं (५, १९७) | तन्नमनं [न् च्युति, न स्थाने नू] |
| पुरराव (५,१९९) | पुर एव [ए स्थाने रा] |
| जनवत्सरः (२०१ पृ.) | जनवारवत्सरः [वार च्युतिः] |
| पृमुडदपि तां (५,२०९) | मृडदयितां [मृ स्थाने पृ;मि स्थाने पि] |
| श्यासांमीं (५,२१७) | श्यामाङ्गीं [मां स्थाने सां, ङी स्थाने मीं] |
| प्रबला (५, २१९) | प्रबलां [अनुस्वारच्युतिः] |
| व्यातास्यां (५,२२१) | व्यात्तास्यां [त् च्युतिः] |
| चतुः पथे (५,२२३) | चतुष्पथे [ष् स्थाने विसर्गः] |
| विस्तब्धाः (५,२२३) | विस्रब्धाः [र स्थाने त] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| भक्ता त्वां (५,२२४) | भक्तस्त्वां [स् स्थाने आ] |
| -स्तावते (५,२२५) | -स्तावत् ते [त् अक्षरच्युतिः] |
| मूक्रयत्ययस्ताद् (५,२२६) | मूकयत्यधस्ताद् [ध स्थाने य] |
| चितलौल्यः (५,२२७) | चित्तलौल्यः [त् च्युतिः] |
| हितति हिन्स्राः (५,२२९) | हिंसन्ति हिंस्राः [हिंसन् स्थाने हित; अनुस्वारस्थाने न] |
| विधिवदलिक्षु (५,२३०) | विधिवदलिप्सुः [प्सु स्थाने क्षु] |
| हठेने (५,२३०) | हठेन [ए-अक्षराधिक्यम्] |
| स यदि (५,२३०) | सपदि [प स्थाने य; महती भ्रान्तिः] |
| वत्सलं (५,२३१) | वत्सल- [अनुस्वाराधिक्यम्] |
| एवमास्मिन्नभिष्टुवति (५,१३४) | एवमस्मिन्नभिष्टुतवति [म स्थाने मा, त अक्षरच्युतिः] |
| कोरकोद्रारकारिणः (१३४ पृ.) | कोरकोद्गारकारिणः [ग स्थाने र] |
| विपुलकावलीवंभारनाय (१३४ पृ.) | विपुलपुलकावली बभार नायम् [ पु च्युतिः, अनुस्वाराधिक्यम्] |
| विद्युदद्योत- (१३४ पृ.) | विद्युदपोत [प स्थाने द्य] |
| सम (५,२३६) | मम [म स्थाने स] |
| निसकंटिक्त (५,२४६) | बिसकण्ठिका [ब स्थाने न, ठ स्थाने ट, ण स्थाने अनुस्वारः] |
| यात्राणि (५,२५६) | पात्राणि [पा स्थाने या] |
| -रक्वशेः (५,२५७) | -रवशैः [क अक्षराधिक्यम्] |
| ज्योतिरिंगनाः (५,२५८) | ज्योतिरिङ्गणाः [ण स्थाने न] |
| -कपटातारा (५,२६०) | -कपटास्तारा [स् च्युतिः] |
| जामात्रशोकेन (५,२६१) | जामात्रे शोकेन [ए अक्षरच्युतिः] |
| दधनु (५,२६२) | दधतु [तु स्थाने नु] |
| पयोदानाभोमिर्मदोत्कटाः (५,२६३) | पयोदानामम्भोमिर्मदोत्कटाः [मम् अक्षरच्युतिः] |
| नागायै- (२,२६३) | नागापै- [प स्थाने य] |
| भूमिषू (५,२६५) | भूमीषु [ई स्थाने इ, उ स्थाने ऊ] |
| वियोगिवधवृजिनत (१३८ पृ.) | वियोगिवधवृजिनजनित- [जनि-अक्षरच्युतिः] |
| जीवेत् (५,२६८) | जीवेत् सा ['सा' इति मातृकायां नास्ति] |
| सर्वजगत्प्रशासितुर्नरेक (६,५) | सर्वजगत्प्रशासितुरेक [र्न अधिकः पाठः] |
| मृष्टाति (६,९) | मृष्यति [य स्थाने टा] |
| जातसंभ्रमाः (६,१२) | जातसंभ्रमा [विसर्गाधिक्यम्] |
| पंचेन्द्रियोक्तिव (१४१ पृ.) | पञ्चेन्द्रियोज्झितेव [ज्झिते इत्येतस्य भागस्य हानिः] |
| -मस्तभ्यततततदनु (१४१ पृ.) | मस्तभ्यत तदनु ['त' इत्यधिकाक्षरम्] |
| व्रजथ न (६,१४) | व्रजसि न [सि स्थाने थ] |
| पथाः (६,१७) | यथा [य स्थाने प; विसर्गाधिक्यम्] |
| -मन्वरुपेव (६,१९) | -मन्वहमेव ['हमे' स्थाने रुपे] |
| नु (६,२३) | ननु [न अक्षरच्युतिः] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| कदर्थने (६,२५) | कदर्थिने [इ च्युतिः] |
| त्वमयि (६,२६) | त्वमपि [प स्थाने य] |
| मृदुः (६,२८) | मृदु- [विसर्गाधिक्यम्] |
| अनुपपनी (६,३०) | अनुपयती [य स्थाने प; त स्थाने न] |
| प्रियनयस्य (६,३२) | प्रियनयनस्य [न अक्षरच्युतिः] |
| सुनविरहानलपीते चेंतता (६,३५) | सुतविरहानलपीतचेतना [त स्थाने न; ए अक्षराधिक्यम्, ना स्थाने ता, अनुस्वाराधिक्यम्] |
| कंटीरवा (१४३ पृ.) | कण्ठीरवा [ठ स्थाने ट] |
| गुण (६,४०) | गुणं [अनुस्वारच्युतिः] |
| गुर्वा (६,४१) | गुर्वी [ई स्थाने आ] |
| करीवं (६,४१) | करीव [अनुस्वाराधिक्यम्] |
| महासिंहरहा (६,४३) | महासिंहरंहा [अनुस्वारच्युतिः] |
| -रियंतोपपद्यते (१४४ पृ.) | -रियं नोपपद्यते [न स्थाने त] |
| विषदन्ति (१४४ पृ.) | विषीदन्ति [ई अक्षरच्युतिः] |
| -दत्तिशं (६,४७) | -दतिशयं [शयं स्थाने शं। त् अक्षराधिक्यम्] |
| न सुः- (६,४७) | नासु- [आ च्युतिः, विसर्गाधिक्यम्] |
| चत्रं (१४४ पृ.) | शस्त्रं [श स्थाने च; स्त्र स्थाने त्र] |
| विनिार्जितोय- (६,५०) | विनिर्जितोऽथ [थ स्थाने य] |
| तदाय (६,५०) | तदाप [प स्थाने य] |
| शूरयमाणः (१४६ पृ.) | शूरायमाणः [आ मात्राच्युतिः] |
| चमूयते (६,६३) | चमूपते [प स्थाने य] |
| रणेतिसक्रियां (६,६४) | रणे रसक्रियां [ति अक्षराधिक्यम्] |
| -माश्वम्य (६,६५) | -माश्वस्य [स् स्थाने म्] |
| -मन्तर्वाणोन् (६,६५) | -मन्तर्वाणीन् [ई स्थाने ओ] |
| खेव- (१४८ पृ.) | खेट [ट स्थाने व] |
| नयचैष्म (१४८ पृ.) | व्यचैष्म [व्य स्थाने नय] |
| कपि (१४८ पृ.) | कति [त स्थाने प] |
| -म्रेडयन्येरपुरुषोत्तमस्य (१४८ पृ.) | -म्रेडयन्नन्ये तु पुरुषोत्तमस्य [न- च्युतिः, र अधिक्यम्] |
| निनदेनोत्म्रेणीपीवरदृ- (६,७६) | निनदेनोत्प्रेषणी पीवरट्टक् [ष च्युति, क् च्युतिः] |
| -मापिय्य (६,७७) | -माप्याय्य ['प्या' अक्षरच्युतिः] |
| -रिन्दिवदिराणां (६,८०) | -रिन्दीवराणां [दि-इत्यधिकः पाठः ई स्थाने इ] |
| सुरभितां वलवीटिक़ाः (१५० पृ.) | सुरभिताम्बूलवीटिकाः [बू स्थाने व] |
| रविरिवाश्रुते (६,९४) | रविरिवाश्नुते [न स्थाने र] |
| वो (६,९६) | वा [आ स्थाने ओ] |
| युष्मन् (६,१००) | मुष्णन् [मु स्थाने यु; ण स्थाने म] |

| मातृकाधृतपाठः | संशोधितः पाठः |
|---|---|
| आर्षभवता (१५२ पृ.) | अत्रभवता [अत्र स्थाने आर्ष] |
| तन (६,१०५) | तेन [ते स्थाने त] |
| चतुष्ठयी (६,१०७) | चतुष्टयी [ट स्थाने ठ] |
| सयत्नान्षडः (६,१०८) | सपत्नान् षड् [य स्थाने प, ड् स्थाने डः] |
| पाति (६,११८) | याति [या स्थाने पा] |
| समूलकाष (६,१२०) | समूलकाषं [अनुस्वारहानिः] |
| भवत- (६,१२१) | भवन्त- [न् च्युतिः] |
| जनाधियम् (६,१२२) | जनाधिपम् [प स्थाने य] |
| विश्वग्रङ् (६,१२३) | विश्वद्र्यङ् [द्र्य स्थाने ग्र ] |
| प्रकाश्तो (६,१२६) | प्रकाशितः [शि स्थाने श्, ओ- आधिक्यम्] |
| प्रकृतेरपाथरयु- (१५५ पृ.) | प्रकृतेरयाप्यरिपु- [या स्थाने पा, प्य स्थाने थ, इकारच्युतिः] |
| मुकुदः (६,१२७) | मुकुन्दः [न् च्युतिः] |
| -धियाऽर्भवस्ते (६,१३१) | धियाऽभवंस्ते [रेफाधिक्यम्, अनुस्वारच्युतिः] |
| मनोजमूनो (६,१३४) | मनोजसूनोर्- [ सू स्थाने मू, र् च्युतिः] |
| -वस्वोकसारा- (१५६ पृ.) | वस्वेकसारा- [ए स्थाने ओ] |
| परिवृत्ते (१५६ पृ.) | परिवृते [त् आधिक्यम्] |
| पेटु- (६,१३८) | पेठु- [ठ स्थानो ट] |
| दिक्यालैरालुलोलैरालुलोके (१४१) | दिक्पालैरालुलोके [पा स्थाने या, 'रालुलोलै' अधिकः पाठः] |
| देवोज्ज्वलजातरूप- (६,१४२) | द्रेकेवोज्ज्वल- [द्रेके-स्थाने दे] |
| कुंडलाद्यं (६,१४४) | कुण्डलाढ्यं [ढ्य स्थाने द्य] |
| -मतकाशिकी- (१५७ पृ.) | मत्तकाशिनी [त् च्युतिः, न स्थाने क] |
| -मदो (६,१४८) | महो [ह स्थाने द] |
| -मचतु (६,१४९) | -मञ्चतु [ञ् च्युतिः] |
| कीर्ति (६,१५०) | कीर्तिं [अनुस्वारच्युतिः] |
| -वशवशस्त्रिलोकीम् (६,१५१) | -वशस्त्रिलोकीम् [वश-आधिक्यम्] |
| श्वेतद्वीपमयेतगौरिममदं (६,१६४) | श्वेतद्वीपमपेतगौरिभमदं [प स्थाने य; भ स्थाने म] |
| त्वदीय सुमशोभिरावृतम् (६,१६५) | त्वदीयसुयशोभिरावृतम् [य स्थाने म] |
| विन्दति (६,१६५) | विदन्ति [वर्णविपर्ययः] |
| लोचने गोचरे (६,१७३) | लौचनगोचरे [ए-आधिक्यम् असमस्तत्वं च] |
| शतेसुतेषु (६,१७९) | शते सुतेषु [पदच्छेदे सन्देहः] |
| तोपित- (६,१८०) | तोषित- [ष स्थाने प] |
| भवभवान्यौः (१६२ पृ.) | भवभवान्योः [ओ स्थाने औ] |
| -माधिप्रत्य- (१६२ पृ.) | -माधिपत्य- [र आधिक्यम्] |
| धाटी (६,१८१) | धाटीं [अनुस्वारविच्युतिः] |
| -पठेषु (६,५) | -पट्टेषु [ट्ट स्थाने ठ] |

| **मातृकाधृतपाठः** | **संशोधितः पाठः** |
|---|---|
| -यत्रोपमाघ (६,१८१) | पत्रोपमाम् [प स्थाने य, म् स्थाने घ] |
| -रासंसमाने (६,१८२) | -राशंसमाने [श स्थाने स] |
| किंतुत्वयादतस्य (१६२ पृ.) | किन्तु तस्य [त्वयाद इत्यधिकः पाठः] |
| स्थापुक (१६२ पृ.) | स्थायुक [य स्थाने प] |
| मदस्त्वेषां < | मदं त्वेषां (६,१८५) [नकार स्थाने सकारः] |
| सुकृतसहस्रोपनतप्रयीश्वरस्य > | < सुकृतसहस्रोपनतमीश्वरस्य [प्र-अधिकः १६३ पृ.] |
| चिरतनो | चिरन्तनो [नकारलोपः १६३ पृ.] |
| विषस्मवदनः | विस्मयवदनः [षकारोऽधिकः, यकारलोपः १६३ पृ.] |
| कतिनकल्पना | कतिचन कल्पना [चलोपः १६३ पृ.] |
| नोपतिष्टेत् | नोपतिष्ठेत् [ठकारस्य स्थाने टकारः १६४ पृ.] |
| पानगोष्टीमध्यतिष्टत् | पानगोष्ठीमध्यतिष्ठत् [ठकारस्य स्थाने टकारः १६४ पृ.] |
| च्चुयत्करोटि | च्चुर्यत्करोटिक्षणात् (६,१८७) |
| शरोरनिरुद्ध | शरेणानिरुद्ध [मात्राविपर्ययः १६५ पृ.] |
| शरोनिरुद्ध- (१६५ पृ.) | शरेणानिरुद्ध [विच्युतः पाठः] |
| अतानि चोदीक्ष्यनु- (६,२१०) | अतानि चोदैक्ष्यनु- [ऐकार स्थाने इकारः] |
| तद्गोपिका यादृशम् (६,२११) | तद्गोपिकाया दृशम् [पदच्छेदः] |
| सुभटसहत्सलानुजीविबन्धुः (७,४) | सुभटसुहृद्वत्सलानुजीविबन्धुः [द्व- च्युतिः] |
| अभिहरि सद्मनीकपे- (७,७) | अभिहरिसद्मनीकपै- [लिपिभ्रान्तिः] |
| शालंजिकामनोहरं (१७१ पृ.) | शालभञ्जिकामनोहरं [भच्युतिः] |
| दीर्घिकेन (७,३८) | दीर्घिकेव [व स्थाने नकारः] |

अवशिष्टाः पादटिप्पणीषु विलोकनीयाः



## अनिरुद्धचम्पूकाव्यस्य
# श्लोकपादानुक्रमणिका

●

# श्रीश्रीवागीश-वाङ्मय-परिचयः

| शब्दशास्त्रम् | | मूल्यम् |
|---|---|---|
| १. | पाणिनीय-धातुपाठ-समीक्षा १९६५, (१९९६) भागद्वये | २१५.०० |
| २. | तद्धितान्ताः केचन शब्दाः (१९६७) | २५.०० |
| ३. | धात्वर्थविज्ञानम् (१९८०) | ३१.०० |
| ४. | जिप्सी-भाषा (१९८६) पुनर्मुद्रणाधीन | ५०.०० |
| ५. | संस्कृत-वाङ्मय-मन्थनम् (१९९०) | ३३३.०० |
| ६. | संस्कृत भाषा सीखने की सरल और वैज्ञानिक विधि (१९९२) | १००.०० |
| ७. | Vāgyoga : Conversational Sanskrit (२०००) | १५०.०० |
| ८. | Vāgyoga : Mnemonic Sanskrit (२०००) | ३००.०० |
| ९. | शब्दनिर्वचन और शब्दार्थ (२००४) | ३००.०० |
| १०. | Gypsy language & Grammar (२००४) | ३००.०० |
| ११. | उपसाहित्यम् (सरलव्याकरणम्) | १५.०० |
| **अध्यात्म** | | |
| १२. | योगचूडामण्युपनिषद् (१९९४) | १००.०० |
| १३. | Shakti, Shiva & Yoga (२०००) | ३००.०० |
| १४. | पराचेतना की यात्रा (२०००) | १५०.०० |
| १५. | संवित्प्रकाशः (वैष्णवतन्त्रम्) (१९९३) | १०.०० |
| १६. | Vāgyoga : Kuṇḍalinī Meditation (२००१) | ३००.०० |
| १७. | जागतिक प्रेम और शाश्वत आनन्द (२००५) | ३००.०० |
| १८. | श्रीवाग्योगतन्त्रम् (अपरनाम श्रीकुण्डलिनीतन्त्रम्) २०१० | ३००.०० |
| १९. | स्विट्जरलैंड में वाग्योग-तन्त्र (२०१०) | ३००.०० |
| **काव्य एवं समालोचना** | | |
| २०. | कृषकाणां नागपाशः (रेडियोरूपकम्) (१९५८) | १०.०० |
| २१. | कथा-संवर्तिका (१९५९) | १५.०० |
| २२. | टालस्टाय-कथासप्तकम् (१९७०) | २५.०० |
| २३. | नर्मसप्तशती (हास्यव्यङ्ग्यप्रधानकृतिः) भाषात्रये १९८४ | ७५.०० |
| २४. | आतङ्कवादशतकम् (१९९२) भाषात्रये | ६०.०० |
| २५. | शाश्वत काव्य की आत्मा (२०००) | १५०.०० |
| २६. | Humour in Ancient India (२००४) | १००.०० |
| २७. | अनिरुद्धचम्पूकाव्यम् - देवराज शर्मा | निर्धारणीयम् |

| | | मूल्यम् |
|---|---|---|
| **इतिहास-पुराण-संस्कृति-कला** | | |
| २८. | बुन्देलखण्ड की प्राचीनता (१९६५) प्रकाशनाधीन (द्वितीयं संस्करणम्) | |
| २९. | भारत में संस्कृत की अनिवार्यता क्यों? (१९७७, द्वि०सं० १९९९) | ४०.०० |
| ३०. | वामनपुराण-विषयानुक्रम-कोशः (१९९६) | ५००.०० |
| ३१. | अनुसन्धानपद्धतिः (१९६८) प्रकाशनाधीना (द्वि०सं०) | १५०.०० |
| ३२. | नदिया एक घाट बहुतेरे (२००१) राष्ट्रीय चिन्तन (आर्यों का भारत से बहिर्गमन) | १५०.०० |
| ३३. | सम्पादन और अनुवाद के सिद्धान्त (१९८०) | ५.०० |
| ३४. | महाकुम्भ एवं संगमस्नान : वैज्ञानिक विवेचन (१९९८) | ८.०० |
| ३५. | श्रीगङ्गास्तवनचयनिका (१९८२) प्रकाशनाधीना (द्वि०सं०) | |
| ३६. | श्रीशिवस्तवनचयनिका (१९८३) प्रकाशनाधीना (द्वि०सं०) | |
| ३७. | आचार्य डॉ० वागीश शास्त्री (२००३) | ७०.०० |
| ३८. | आचार्य डॉ० बी०पी०टी० वागीश शास्त्री (२००२) | १०.०० |
| ३९. | Autobiography of the Vāgyogī (२००२) सचित्र | ३००.०० |
| ४०. | एक सनातनी जर्मनी में अड़सठ दिन (२००३) सचित्र | ५०.०० |
| ४१. | रहस्यमय अनुभूतियों की आत्मकथा (२००८) सचित्र | ३००.०० |
| ४२. | Sanskrit enhanced knowledge of the west (२००९) | २००.०० |
| ४३. | Sanskrit through Natural Law | ३००.०० |
| ४४. | Why Sanskrit | २००.०० |

●

## आगामी प्रकाशन

१. Bundeli Dictionary (An etymological dictionary of Bundeli language)

२. शब्दपारायणं नाम धातुनिर्भरशब्दकोशः (An ocean of Sanskrit words based on verbs)

३. The Heart of Bhagavadgītā

४. A Dictionary of Sanskrit and Parallel Indo-European languages.

५. Colloquial Sanskrit English Dictionary

६. प्राचीन भारत की शिक्षा प्रणाली

७. शब्द-कौस्तुभ with commentary of नागेश भट्ट

८. शत्रुशल्यचरितम् (महाकाव्यम्)

९. Prākrit Sanskrit & Sanskrit Prākrit Dictionary
१०. आचार्य वागीश शास्त्री : व्यक्तित्व एवं कृतित्व
११. देशीनाममाला-परिशिष्टम्
१२. वाग्योग : कुण्डलिनी ध्यान
१३. Oṁ Tat Sat
१४. पर्यावरण शुद्धि और श्रीगङ्गा
१५. Gaṅgā & Ecology
१६. कुब्जिकातन्त्रम्
१७. श्रीवीरभद्रमहातन्त्रम्
१८. हनूमद्दीपदानविधिः
१९. अनुसन्धान-सम्पादन-प्रविधिः
२०. वाग्योग : शब्दरूपावली
२१. वाग्योग : संस्कृतधातुपाठ
२२. संस्कृत सीखने की सरल और वैज्ञानिक विधि (द्वितीय भाग)
२३. संज्ञाक्रियापदसांकर्यव्याक्रिया
२४. वागीशदैनन्दिनी
२५. स्मृति के झरोखों से
२६. पत्रयात्रा
२७. दीक्षायात्रा
२८. A Critique on Dhatupatha
२९. भगवद्गीता के परिप्रेक्ष्य में समग्र व्यक्तित्व विकास
३०. भारतीय भाषाओं के विश्लेषण में पाणिनीय व्याकरण की भूमिका
३१. मृत्यु से अमरता की ओर.

●

